आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८९

श्रीमाणिक्यचन्द्रविरचितसंकेतसमेतः

# काव्यप्रकाशः ।

एतत्पुस्तकम्

महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिभिः

संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४३

खिस्ताब्दाः १९२१



मूल्यं सपादरूपकत्रयम् ( ३।। ) ।

# विज्ञप्तिः

इह खलु जगति साहित्यशास्त्रीयनिबन्धानां मध्ये वाग्देवतावतारश्रीमन्मम्मटभट्टप्रणीतः काव्यप्रकाशाभिधः प्रकरणग्रन्थः सर्वानन्यानतिशेत इति प्रसिद्धम्। तदुक्तिश्चातिविमूढाशयेति तदाशयं कुशाग्रधिषणः सहृदय एव वेदितुं प्रभवति। अमुं च सर्वमान्यं निबन्धं व्याख्यातुं चत्वारिंशतोऽप्यधिकाष्टीकाकाराः प्रावर्तन्त। एतादृशी च बहूनां प्रवृत्तिर्नान्यं कंचन निबन्धं साहित्यशास्त्रीयं वा शास्त्रान्तरीयं वा व्याख्यातु संप्रदृश्यत इत्येतावतैवास्य निबन्धस्य निरतिशयं महत्त्वमनुमातुं शक्यते सामान्यतः सर्वैरपि। प्रेक्षावतां त्वयमनुमितोऽर्थः साक्षात्कृतिपथमवतरतीति निर्विवादमेव।

किंचास्यान्यैर्निबन्धकारैराकरत्वेन कृतं संप्रधारणमप्यमुमेवार्थं दृढी करोति। अपि चापरमत्रावश्यं निर्देष्टव्यं भवति, यत्प्रायो ग्रन्थकारा लोकानामर्थावबोधाय तदानीं प्रचलितभाषया प्रेक्षावतामधिकारानुगुण्येन ग्रन्थान्विरचयन्ति। अनन्तरं तु कालगत्या भाषापरिपाटीविपर्यये लोकानां बुद्धिदौर्बल्ये च स एव ग्रन्थो दुर्बोधतां गच्छति। तथाविधे च तस्मिन्प्रेक्षावतां सौलभ्येनार्थावबोधाय टीकाकाराणां प्रवृत्तिर्दृश्यते। अत्र तु सद्य एव टीकाकाराणां प्रवृत्तिरित्यतोऽहमित्थं संभावये—मम्मटश्च शालिवाहनशकीयैकादशशतके काव्यप्रकाशाख्यं प्रकरणग्रन्थं विरचितवान्। तस्मिन्नेव च शतके टीकाकाराणां प्रवृत्तिरभूत्। अत्र कारणं च न भाषापरिपाटीविपर्ययं मन्ये, किंतु मम्मटस्य संक्षिप्तोक्तिरर्थगौरवं च।

ये च तस्मिन्नेव शतके द्वित्राष्टीकाकाराः प्रावर्तन्त तेषु प्रथमोऽयं संकेतकृदाचार्यमाणिक्यचन्द्रसूरिः। अस्य त्वीदृशी मतिरासीद्यन्मम्मटहृदयमहमेव जानामीति। यतोऽनेन प्रत्युल्लासारम्भे तादृशार्थसूचकं पद्यं निर्दिष्टम्। नवमोल्लासारम्भे च स्वकृतसंकेतस्य 'लोकोत्तरोऽयं संकेतः' इति लोकोत्तरत्वं निर्दिष्टम्। सहृदयाश्च प्रेक्षावन्तो नैतां गर्वोक्तिं मन्येरन्।

सोऽयं काव्यप्रकाशस्येतरसकलटीकाग्रन्थाग्रणीर्लोकोत्तरः संकेतः, अतीवप्राचीनानि द्वित्राणि तत्पुस्तकानि हस्तलिखितानि महता प्रयत्नेन संपाद्य संशोध्य चाऽऽनन्दाश्रममुद्रणालये सीसकाक्षरैः पुष्टचिक्कणपत्रेषु मुद्रितः। अयं च संकेतग्रन्थोऽद्यावधि नान्यत्र क्वापि मुद्रित इति काव्यप्रकाशार्थरहस्यं जिज्ञासुभिरवश्यमेव संग्राह्य इति।

अयं चाऽऽचार्यमाणिक्यचन्द्रः श्रीमन्नृपविक्रमार्कसमयात्षोडशाधिकद्वादशशती-तीमिते ( १२१६ ) ( शके १०८१ ) संवत्सरेऽमुं संकेतं विरचितवान् । अनेन चान्यस्य टीकाकारस्य न क्वापि नाम निर्दिष्टम्, तेन मन्ये प्रथमोऽयमिति शमिति—

महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिणः ।



ॐ तत्सद्ब्रह्मणे नमः ।

# श्रीमन्मम्मटभट्टविरचितः
# काव्यप्रकाशः ।

## आचार्यश्रीमाणिक्यचन्द्रविरचितसंकेतसमेतः ।

प्रथमोल्लासः ।

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

## अथ संकेतः प्रारभ्यते ।

सर्वज्ञवदनाम्भोजविलासकलहंसिकाम् ।
विशुद्धपक्षद्वितयां देवीं वाचमुपास्महे ॥ १ ॥
नानाग्रन्थचतुष्पथेषु निभृतीभूयोच्चयं कुर्वता
मात्रैरर्थकणैः कियद्भिरभितः प्रज्ञर्धिशून्यात्मना ।
सर्वालंकृतिभालभूषणमणौ काव्यप्रकाशे मया
वैधेयेन विधीयते कथमहो संकेतकृत्साहसम् ॥ २ ॥
न प्राग्ग्रन्थकृतां यशोधिगतये नापि ज्ञताख्यातये
स्फूर्जद्बुद्धिजुषां न चापि विदुषां सत्प्रीतिविस्फीतये ॥
प्रक्रान्तोऽयमुपक्रमः खलु मया किं तर्हि गम्यक्रम
स्वस्यानुस्मृतये जडोपकृतये चेतोविनोदाय च ॥ ३ ॥

समुचितेति । इह खलु लोके त्रिविधा देवता समुचिता, इष्टा, समुचितेष्टा च । क्वचित्समुचितायाः स्तुतिर्यथा—नीतिकामशास्त्राद्यारम्भे महीपतिमन्मथादेः स्तुतिः । क्वचिदिष्टाया रघुकाव्यारम्भे महेश्वरगौर्योः । क्वचित्समुचितेष्टाया यथाऽत्रैव । तथाहि—यत्किल काव्यालंकारलक्षणं वस्तु प्रक्रान्तं तदधिदैवतरूपा भारती समस्तमतसंमता । तदुक्तम्—

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥

नियतिशक्त्या नियतरूपा, सुखदुःखमोहस्वभावा, परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा, षड्रसा, न च हृद्यैव तैः,

---

स्तुत्यं तन्नास्ति नूनं जगति न जनता यत्र बाधां विदध्या–
दन्योन्यस्पर्धिनोऽपि त्वयि तु नुतिविधौ वादिनो निर्विवादाः ।
यत्तच्चित्र न किंचित्स्फुरति मतिमतां मानसे विश्वमात–
र्ब्राह्मि त्वं येन धत्से सकलजनमयं रूपमर्हन्मुखस्था ॥

अतस्तां ग्रन्थकारः परामृशति लोकोत्तरचमत्कारकार्यविशेषशालित्वेन विमृशति । न तु ध्यायतीति। चिन्तामात्रस्याप्रतीतेः । समुचिता समवेता, इष्टा देवता यस्यां परायामिति समासे परामृशतीत्यत्र परामिति पदच्छेद इत्यपि व्याख्यातत्त्वं स्वयमूहनीयम् । नियतीत्यादि । नियतिः सर्वपदार्थानां निजनिजसंस्थानमानवर्णादिव्यवस्था नियमहेतुर्दैवपर्यायान्तरम् । पञ्चभूतपञ्चकर्मेन्द्रियपञ्चज्ञानेन्द्रियपञ्चविषयतत्त्वादिशिवतत्त्वपर्यन्तशैवशास्त्रोक्तषट्त्रिंशत्तत्त्वमध्योक्तं तत्त्वान्तरम् । तत्कृतेन नियमेन रहितां ताम् । यतोऽस्यां चेतना अपि भावाः कविना निबध्यमाना अचेतनवदचेतना अपि चेतनवत्प्रतिभासन्ते । एकः प्रकृतो यस्यामिति तत्प्रकृतवचने मयट् । ततो ह्लादैनकमयी सा तथा । अनन्यपरतन्त्रामिति । इयं तावन्निर्मितिः पारतन्त्र्येऽपि किं सर्वस्यापि परतन्त्रा, नेत्याह— अनन्येति । कवेरपेक्षयाऽन्यशब्दनिर्देशात्ततो नान्येषामन्यैर्वा परतन्त्रा सा तथा । कवेरेव कविनैव वा परतन्त्रेत्यर्थः । नन्वनन्यतन्त्रेत्येतावतैव स्वार्थसिद्धेः परशब्दोऽपुष्टार्थ इति चेद्व्याख्यान्तरं क्रियते । तन्त्रशब्दो भावसाधनस्ततो नान्यपरोऽन्यनिष्ठस्तन्त्रोऽधीनत्वं व्युत्पादनं वा यस्याः सा तथा । नवरसा चासौ रुचिरा चेति विग्रहः कार्यः । न तु पुनर्नवसंख्योपलक्षितै रसै रुचिरेति । तथा सति ब्राह्मीनिर्मितेर्वचनगुम्फस्वभावायाः सकाशाद्ब्रह्मनिर्मितेः संख्ययैव हीनत्वमभिमतं स्यात् । तदा ग्रन्थकृत्षड्रसा न च हृद्यैव तैरिति व्याख्यां न कुर्यात् । तथा भारती चिद्रूपाधिष्ठातृभारतीदेव्या सहाभेदाध्यवसाये समुचितेष्टदेवता भवति। कविरेव ब्रह्मेति श्लिष्टशब्दहेतुकं रूपकम् ।

तादृशी ब्रह्मणो निर्मितिर्निर्माणम् । एतद्विलक्षणा तु कविवाङ्निर्मितिः । अत एव जयति । जयत्यर्थेन च नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ।

इहाभिधेयं सप्रयोजनमित्याह—

---

एवं सति वाक्सृष्टिर्ब्रह्मसृष्टेरधिका कविश्च ब्रह्मणोऽधिक इति । एतद्विलक्षणेति । विलक्षणा विसदृशी यदि वा विशिष्टलक्षणा चारुस्वरूपा । वाङ्निर्मितिरिति । वक्तीति वाक्शब्दः । उच्यत इति वागर्थः । उच्यतेऽनयेति वागभिधाव्यापारः । सर्वत्र निपातनाच्छब्दसिद्धिः । तेषां निर्मितिर्जयति सर्वोत्कर्षेण वर्तते । सर्वोत्कर्षवर्तित्वं च विश्वव्यापिब्रह्मनिर्मितिजयेनेति । अत एवाकर्मकः । नियतोत्कर्षे तु सकर्मकोऽयं यथा शत्रुं जयति । यस्याश्च सर्वोत्कृष्टत्वेन वर्तनं तां को न प्रणमतीत्यर्थाद्वक्तुः प्रणतिरुक्तैवेत्याह—जयत्यर्थेति । अयमभिप्रायः—यो हि सर्वोत्कर्षेण जयी स सर्वैरपि नमस्य इति जयतिनमस्यतिक्रिययोरविनाभावः । अत एवाऽऽक्षिप्यत इत्युक्तम् । लोकरूढ्याऽपि जयतिक्रियया नमस्कार आक्षिप्यमाणो दृश्यते । तथाहि—जनकादयः शिशून् शिक्षयन्ति । यथा देवानां जयेति कुरु । नमस्कारं कुर्वित्यर्थः । कविब्रह्मब्राह्मीनिर्मितेर्ब्रह्मनिर्मितेः सकाशात्स्वरूपप्रयोजनकारणाविशेषप्रतिपादकेन नियतीत्यादिविशेषणचतुष्टयेनाऽऽधिक्ये नियतीत्यादेरुपमेयोत्कर्षहेतोरुक्त्या समाक्षिप्ते चोपमानोपमेयभावे व्यतिरेकालंकारो व्यङ्ग्यः । ननु व्यङ्ग्यस्य प्राधान्यादलंकार्यता स्यान्नालंकारता । तत्कथं व्यङ्ग्यस्यालंकारतोक्ता । सत्यम् । अलंकार्यस्यापि ब्राह्मणश्रमणन्यायेनालंकारतेति । कविब्राह्मीप्रभावख्यापनेऽतीव ग्रन्थकृतो रत्यलक्ष्यक्रमस्थायिभावोऽत्र काव्ये व्यङ्ग्यः ।

काव्यस्य कारणस्वरूपविशेषानन्तरं प्रक्रममाणत्वेन फलस्यावाच्यत्वे यत्तत्प्रागुक्त तत्ताच्छिष्योन्मुख्यार्थम् । ते हि ज्ञातफलास्तल्लिप्सवः कारणादिज्ञानायोत्सहन्ते । अन्यथा त्वस्य कीदृक्फलं भावीति संदिहानाः क्लेशभीरुत्वेन पूर्वं कारणादिषु नोत्सहेरन्नित्याह—इहाभिधेयमिति । दोषपरिहारेण सगुणं सालंकारं काव्यमभिधेयम् । शास्त्रमभिधायकम् । तयोरभिधानाभिधेयलक्षणः संबन्धः ।

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥ २ ॥

कालिदासादीनामिव यशः श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानमादित्यादेर्मयूरादीनामिवानर्थनिवारणं सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं प्रभुसंमितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्संमितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तर-

---

प्रयोजनं च सर्वत्रापि प्रवृत्त्यङ्गम् । यतो न प्रेक्षापूर्वकारिणो निष्प्रयोजनाः प्रवर्तन्ते । तदपि दृष्टादृष्टत्वाद्द्विविधमित्याह—काव्यमिति । प्रभुसंमितेति । शब्दपरावृत्त्यसहत्वेन शब्दप्रधानेभ्यः । वेदादीति । आदिशब्दान्मानवधर्मचिकित्सादिपरिग्रहः । सुहृत्संमितेति । अस्येदं वृत्तमस्मात्कर्मण इत्येवं युक्तियुक्तकर्मफलसंबन्धप्रकटनकारित्वादर्थप्रधानेभ्यः । पुराणेतिहासादीनां लक्षणमन्यतो ज्ञेयम् । केचित्पुराणस्य शब्दप्रधानत्वमाहुः । तदुक्तम्—

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥ इति ॥

एतत्पक्षाश्रयणे पुराणादीतिहासेभ्य इत्यादिशब्दोऽवयवार्थस्तत्पुरुषवृत्त्या व्याख्येयः । ततः पुराणस्य शब्दप्राधान्यम् । इत्थं व्याख्याने तदवयवानामितिहासानामर्थप्राधान्यं सिद्धम् । पुराणावयवविशेषणविशिष्टेतिहासज्ञापनेन च वृत्तकल्पितेतिहासानां नार्थप्राधान्यम् । इत्थं व्याख्याने चाऽऽदिशब्दस्याऽस्थानपतितत्वं परिहृतम् । अन्यथा पुराणेतिहासादीति ब्रूयात् । रसाङ्गेति । रसस्याङ्गिनोऽङ्गभूतो यो व्यापारस्तत्परतया विलक्षणम् । शब्दार्थयोर्गुणभावेन काव्यं पूर्वेभ्यो विलक्षणं विसदृशम् । रसाङ्गभूतव्यापारप्रवणतया च विलक्षणं विशिष्टलक्षणं चारुस्वरूपमिति रहस्यम् । यदाह भट्टनायकः—

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् । इति ।

ननु व्यञ्जनव्यापारस्य विश्रान्तिधर्मत्वाभावेन वाक्यार्थत्वाभावाद्विषयमुखेण च स्वात्मलाभात्तत्प्राधान्येन प्राधान्यात्स्वरूपेण विचार-

वर्णनानिपुणकविकर्म तत्कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम् ।

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

शक्तिः कवित्वबीजरूपः संस्कारविशेषः कश्चित् । यां विना काव्यं न प्रसरेत् । प्रसृतं वोपहसनीयं स्यात् । लोकस्य स्थावरजङ्गमात्मकलोकवृत्तस्य शास्त्राणां छन्दोव्याकरणाभिधानको-

---

क्षमत्वाद्गुणालंकारोपकर्तव्यस्य व्यङ्ग्यनाम्नो विषयस्यैव काव्ये प्राधान्यं न व्यापारस्य । तत्कथं व्यापारप्राधान्ये काव्यगीरित्युक्तम् । उच्यते—भट्टनायकाभिप्रायेण प्रयोजनविशेषवशादित्थमूचे न स्वाभिप्रायेण । अग्रे स्वयमेव काव्ये व्यङ्ग्यप्राधान्यस्य प्रतिपादयिष्यमाणत्वात् । वर्णनानिपुणेति । तथा चोक्तं काव्यकौतुके—

प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता ।
तदनुप्राणनाज्जीवद्वर्णनानिपुणः कविः ॥

तस्य कर्म काव्यमिति । यथायोगमिति । यशः कवेरेव न सहृदयस्य । ननु कवेः कथं रसास्वादः संपद्यते । यतस्तस्य काव्यार्थचिन्तनपरस्य सर्वदैव दुःखमग्नत्वात् । तदुक्तम्—

कविरेव हि जानाति कवेः काव्यपरिश्रमम् । इति ।

न । तस्यापि भावकत्वलक्षणद्वितीयावस्थायां रसास्वादः संपद्यत एव । प्रथमं कारकत्वावस्थायां भवतु वा दुःखम् । परमार्थतः कविर्भावकावस्थायां सहृदय एवेति प्रीतिः सहृदयस्यैव । भूतपूर्वकस्तद्वदुपचार इति न्यायात्तु कवेरुपचर्यत इति सर्वं सुस्थम् ।

एवं काव्यप्रयोजनान्युक्त्वा तदङ्गान्याह—शक्तिरिति । संस्कारेति । वर्ण्यपदार्थविषयनवनवोल्लेखशालिनी प्रतिभा संस्कारः । तल्लक्षणो विशेषः । यदुक्तम्–प्रतिभाऽस्य हेतुः । यदि च तस्य विशेषो रसावेशचारुकाव्यकरणक्षमत्वम् । प्रधानकारणत्वादस्याः प्राङ्निर्देशः । न प्रसरेत् । न निष्पद्येत । लोकस्येति । तात्स्थ्योपचाराल्लोकवृत्तस्य । प्रधानमङ्गमदः । तत्प्रतिपादनपरत्वात्काव्यस्य । छन्दोव्याकरणेति । एतेषां

शकलाचतुर्वर्गगजतुरगखड्गादिलक्षणग्रन्थानां काव्यानां च महाकविसंबन्धिनाम्, आदिग्रहणादितिहासादीनां च। विमर्शनाद्व्युत्पत्तिः। काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः समुदिताः, न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न तु हेतवः।

एवमस्य कारणमुक्त्वा स्वरूपमाह—

**तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि।**

दोषगुणालंकारा वक्ष्यन्ते। क्वापीत्यनेनैतदाह—यत्सर्वत्र सालंकारौ। क्वचित्तु स्फुटालंकारविरहेऽपि न काव्यत्वहानिः। यथा—

---

पूर्वपूर्वप्रधानता काव्यबन्धेष्वपेक्षणीयत्वात्। व्युत्पत्तिरिति। सकलपदार्थपौर्वापर्यपर्यालोचनकौशलम्। उपदेशेनेति। नदीजलाशयाद्रिप्रभृतिषु सामान्येष्वप्यसत्पद्महंसरत्नादिवर्णनमुपदेशः। करणे योजने चेति। विशकलितरूपे प्रबन्धादीनां गुम्फरूपे च यदि वा काव्यं कर्तुं जानन्ति ये तदुपदेशेन करणे निष्पादने च ये काव्यं विचारयितुं जानन्ति तदुपदेशेन योजने विचारणे। उद्भव इति। उद्भवनमुद्भव इति व्युत्पत्त्या निर्माण उत्कृष्टं भवनमिति व्युत्पत्त्या समुल्लास इति।

तदिति। काव्यम्। शब्दार्थौ मिलितौ जातिव्यक्तिवदन्योन्याव्यभिचारित्वेन। एतेन शब्दार्थयोर्भेदवादिनः प्रत्युक्ताः। तैर्ह्युक्तं मुखे शब्दमुपलभामहे भूमावर्थमिति। एतेन कविनिर्मितकमनीयतातिशायिनोः शब्दार्थयोः प्रत्येकं काव्यत्वमिति पक्षद्वयमपि निराकृतम्। यतो द्वयोराह्लादकारित्वं न तु प्रत्येकम्। द्विवचनेन च शब्दार्थजातिद्वित्वमभिधीयते। व्यक्तिद्वित्वाभिधाने त्वेकपदस्थयोरपि काव्यत्वं स्यात्। सगुणाविति शाटिकवाक्यानां काव्यत्वं निरस्तम्। दोषगुणेति। श्रुतिकटुप्रभृतयो नित्या दोषा माधुर्यादयो नित्या गुणा रसस्यापकर्षोत्कर्षहेतवः। ते चान्वयव्यतिरेकानुविधानाद्रसाश्रयास्तद्धर्माश्च। भक्त्या तु तदुपकारिणोः शब्दार्थयोः। एवमलंकारा अपि। एतदग्रे विस्तरेण व्याख्यास्यते। अनलंकृती इत्यत्र नञोऽल्पार्थकतया क्वाप्यस्फुटालंकृती इति ज्ञेयम्। न तु सर्वथा निरलंकृती। निर्दोषसगुणकाव्यस्यालंकारतामात्राव्यभिचारात्। अत एव स्फुटालंकारविरहेऽपीति ब्रूयात्। विरहशब्दोऽपि सर्वथा नाभावं सूचयति। तस्य हि संयोगाङ्के सद्भावात्। न काव्यत्वहानिरिति। अत्र कवेः कर्म काव्यं तस्य भावः काव्यत्वमिति

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथाऽपि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ १ ॥

अत्र स्फुटो न कश्चिदलंकारः । रसस्य च प्राधान्यान्नालंकारता ।

तद्भेदान्क्रमेणाऽऽह–

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥ ४ ॥**

---

व्युत्पत्तिः । यदि वा 'कवृ वर्णे' इत्यस्य धातोः कव्यते काव्यं तस्य भावः काव्यत्वमिति व्युत्पत्तिः । यः कौमारहर इति । अत्र रेवारोधसि यद्वेतसीतरुतलं तत्र यः पूर्वं सुरतविधिस्तत्र चेतः समुत्कण्ठत इति संबन्धः । सुरभिकदम्बानिलोक्तिबलादर्कगताचित्रायां भवाश्चैत्र्यस्ताश्च ताः क्षपाश्चेति विग्रहः । यदि तु चैत्रस्य वसन्तस्य क्षपा इत्यर्थस्तदोत्कर्षेण मीलिता विकासरहिता या मालत्यस्ताभिः सुरभयः सुभगाः । तासामविकासे हि कदम्बोत्कर्ष इति व्याख्येयम् । यद्वोन्मीलितमालतीवत्सुरभय इति व्याख्यानम् । तथा यः कौमारहरः स एव हि वर इत्याद्यनुत्कण्ठाकारणसंभवेऽप्यनुत्कण्ठालक्षणकार्यस्यानुत्पत्तौ विशेषोक्तिरलंकारः । सा च फलस्यानुत्पत्तिश्चेतः समुत्कण्ठत इति विरुद्धफलोत्पत्तिमुखेनोपनिबद्धा । अत एव विशेषोक्तेरस्फुटत्वमित्याह–स्फुटो नेति । यदि तु वरादेः कारणस्य सामग्र्ये सत्यपि सुरतविधेः कार्यस्यानुत्पत्तेर्विशेषोक्तिर्व्याख्यायते तदा नास्फुटत्वं विशेषोक्तेः स्यात् । अथैकस्य वेतसीतरुतलात्मनोऽन्यस्य कस्यापि वा कारणस्य वैकल्याद्विशेषोक्तेरस्फुटत्वं व्याख्यास्यते । तदसत् । कारणसामग्र्यभावेनैव विशेषोक्तेरुत्पत्तिर्नास्तीति कस्यास्फुटत्वं कल्प्यम् । न च रसवदलंकारोऽत्र । यतो यत्र प्रधानत्वेन वाक्यार्थभूतस्यान्यार्थस्याङ्गं रसस्तत्र रसवदलंकारः । यत्र त्वङ्गी रसस्तत्र प्रधानत्वादलंकार्यो रसध्वनिरिति । तदाह–रसस्य चेति । सूक्ष्मेक्षिकया तु ता एव ते चेत्यादौ भेदेऽभेद इति रूपकातिशयोक्तिः स्फुटैवेत्युदाहरणान्तरमन्वेष्यम् । तथाऽत्रालंकारान्तरं व्याख्यान्तरं चास्तीति स्वयमूहनीयम् ।

काव्यविशेषानाह—इदमिति । वाच्यादतिशयिनि व्यङ्ग्ये वस्त्वलंकाररसरूपे उत्तमं काव्यम् । काव्यविशेषो ध्वनिः । बुधैरिति

इदमिति काव्यम् । बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य । यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥ २ ॥

---

बहुवचनेन ध्वनिव्यवहारस्यानादित्वं सूच्यते । ननु ध्वन्यते द्योत्यत इति ध्वनिर्व्यङ्ग्यम् । स च काव्यस्याऽऽत्मा । तत्कथं काव्यं ध्वनिरित्याह । आत्मात्मवतोरभेदोपचारात् । स्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्येति । श्रूयमाणस्य शब्दस्य प्राक् प्रत्येकमेव तत्तद्वर्णात्मतया स्फोटमस्फुटं व्यञ्जयतः पूर्वपूर्वविषयसंस्कारसाचिव्यात्पश्चादन्ते स्फुटं स्फोटमाभासयतः प्रयत्नभेदानुपातिनो वागवीयध्वनिरित्यर्थः । यद्यपि ध्वननमिति भावव्युत्पत्त्या ध्वनिः शब्दार्थव्यापारः । ध्वन्यत इति कर्मव्युत्पत्त्या व्यङ्ग्योऽर्थः । ध्वनतीति कर्तृव्युत्पत्त्या ध्वनिः शब्दोऽर्थो वा शब्दार्थयुगलं काव्यरूपं वा । तथाऽपि कारिकायां शब्दार्थसमुदाय एव काव्यरूपी मुख्यतया ध्वनिनाम्ना प्रख्यापितः । यथोक्तप्रकारध्वनिमयत्वात् । अन्यैरिति । आलंकारिकैः । न्यग्भावितवाच्येत्यादि । उच्यते येनार्थः स वाच्यः शब्दः । बाहुलकाण्ण्यत् । यदि वा वाचि साधुर्वाच्य उच्यते कण्ठादिभिरिति वा वाच्यः शब्दः । उच्यतेऽसाविति वाच्योऽर्थः । तौ शब्दार्थौ वाच्यौ न्यग्भावितावुपसर्जनीकृतौ येन व्यङ्ग्येनार्थेन स तथा । स चासौ व्यङ्ग्यश्च । तस्य व्यञ्जने क्षमस्य शब्दार्थयुगलस्य काव्यमिति व्यपदेश्यस्य व्यञ्जकत्वसाम्याद्ध्वनिव्यवहारः । हृदयदर्पणकृता न्यग्भावितशब्दार्थस्वरूपता व्यञ्जनव्यापारस्योचे । मम्मटेन तु व्यञ्जनव्यापारविषयस्य व्यङ्ग्यस्येति तात्पर्यार्थः । व्यङ्ग्यार्थो वस्त्वलंकाररसादिभेदात्त्रिविधोऽपि वाच्याद्दूरं भिन्नः । तथा हि—आदिमो भेदस्तावद्वाच्यादन्यः । स हि विधौ प्रतिषेधरूपः प्रतिषेधे विधिरूपश्च । तत्र प्रथमं प्रतिषेधे विधिरूपमुदाहरति—निःशेषेति । च्युतं न तु क्षालितम् । क्षालितमित्युक्ते व्यङ्ग्यार्थप्रतीतिरेव न स्यात् । वाप्यामेव क्षालनभावात् । निर्मृष्टो न तु किंचिन्मृष्टः । दूरमनञ्जने निकटे तु साञ्जने । पुलकितेति तन्वीति चोभयं विधेयम् । व्यङ्ग्यप-

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाधमपदेन व्यज्यते ।

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।**

अतादृशि वाच्यादनतिशायिनि । यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ ३ ॥

अत्र वञ्जुललतागृहे दत्तसंकेता नाऽऽगतेति व्यङ्ग्यं गुणीभूतम् । तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥ ५ ॥**

---

क्षेऽधमपदस्याधमपदसहायानां चन्दनच्यवनादीनां व्यञ्जकत्वमित्येषोऽर्थशक्तिमूलो वाक्यप्रकाश्यो ध्वनिः । तथाऽत्रैव स इव त्वं त्वमिव सोऽप्यधम इत्युपमेयोपमालंकारो व्यङ्ग्यः । विधौ निषेधरूपस्तु यथा—भम धम्मिअ इति । दस्याश्चित्संकेतस्थाने धार्मिकसंचरणान्तरायदोषात्तदवलुप्यमानपल्लवादिविच्छायीकरणाच्च त्रातुमियमुक्तिः । धार्मिकेति पुष्पाद्यर्थं युक्तं ते भ्रमणम् । विश्रब्ध इति शङ्काया अभावात् । स इति यस्त्वां सभयमकृत । तेनेति । यः प्राक् त्वया कर्णपरम्परया श्रुतः । अत्र भ्रमेति विधौ तत्र गहने सिंहोऽस्ति त्वं च शुनोऽपि बिभेषि तत्त्वया तत्र न गन्तव्यमिति निषेधः । एवमलङ्काररसादयश्च वाच्याद्भिन्ना अग्रे व्याख्यास्यन्ते । तदपेक्षयेति । नाऽऽगतेति व्यङ्ग्यस्यार्थस्य मलिना मुखच्छायेत्यनयैवोक्त्या विषयीकृततरमिति वाच्यमेव चमत्कारीति । तदिदमत्र तत्त्वम्—यथा मुखमालिन्यच्छायया कामिन्याः कामुकं प्रति रागोत्कर्षः प्रतिपाद्यते न तथा व्यङ्ग्येन । प्रेम्णि हि खलु संकेतच्युताया मुखमालिन्यभावात् । व्यङ्ग्यं त्वन्यथाऽपि स्यादिति ।

यच्च काव्यं केवलवाच्यवाचकवैचित्र्यभाक् तच्चित्रम् । रसादिव्यङ्ग्यार्थत्वेन काव्यानुकारित्वाद्विस्मयकारित्वात्तादृशयोगाद्वा लेख्यसादृश्याद्वा कलामात्रत्वादिना वेत्याह—शब्दचित्रमिति । अव्यङ्ग्यमित्यत्र नञ्शब्दस्येषदर्थत्वेनेषदस्फुटतमं व्यङ्ग्यं यत्र तत्तथा । न तु सर्वथा निर्व्यङ्ग्यम् । यतः स नास्ति कश्चिद्विषयो यत्रान्ततो विभावादिरूपतया रसपर्यवसायिता नास्तीत्युत्तरत्र वक्ष्यमाणत्वात् ।

चित्रमिति गुणालंकारयुक्तम् । अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम् । अवरमधमम् । यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ ४ ॥

वाच्यचित्रं यथा—

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥ ५ ॥

इति श्रीकाव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो नाम प्रथम उल्लासः ॥ १ ॥

---

स्फुटप्रतीयमानेति । अत्र स्फुटं प्रतीयमानार्थेन रहितमिति विग्रहः । न तु स्फुटेन प्रतीयमानार्थेन रहितमिति विग्रहः । इति कृते हि अस्फुटव्यङ्ग्यत्वप्रसङ्गः । ततोऽस्फुटनामा मध्यमकाव्यभेदः स्यात् । अतिस्फुटत्वे त्वगूढाख्यो मध्यमभेदः । तदिदमत्र तत्त्वं यदस्फुटतमतया रसपर्यवसायित्वं नास्तीति षष्ठोल्लासवक्ष्यमाणत्वात् । स्वच्छन्देति । छातं कृशम् । मूर्छन्नपगच्छन्मोहोऽज्ञानं येषां ते तथा । यदि वा मूर्छन् बहु भवन् प्राणायामवशान्मोहः श्वासनिरोधो येषामित्यर्थः । विनिर्गतमिति । अमरावती भवतीत्यन्वयः । तथा द्रुतपातितक्रियापेक्षयोपश्रुत्येत्यत्र पूर्वकालना । अर्गलाशब्दः सामीप्यलक्षणया कपाटवृत्तिः । अभिधया वा व्यवधायकत्वमात्राभिधायी ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशव्याख्याने संकेते प्रथमोल्लासः ॥

अथ द्वितीय उल्लासः ।

क्रमेण शब्दार्थयोः स्वरूपमाह—

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

**वाच्यादयस्तदर्थाः स्युः ।**

वाच्यलक्ष्यव्यङ्ग्याः ।

**तात्पर्यार्थोऽपि केषुचित् ॥ ६ ॥**

आकाङ्क्षासंनिधियोग्यतावशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां परस्परसमन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ।**

तत्र वाच्यस्य यथा—

---

सशब्दार्थशरीरस्य काऽलंकारव्यवस्थितिः ।
यावत्कल्याणमाणिक्यप्रबन्धो न निरीक्ष्यते ॥

विषयभेदाच्छब्दभेदो न स्वाभाविक इत्याह—वाच्यादय इति । तात्पर्यार्थोऽपि केष्विति । अभिहितान्वयवादिमतेष्वित्यर्थः । वक्ष्यमाणरूपाणामिति । जात्यादिर्जातिरेव वेत्यत्र । बोद्धुः संबन्धिषु जिज्ञासा आकाङ्क्षा । आकाङ्क्षितस्याऽऽनन्तर्यं संनिधिः । योग्यता संबन्धार्हत्वम् । अभिधानान्तरमन्वयप्रतीतिनिमित्तं तात्पर्यार्थोऽप्यस्ति तद्विषयः । तात्पर्यलक्षणोऽर्थोऽपि समास्ति । तौ वाक्यविषयावेवेत्याह—अपदार्थोऽपीति । आकाङ्क्षादिवशादन्योन्यमन्विताः पदार्थास्तात्पर्यान्यनामधेयं वाक्यार्थं प्रतिपादयन्ति । प्राक्सामान्यार्थप्रतीतिः । ततोऽन्वये सति पदार्थेभ्यो विशिष्टप्रतीतिः । यदुक्तम्—पदानि स्वमर्थमुक्त्वा निवृत्तव्यापाराण्यथेदानीमर्थोऽवगतोऽर्थान्तरं बोधयति । प्राभाकरपक्षे त्वाकाङ्क्षादिवशान्मिथः सामान्यतयाऽन्वितानि पदान्येव प्रधानगुणत्वेन मिथोऽनुगतपदसमूहरूपविशेषरूपतया वाक्यार्थं वदन्तीति वाच्य एव वाक्यार्थः । पदान्येव वाक्यं पदार्थ एव तदर्थो न तु पदार्थेभ्यो वाक्यार्थः ।

सर्वेषामिति । न केवलं प्रत्येयत्वं किंतु व्यञ्जकत्वमपीत्यपिशब्दार्थः । वक्तृबोद्धव्यादिवैशिष्ट्यादर्थानां व्यञ्जकत्वम् ।

[1]माए घरोवअरणं अज्ज हु णत्थित्ति साहिअं तुमए ।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥ ६ ॥

अत्र स्वैरविहारार्थिनीति व्यज्यते । लक्ष्यस्य यथा—

[2]साहेन्ती सहि सुहअं खणे खणे दुम्मिआसि मज्झ कए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ॥ ७ ॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् । व्यङ्ग्यस्य यथा—

[3]पेच्छ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥ ८ ॥

अत्र निष्पन्दत्वेनाऽऽश्वस्तत्वम्, तेन च जनरहितत्वम्, अतः संकेतस्थानमेतदिति कयाचित्कंचित्प्रत्युच्यते ।

अथवा मिथ्या वदसि न त्वमत्राऽऽगतोऽभूरिति व्यज्यते ।

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः ॥ ७ ॥**

इहागृहीतसंकेतस्य शब्दस्यार्थप्रतीतेरभावात्संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन संकेतो गृह्यते स तस्य वाचकः ।

---

तत्र वक्तृवैशिष्ट्याद्यथा माए घरो अरणमिति । अत्र तस्या असाध्वीत्वेऽवगते व्यङ्ग्यप्रतीतिः ।

बोद्धव्यविशेषाद्यथा—साहेन्तीति । साधयन्ती कथयन्ती प्रतिपादयन्ती वा । अत्र विपरीतलक्षणया वाक्यस्य शत्रुत्वं लक्ष्योऽर्थः । न मूलं हि सापराधत्वप्रकाशनं व्यङ्ग्यम् । तेनाप्यधमेन किं कार्यमित्यर्थः । प्रयोजनं त्वत्यन्तानुपकारित्वादि लाक्षणिकवाक्यमूलमिति नाथप्रकाश्यम् ।

निश्चलेति बहिरङ्गव्यापारस्य निवृत्तिः । निष्पन्देत्यन्तरङ्गव्यापारस्य । 'भिसिणीपत्तम्मि रेहइ बलाआ' इति वचनाद्विपरीतरतादिकं स्वयमूह्यम् । एतत्तृतीयोल्लासे वक्ष्यते ।

यस्येति । शब्दस्य । यत्रेति । जात्यादौ ।

---

१—मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया । तद्भण किं करणीयमेवमेव न वासरः स्थायी ॥ २—साधयन्ती सखि सुभगं क्षणे क्षणे दूनाऽसि मत्कृते । सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया ॥ ३—पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ।

संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव, तथाऽप्यानन्त्याद्व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां शब्दानां विषयविभागो न प्राप्नोतीति च तदुपाधावेव संकेतः । उपाधिश्च द्विविधः—वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च । वस्तुधर्मोऽपि द्विविधः—सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः—पदार्थप्राणदो विशेषाधानहेतुश्च । तत्राऽऽद्यो जातिः । उक्तं हि वाक्यपदीये—' न हि गौः स्वरूपेण गौर्नाप्यगौः, गोत्वाभिसंबन्धात्तु गौः ' इति । द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन

---

आनन्त्यादिति । यद्येकस्मिन् गोपिण्डे संकेतः क्रियते तदाऽन्येषु कर्तुं न शक्यते । व्यभिचाराच्चेति । यो हि पिण्डः संकेतविषयः स व्यवहारकाले व्यभिचरति बाल्यादिभेदात् ।

गौः शुक्ल इति । गोत्वशुक्लत्वचलत्वविशिष्ट एव गोपिण्डे संकेताद्गौः शुक्लश्चल इत्यादीनां विषयो नास्ति ज्ञानार्थानामप्रयोज्यत्वात् । तदुपाधाविति । व्यक्तिविशेषणे । पदार्थप्राणद इति । न हि कश्चित्पदार्थो जातिसंबन्धमन्तरेण स्वरूपं लभते । द्वितीय इति । लब्धरूपस्य वस्तुनः पटादेः पश्चात्संबन्ध्य विशेषाधानहेतुः । यदि हि पटादिना गुणः सहभावीष्यते तदा पटादौ रूपादय इति प्रतीतिर्न संगच्छते । न हि शुक्लादेर्गुणस्य पटादिस्वरूपप्रतिलम्भहेतुत्वम् । जातिमहिम्नैव पटादेः प्रतिलब्धस्वरूपत्वात् । तदेवं यस्य प्राणप्रदोपाधिनिबन्धनत्वं स जातिशब्दो गवयादिः । यस्मात्तु लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुरर्थः प्रतीयते स गुणशब्दः । साध्य. पूर्वापरीभूतेति । पूर्वापरीभूतौ तुषवुसादिप्रक्षेपविक्लेदादिरूपाववयवौ यस्याः क्रियायास्तद्रूपः । अन्त्यबुद्धिनिर्ग्राह्यमिति । न खलु डिशब्दोच्चारे त्थशब्दः । त्थशब्दोच्चारे वा डिशब्दः । अत एव संहृतक्रमं स्वरूपम् । तत्खलु तां तामभिधाशक्तिमभिव्यञ्जयता वक्त्रा यदृच्छयोपाधितया संज्ञिनि तस्मिंस्तस्मिन्निवेश्यते । तस्माच्छब्दप्रवृत्तिनिमि-

संनिवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति । 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकारः । परमाण्वादीनां तु गुणमध्यपाठात्पारिभाषिकं गुणत्वम् । गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते । यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात् ।

---

त्तानां चतुष्ट्वान्मुख्यशब्दार्थश्चतुर्विधः । ननु विशेषाधानहेतुर्गुणः शुक्लादिरिति पूर्वमुक्तम् । ततश्च परमाणुत्वादयो गुणाः परमाण्वादिद्रव्याणां न विशेषाधानहेतवः । नित्यत्वात् । अनित्यानां हि विशेषाधानहेतुत्वम् । पूर्वापरकालविषयो हि विशेष्यविशेषकभावः । तत्कथं तेषां गुणत्वमित्याह—गुणमध्यपाठादिति । अणु महद्दीर्घं ह्रस्वं चेति कणादवचनात् । अन्यथा जातिशब्दत्वं स्यात् । न खलु स्वयं परमाणुर्नाप्यपरमाणुः । परमाणुत्वयोगात्तु परमाणुरिति । ननु परमाणुषु परमाणुत्व कस्मान्नेष्यते । उच्यते—पार्थिवपरमाणौ पृथ्वीत्वपरमाणुत्वयोः परापरव्यवस्थाया अभावात् । यदि पृथिवीत्वमपरं तदा घटेऽपि परमाणुत्वप्रसङ्गः। अपरसद्भावे परस्य सद्भावप्रतिपादनात् । अथ परमाणुत्वमपरं तदा तेजःपरमाणुष्वपि पृथिवीत्वप्रसङ्गः । तस्मान्न जातिशब्दत्वम् । परमाण्वादीत्यादिशब्दाद्येषां प्रागुक्तगुणलक्षणाभावोऽथ च गुणत्वेनेष्टास्ते पारिमाण्डल्यादयो ग्राह्याः । परिमण्डलाः परमाणवः । तेषां भावः पारिमाण्डल्यम् । अनुशतिकादीनाम् ( पा० सू० ७ । ३ । २० ) इत्युभयपदवृद्धिः । तच्च वर्तुलत्वमिति न्यायकुमुदचन्द्रे प्रभाचन्द्रो व्याख्यातवान् । अपरे तु पारिमाण्डल्यमणुपरिमाणमाहुः । पारिमाण्डल्यादीत्यत्राऽऽदिशब्दादाकाशादीनां परिमाणादयो ग्राह्याः । ननु गुणक्रियायदृच्छानामानन्त्यात्कथं तेषु संकेतः । यतः प्रत्येकं संकेतः कर्तुं न शक्यते जातिं विनेत्याह—गुणक्रियायदृच्छेति । गुणक्रियायदृच्छादीनां परमार्थत एकत्वमेव । यदुक्तम्—

कर्मैकं जातिरप्येका जगत्येकः सितो गुणः ॥ इति ।

यस्तु भेदः प्रतीयते स आश्रयभेदान्न वस्तुतः । अतः स्वाश्रयभेदाद्भेद इव लक्ष्यते न तु भेद एव । शुक्लादीनामाश्रया भिन्नाः शङ्खाद्याः । पाकादीनां तण्डुलाद्याः । यदृच्छानां च वृद्धशुकाद्युक्ता भिन्ना ध्वनयो बाल्याद्यवस्था वा । दृष्टान्तद्वारेण द्रढयति—यथैकस्य मुखस्येति । यथा हि मुकुरतैलकृपाणादीनां प्रतिबिम्बनिबन्धानां भेदादे-

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम् । गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि । बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये । तद्वानपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न दर्शितम् ।

---

कमेव मुखं नानाकारत्वेन भासते तथैकशुक्लादिव्यक्तिरेकैव शङ्खाद्याश्रयवशेन नानात्वेन स्फुरति । तस्माद्गुणादेरेकत्वाज्जात्यभावे गुणादिशब्दानां गुणादौ संकेत इति महाभाष्यकारमतम् ।

अन्ये तु गुणक्रियायदृच्छानां वस्तुत एव भेदो नाऽऽश्रयभेदादिति मन्यमानाः सर्वत्र जातिरेव प्रवृत्तिनिमित्तं मन्यन्ते । तन्मतं व्याकुर्वन्नाह— हिमपयःशङ्खादीति । अभिधानं शब्दः । प्रत्ययो ज्ञानम् । पाकादिष्विति । गुडतण्डुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेन स्थिताः क्रियाविशेषास्तत्समवेतं सामान्यमस्ति यद्वशेनायं पाक इत्यभिन्नाभिधानप्रत्ययौ स्याताम् । डित्थादिशब्देष्विति । यदृच्छाशब्देषु शुकसारिकाद्युदीरितेषु भिन्नेषु डित्थत्वादिकं सामान्यमेव यथायोगं संज्ञिष्वप्यस्तमभिधेयम् । यदि वोपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिक्षणं भिद्यमानेऽप्यभिद्यमानो यन्माहिम्ना डित्थो डित्थ इत्येवमभिन्नाकारः प्रत्ययः स्यात्तथाभूतं डित्थादिशब्दावसेयवस्तुसमवेतमेव डित्थत्वादि सामान्यम् । तच्च डित्थादिशब्दैरभिधीयत इति गुणक्रियायदृच्छाशब्दानामपि जातिरेवैकः शब्दार्थ इति । तद्वानिति । जातेरर्थक्रियाकारित्वाभावाद्विफलः संकेतः । व्यक्तेस्त्वर्थक्रियाकारित्वेऽप्यानन्त्यव्यभिचाराभ्यां न संकेतः कर्तुं शक्यत इति जातिमती व्यक्तिः शब्दार्थ इति वैशेषिकादयः । अपोह इति । जातिव्यक्तितद्योगजातिमद्बुद्ध्याकाराणां शब्दार्थत्वस्यानुपपद्यमानत्वाद्गवयादिशब्दानामगोव्यावृत्त्यादिरूपोऽपोहः शब्दार्थ इति बौद्धाः ।

स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥ ८ ॥

स इति साक्षात्संकेतितः । अस्येति शब्दस्य ।

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।

अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया ॥ ९ ॥

कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद्गङ्गायां घोष इत्यादौ च

---

शब्दस्य मुख्येन लाक्षणिकेन व्यञ्जनात्मकेन वा व्यापारेणार्थावगतिहेतुत्वमिति मुख्यं तावदर्थमाह – स मुख्योऽर्थ इति । स साक्षात्संकेतितो मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्राग् ज्ञायमानत्वात् । मुख्यार्थविषयः शब्दोऽपि मुख्यः । तत्रेति । अर्थविषये । सनयापेक्षया वाच्यावगमनशक्तिरभिधाशक्तिः ।

अथेदानीं लाक्षणिकस्य लक्ष्यार्थदर्शनद्वारेण व्यापारमाह—मुख्यार्थेति । मुख्यार्थस्यानुपपत्तेरनुपयोगाच्च प्रत्यक्षादिप्रमाणेन बाधे तेन मुख्यार्थेन सह लक्ष्यार्थस्य योगे संबन्धे सादृश्यादौ सति रूढेः प्रयोजनात्पावित्र्यशैत्यादेरशब्दान्तरवाच्यात्ताद्रूप्यप्रतीत्यादिरूपादन्योऽर्थो यल्लक्ष्यते प्रतिपाद्यते यत्साम्यादमुख्यः शब्दव्यापारो लक्ष्यार्थनिष्ठो लक्षणाशक्तिः । यदिति । वाक्यार्थनिर्देशः । सेति । विधीयमाना लक्षणा । सर्वनामपदं हि कदाचिदनूद्यमानलिङ्गमादत्ते कदाचिद्विधीयमानलिङ्गमिति । उदाहरणद्वारेण व्याकरोति—कर्मणीति । कुशाल्लातीति दर्भग्रहणायोगान्मुख्यार्थबाधे विवेचकत्वादौ संबन्धे रूढेः प्रवीणोऽर्थो लक्षणा व्यापारेण लक्ष्यते । आदिशब्दाद्द्विरेफद्विकानुलोम्यप्रातिलोम्यलावण्यादयः । द्विरेफशब्देन रेफद्वितययोगिभ्रमरपदलक्षणार्थलक्षणाद्वारेण रूढ्यनुवृत्तिरेव षट्पदादौ क्रियते ।

तुरङ्गकान्ताननहव्यवाहज्वालेव भित्त्वा जलमुल्ललास ।

इत्यादौ तुरङ्गकान्ताननहव्यवाहशब्दो वडवामुखाग्नौ लक्षणया प्रयुक्तः । न च तत्र रूढः । व्यवहारेऽनभ्यनुज्ञातत्वादिति द्रष्टव्यम् । सति तु गुप्तार्थप्रतिपादनादिप्रयोजने एवंविधलक्षणा अप्यदुष्टाः । यद्भट्टकुमारिलः—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।

क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥

गङ्गादीनां घोषाद्याधारत्वासंभवान्मुख्यार्थस्य बाधे विवेचक-त्वादौ सामीप्ये च संबन्धे रूढितः प्रसिद्धेः, तथा गङ्गातटे घोष इत्यादेः प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादनात्मनः प्रयोजनाच्च मुख्येनामुख्योऽर्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ।

---

निरूढा इति भ्रष्टोपचारप्रतीतयः । लक्षणा इति लक्षणाशब्दाः । अभिधानवद्वृक्षादिनामवत् । तथा गङ्गेति । गङ्गातटे घोष इत्युक्ते परि-मितपावित्र्यादीनां प्रतीतिः । तथेति । अपरिमितत्वेन । अमुख्योऽर्थ. । लक्ष्यस्तटादिः । सान्तरार्थेति । सम्बन्धानस्तटादिलक्षणोऽर्थस्तदाश्रया क्रिया शब्दव्यापारो लक्षणा । तथा हि । गङ्गाशब्दाभिधेयस्य स्रोतसो घोषाधारत्वानुपपत्तेर्मुख्यार्थबाधे योऽयं समीपसमीपिभावात्मा संबन्धस्त-दाश्रयेण तटं लक्षयति । लक्षणायाश्च प्रयोजनं तटस्य गङ्गात्वैकार्थस-मवेतपुण्यत्वमनोरमत्वशैत्यादिप्रतिपादनं व्यङ्ग्यम् । न हि तत्पुण्यत्वादि शब्दान्तरैः स्प्रष्टुं शक्यते । तद्योगश्च तत्राऽऽसन्नत्वम् । तत्पञ्चधोक्तं भर्तृ-मित्रेण—

अभिधेयेन संबन्धात्साद‍ृश्यात्समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥ इति ।

संबन्धाद्यथा-गङ्गायां घोषः । साद‍ृश्याद्यथा—गौर्वाहीको गौरेवायमि-त्यादौ मुख्यार्थस्य साक्षादिभत्त्वेन प्रत्यक्षादिना प्रमाणेन बाधेऽभिधे-येन साद‍ृश्यात्तद्गतजाड्यमान्द्यादिगुणसद‍ृशजाड्यमान्द्यादिगुणयुक्तो वा-हीको लक्ष्यते । प्रयोजनं ताद्रूप्यप्रतिपत्त्यादि । एते च सारोपासाध्य-वसानालक्षणागौणलक्षणाया उदाहरणे । समवायः साहचर्यम् । यथा कुन्ताः प्रविशन्तीत्यादौ कुन्तादीनां प्रवेशानुपपत्त्या मुख्यार्थबाधे साह-चर्यात्पुरुषा लक्ष्यन्ते । प्रयोजनं च रौद्रत्वादीनां सातिशयानां प्रति-पादनम् । वैपरीत्याद्भद्रमुखः । अत्र भद्रमुखशब्दस्याभद्रमुखे प्रयोगा-त्स्वार्थबाधः । अतोऽसौ स्ववाच्यभूतभद्रमुखत्ववैपरीत्यादभद्रमुखत्वं लक्ष-णयाऽवगमयति । प्रयोजनं तु गुप्तासभ्यार्थप्रतीतिः । क्रियायोगाद्यथा महति समरे शत्रुघ्नस्त्वमिति । अत्राशत्रुघ्ने शत्रुघ्नप्रयोगात्स्वार्थबाधः । शत्रु-घ्नशब्दश्चाशत्रुघ्ने हननक्रियायाः कर्तृत्वायोगाल्लक्षणया प्रयुक्तः । प्रयो-

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ १० ॥

'कुन्ताः प्रविशन्ति यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । तत उपादानेनेयं लक्षणा ।

गौरनुबन्ध्य इत्यादौ श्रुतिसंचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते । न तु शब्देनोच्यते ।

'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे'

इति न्यायात् । इत्युपादानलक्षणा तु नोदाहर्तव्या । न ह्यत्र प्रयोजनमस्ति । न वा रूढिरियम् । व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते । यथा क्रियतामित्यत्र कर्ता, कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते । श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात् ।

---

जनं च वर्ण्यमानशत्रुघ्नशब्दाभिधेयनृपरूपताप्रतिपादनम् । एवं निरन्तरार्थनिष्ठशब्दव्यापारोऽभिधा । सान्तरार्थनिष्ठस्तु लक्षणा । तेनाभिधैव मुख्यार्थे बाधिता सत्यचरितार्थत्वादन्यत्र प्रसरतीति तत्पुच्छभूतैव लक्षणा ।

सा च द्विविधा । शुद्धोपचारमिश्रा च । तत्र शुद्धाऽपि द्विधेत्याह— स्वसिद्धय इति । येयं प्रयोजनतो लक्षणा तस्या एतौ भेदौ । रूढितस्तु या लक्षणा सा लोके प्राचुर्यं गतेति न तस्या नैयत्यम् । अभिधाव्यापारतुल्यैवासाविति भावः । कुन्तादिभिरिति । स्वार्थमत्यजद्भिरिति ज्ञेयम् । स्वसंयोगिन इति भणनात् । आक्षिप्यन्ते । लक्ष्यन्ते ।

विशेषण इति । जातिलक्षण उपाधौ । अनुबन्ध्यो हन्तव्यः । उपादानलक्षणा तु नोदाहर्तव्येति । यथाऽन्यैर्मुकुलादिभिरुक्ता । न च क्रमेण द्वयोर्वाच्यता । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् । शब्दबुद्धिकर्माणि हि विरम्य व्यापारं न कुर्वन्तीत्यर्थः । पीनो देवदत्त इति । अत्रापि नोपादानलक्षणा । यथाऽन्यै रसायनाद्यभावे पीनत्वलक्षणकार्येण रात्रिभोजनात्मककारणस्य स्वसिद्धये समाक्षेपादुक्ता । श्रुतार्थापत्तेरिति । 'दृष्टः

गङ्गायां घोष इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयतीत्येवमादौ लक्षणेनैषा लक्षणा । उभयरूपा चेयं शुद्धा । उपचारेणामिश्रितत्वात् । अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ।

---

श्रुतो वाऽर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पनमर्थापत्तिः ' । एतत्प्रभाकरो व्याख्याति–दृष्टः श्रुत इति लोके प्रसिद्ध्योपलम्भमात्रे वर्तते । अन्यथा नोपपद्यतेऽर्थापत्तिव्यवस्थाप्यमर्थं विना न घटत इति याऽर्थस्य कल्पना साऽर्थापत्तिः । श्रुताच्छब्दादर्थस्याऽऽपत्तिर्व्यवस्थाप्यस्याऽऽपतनम् । तेन श्रुतार्थापत्तौ रात्रौ भुङ्क्त इति शब्दः कल्प्यते । अर्थादर्थस्याऽऽपतनम् । अर्थापत्तौ तु रात्रिभोजनमर्थ एवेति । अभिधैव स्वात्मनिर्वाहाय शब्दान्तरमर्थान्तरं वा कर्षतीति मीमांसकाः ।

लक्षणेनैषा लक्षणेति । अयमभिप्रायः—यत्र शब्दः सर्वथा स्वमर्थं त्यजन्नन्यं लक्षयति तत्र लक्षणेन तटादिज्ञापनेन लक्षणा । यत्र तु स्वार्थमपि वदन्नन्यमुपादत्ते तत्रोपादानेनेति । उपचारेणेति । यथा गौर्वाहीक इत्यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते न तथाऽत्रेति भावः । अत्र ह्यभेदप्रतिपत्तिपूर्वमेवाभेदस्तत्र भेदपूर्वम् । एतदेव द्रढयति—अनयोरिति। तटादीनां लक्ष्याणां प्रतिपादने भेदात्मक न ताटस्थ्यम् । कुन्तपुरुषयोर्गङ्गातटयोश्चाभेद एवेति यदन्यैस्तटस्थे लक्षणा शुद्धेत्युक्तं तद्दूषितमित्याह–तत्त्वप्रतिपत्तौ हीति । भेदे तु गङ्गासंबन्धमात्रप्रतीतेर्न लक्षणाविशेषः । नन्वत्र कुन्ता एव प्रविशन्ति नान्ये गङ्गायामेव घोषो नान्यत्रेति विवक्षायां कुन्तगङ्गानिगीर्णतया कुन्तितटयोः प्रतीतौ साध्यवसानलक्षणयैव तत्त्वप्रतीतिप्रयोजनादिसाध्यासिद्धेः किं लक्षणान्तरकल्पनया । यदाह—सहचरणस्थानतादर्थ्यवृत्तमानधरणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तद्वदुपचार इति। मुकुलस्याप्यदोऽनुमतम् । अत्रोच्यते। यत्राऽऽरोप्यारोपविषयभावतयाऽत्यन्तासन्नत्वेन भेदे सत्यभेदस्तत्र साध्यवसानता । यत्र त्वारोप्यारोपविषयभावं विना मूलत एवाभेदप्रतीतिस्तत्रो-

सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ।

आरोप्यमाण आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ।

विषय्यन्तः कृतेऽन्यस्मिन्सा स्यात्साध्यवसानिका ॥ ११ ॥

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णेऽन्यस्मिन्नारोपविषये सति सा साध्यवसाना स्यात् ।

---

पादानेन लक्षणा । पूर्वत्र तु पूर्वं भेदप्रतीतिः पश्चादभेदप्रतिपत्तिः । इदमत्र तत्त्वम् । अनयोरुदाहरणयोरारोप्यारोपभावं प्रति चित्तमेव न धावतीत्यत्र सचेतसः प्रमाणम् ।

शुद्धां द्विधोक्त्वोपचारमिश्रां सारोपामाह—सारोपाऽन्येति । विषयी गवादिर्विषयो वाहीकादिः । अनपह्नुतभेदाविति । अनपह्नुतस्वरूप एव वस्तुनि वस्त्वन्तरस्याधिकस्याऽऽरोप्यमाणत्वात् । सामानाधिकरण्यं भिन्नार्थयोरेकत्रार्थे वृत्तिर्नीलोत्पलवत् । सादृश्यहेतुका चैषा । उपमानोपमेयभावस्य विद्यमानत्वात् । रूपकालंकृतेर्बीजम् । यत्र त्वारोप्येण गवादिना निगीर्णतयाऽऽरोपविषयस्य वाहीकादेः प्रतीतिस्तत्र साध्यवसाना । इयमतिशयोक्तेर्बीजम् । यथा—अनासवाख्यं करणं मदस्येत्यत्र वयोमद्ययोर्भिन्नत्वेऽप्यभेदः । ननु पूर्वस्यामप्यभेदोऽस्ति । रूपकस्याभेदात्मकत्वात् । सत्यम् । तत्राऽऽसन्नतामात्रेणाभेद इह त्वत्यासन्नतयेति । कार्यकारणभावादिलक्षणायां न रूपकादिविषयता । सादृश्याभावात् । यथा—

आयुर्घृतं यशस्त्यागो भयं चोरः सुखं प्रिया ।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयः सत्तीर्थसेवनम् ॥

तथाऽप्रस्तुतप्रशंसाप्रकारस्य कस्यचिदन्यापदेशलक्षणस्य साध्यवसानलक्षणात्वम् । यथा—

अनर्घ्यः कोऽप्यन्तस्तव हरिण हेवाकमहिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः ।

इत्यत्र हरिणेन सह प्रतीयमानस्याभेदः ।

**भेदाविमौ च सादृश्यात्संबन्धान्तरतस्तथा ।**
**गौणौ शुद्धौ च विज्ञेयौ,**

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्र च । अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्तीति केचित् । स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयत इत्यन्ये । साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे ।

उक्तं चान्यत्र—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ इति ।

---

सारोपसाध्यवसानयोश्च गौणशुद्धभेदाभ्यां द्वैविध्यमित्याह—भेदाविमाविति । यत्रोपमानगतगुणतुल्यगुणयोगलक्षणां पुरःसरीकृत्योपमेय उपमानशब्द आरोप्यते तौ गौणौ । गुणेभ्य आगतत्वाद्गौणशब्दवाच्यौ । स्वार्थेति । स्वार्थो गोशब्दस्य गोत्वं पिण्डाकृतिर्वा । व्यक्त्याकृतिजातयस्तु पदार्थ इति वचनात् । परार्थो वाहीकः । तथा च गोशब्दो वाहीकशब्देऽनुपपद्यमानसामानाधिकरण्याद्बाधितस्वार्थः सन् स्वाभिमानपूर्वं स्वार्थसहचारिजाड्यादिगुणाँल्लक्षयित्वा तत्तुल्यवाहीकस्थजाड्यादिगुणलक्षणाद्वारेण गोगतगुणतुल्यगुणोपेते वाहीक उपचरितः । शब्दोपचारस्यार्थोपचाराविनाभावित्वात्तदर्थोऽपि । केचिच्छब्दोपचारमेव मन्यन्ते । एवमन्यत्रापि । तेनेयमुपचारमिश्रा । लक्षणाद्वयगर्भीकारेण चतुर्थकक्षायां लक्षणेति । चतुर्थकक्षात्वं लक्षणाया अभिधापेक्षया ज्ञेयम् । लक्ष्यमाणगुणयोगेन गोशब्दो वाहीकलक्षणया प्रवर्तत इत्यर्थः । गर्भलक्षणयोरन्त्यलक्षणार्थं प्रवृत्तत्वात्तत्प्रयोजनेन प्रयोजनवत्त्वं न तु तयोर्भिन्नं प्रयोजनम् । न तु परार्थोऽभिधीयत इति । गोशब्देन स्वार्थसहचारिगुणलक्षणापूर्वं तदभेदेन वाहीकस्थाः स्वतुल्या गुणा एव लक्ष्यन्ते । सव्यवधानव्यापारात् । न तु वाहीकार्थोऽभिधीयत इत्येकलक्षणागर्भेयं तृतीयकक्षायां लक्षणेत्याहुः । अभिधीयत इति । लक्ष्यते । मुकुलस्त्वेवमाह—यथा गोशब्दः स्वसदृशवाहीकगतजाड्यादिगुणाँल्लक्षयित्वा वाहीकं लक्षयति । साधारणेति । गोर्वाहीकस्य च साधारणास्तुल्या ये गुणास्तदाश्रयेण वाहीक एव लक्ष्यः । अभिधेयेति । मुख्येनार्थेनाविनाभूतस्य केनापि

अविनाभावोऽत्र संबन्धमात्रं न तु नान्तरीयकत्वम् । तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् । अविनाभावे चाऽऽक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् ।

'आयुर्घृतम्, आयुरेवेदम्' इत्यादौ च सादृश्यादन्यत्कार्यकारणभावादि संबन्धान्तरम् । एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने । अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम् । शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि प्रयोजनम् । क्वचित्तादर्थ्यादुपचारः । यथेन्द्रार्था स्थूणेन्द्रः । क्वचित्स्वस्वामिभावात् । यथा राजकीयः पुरुषो राजा । क्वचिदवयवावयविभावात् । यथाऽग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः । क्वचित्तात्कर्म्यात् । यथाऽतक्षा तक्षा ।

---

संबन्धेन संबद्धस्यान्यवस्तुनो या प्रतीतिः सा लक्षणा शुद्धेत्यर्थः । लक्ष्यमाणैर्गुणैर्जाड्यादिभिः संबन्धाद्या तु वृत्तिः सान्तरार्थनिष्ठः शब्दव्यापारः सा गौणी । नान्तरीयकत्वमिति । नान्तरमविनाभावः । तत्र भवं नान्तरीयम् । गहादित्वादीयः । तदेव नान्तरीयकमिति । अविनाभावि येन विना यन्न भवति तन्नान्तरीयकं तादात्म्यतदुत्पत्तिलक्षणं कृतकत्वानित्यत्वादिवत् । तथात्वे हीति । नान्तरीयकत्वे हीत्यर्थः । न हि मञ्चपुरुषयोरविनाभावोऽस्ति । इत्युक्तमिति । गौरनुबन्ध्य इत्यत्र ।

एवमादाविति । आयुषः कारणे घृते तद्गतकार्यकारणभावलक्षणापूर्वत्वेनाऽऽयुष्ट्वं कार्यमुपचरितम् । तेनेयं कार्यकारणभावलक्षणागर्भीकारेण लक्षणा । मुकुलस्याप्यदोऽनुमतम् । सप्रयोजना च लक्षणेत्याह— गौणभेदेति । अन्यवैलक्षण्येनेति । क्षीरादिवैसादृश्येन । यथाऽऽयुष्कारणं घृतं न तथा क्षीरादि । आयुष्ट्वाच्च न व्यभिचरतीति कार्यकारित्वादि प्रयोजनम् । संबन्धाश्च बहवो यदुक्तमेकशतं षष्ठ्यर्था इत्याह—क्वचित्तादर्थ्यादित्यादि । क्वचिन्मानाद्यथा—आढकमश्नाति । क्वचिद्धरणाद्यथा तुलापूर्वं चन्दनं तुला । क्वचिदाधिपत्याद्यथा—पुमानयं गोत्रम् । स्थानाद्यथा— मञ्चाः क्रोशन्तीत्याद्याः स्वयं यथालक्ष्यं लक्षणीयाः । एषु शुद्धा लक्षणा । काचिद्रूढा काचित्प्रयोजनाच्च । काचित्सारोपा काचित्सा-

ध्यवसाना च । इत्युपचारमिश्रा चतुर्धोक्ता । ननु गङ्गादिशब्दः समयापेक्षतटादिप्रत्यायकोऽन्यथा वा । पूर्वपक्षश्चेत्तर्हि मुख्यः । तत्र कृतसमयत्वात् । अनेकार्थेष्वपि संकेतितो हरिशब्दादिवन्मुख्य एव । अथोत्तरः पक्षस्तदा नार्थप्रतीतिकृत् । न हि शब्दो दीपवद्योग्यतयैवार्थं प्रकाशयति । किंतु लिङ्गवत्संबन्धग्रहणबलात् । अथ गङ्गादिशब्दः साक्षात्संबद्धः प्रवाहादौ । तेन सह तटादेः संबन्धः । ततः साक्षात्संबन्धाभावात्तत्रार्थे गङ्गादिशब्दस्यामुख्यतेति चेन्न । साक्षात्संबन्धस्तावन्न शब्दानां केनाप्यस्ति । गुणत्वात् । समवायस्तु व्योम्नैव । संकेतस्तु साक्षादेवास्ति । तटादिप्रत्यायकत्वात् । न हि संबद्धसंबन्धाद्भूतलशब्दात्तत्स्थेषु वृक्षादिषु प्रतीतिः स्यात् । स्याद्वा संबद्धसंबन्धात्प्रतीतिस्तथाऽपि नामुख्यता । विशिष्टज्ञानकारित्वात् । न हीन्द्रियसंबद्धसंबन्धाद्गुणादौ विशिष्टं ज्ञानं कुर्वद्गौणम् । अविशिष्टज्ञानकारित्वे तु शब्दस्याप्रयोज्यतैव । उच्यते । लोकादेव च शब्दार्थानां मुख्यामुख्यत्वम् । संकेतित एवार्थे केनचिन्निमित्तेन प्रवर्तमानो मुख्यः शब्दः केनचिद्भाक्त इति । यथैकस्मिन्नेव भूधरोऽस्तीत्यादिः क्रियाशब्दः । पर्वत इत्यादिर्जातिशब्दः । तदेवं निमित्तभेदाच्छब्दानां संज्ञा भिद्यन्ते । यथा वा स एव शब्दः क्वाप्यर्थे पारिभाषिकः क्वापि नैमित्तिकः समयापेक्षया विशिष्टज्ञानजनकत्वाविशेषेऽपि । यथाऽऽकाशशब्दो व्योमालोकयोः । समोऽपि द्विधा साधारणासाधारणत्वेन । तत्र यः सर्वलोकशास्त्रे व्यवहारहेतुः स पूर्वः । यथा वृद्धिशब्देनाधिकीभाव उच्यते । यस्तु न सर्वस्मिँल्लोके शास्त्रे वा स द्वितीयः । यथा वृद्धिशब्देनाऽऽदैदौत उच्यन्ते । लोकेऽपि च गवाद्यर्थेषु व्यवहाराय गङ्गाचन्द्रिकेत्यादिशब्दः संकेत्यते । तत्रासाधारणसमयापेक्षी शब्दो यत्र यत्र संकेतितस्तत्र तत्र तथाऽर्थप्रत्यायकः सन्मुख्यः । साधारणसमयापेक्ष्यपि यो जात्यादिनिमित्तेन संमितः स तन्निमित्तयोगिष्वर्थेषु मुख्य एव । निर्निमित्तोऽपि व्योमादिशब्दो यत्रार्थे परिभाषितस्तत्रार्थे मुख्य एव । यस्तु सामीप्यादिनिमित्तेन संकेतितः स सर्वलोकशास्त्रेषु भाक्तः प्रसिद्ध इति सर्वं शुभम् । तथा गङ्गादिशब्देभ्यः प्रवाहाद्यर्थप्रतीतिपूर्वं सामीप्यादिहेतुना विवेकतस्तटादिधीः । रजतमिदमित्यत्र त्विदंशब्दामृष्टशुक्तिमविविच्यैव रजतधीः । तेनात्र भ्रान्तिः । पूर्वत्र तु नैवम् । एतेनातस्मिंस्तादिति ज्ञानं भ्रान्तमिति न्यायादगङ्गादौ तटादौ गङ्गादिज्ञानं भ्रान्तं तद्वे-

लक्षणा तेन षड्विधा ॥ १२ ॥

आद्यभेदाभ्यां सह । सा च

व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने ।

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव ।

तच्च गूढमगूढं वा,

तच्चेति व्यङ्ग्यम् । गूढं यथा—

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

अगूढं यथा—

---

तुश्च शब्दो न प्रयोगार्ह इति प्रश्नस्यानवकाशः । एवं च तस्मिंस्तदित्य-भ्रान्तज्ञानहेतुः शब्दो मुख्य इति ।

तेनेति । उपसंहारे । आद्यभेदाभ्यां सह संकलने षोढा । संक्षेपेणैवात्र लक्षणाविचारः कृतः । विस्तरेण तु मुकुलादिरचितमातृकादिग्रन्थेभ्यो ज्ञेयः ।

मुखमिति । अत्र विकसितशब्दोऽचेतने स्मिते बाधितस्वार्थः । पुष्पधर्म-त्वाद्विकासस्य । ततः सच्छविकत्वविस्तारित्वसादृश्यात्स्मित उपचरितः । व्यङ्ग्यं च हृद्यत्वसुगन्धित्वादि । अत्र हि वाच्यस्य विकासस्यानुपप-द्यमानत्वादत्यन्ततिरस्कृतवाच्यो लक्षणामूलो ध्वनिः । तथा वशितश-ब्दोऽचेतने वक्रिमण्यसंभवत्परतन्त्रस्वार्थः सहचारित्वतन्मुखप्रेक्षित्वादि-सादृश्याद्वक्रिमाणं लक्षयति । सर्वथा तदनुसरणं न कदाप्यन्यत्र सद्भाव इत्यादिध्वननम् । समुच्छलितशब्देन बाधितसामस्त्योच्छलनस्वार्थेनाक-स्मादधिकीभवनसाम्याद्विभ्रमं लक्षयता प्रौढत्वबहुश्लेषपदत्वसर्वजनस्पृह-णीयत्वादि व्यज्यते । अपास्तशब्देनामूर्तिमत्याश्रितमर्यादायाम् अमूर्तायां बाधितापक्षेपणात्मार्थेन स्वत्वनिवृत्तिसादृश्यात्संस्थां लक्षयता भूयोऽस्वी-करणानवलोकनादि व्यङ्ग्यम् । मुकुलितशब्दो बाधितकोरकत्वस्वा-र्थोऽभिनवोद्भेदसाम्यात्स्तनं लक्षयति । व्यङ्ग्यं चाभिलषणीयत्वचाक-

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ॥
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १० ॥

अत्रोपदिशतीत्यनायासेन शिक्षादानमभिधेयवत्स्फुटं प्रतीयते ।

तद्देषा कथिता त्रिधा ॥ १३ ॥

अव्यङ्ग्या, गूढव्यङ्ग्या, अगूढव्यङ्ग्या च ।

तद्भूर्लाक्षणिकः,

शब्द इति संबध्यते । तद्भूस्तदाश्रयः ।

तत्र व्यापारो व्यञ्जनात्मकः ।

कुत इत्याह—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः । तथाहि—

---

शिक्षापदमिदं ज्ञेयं न हृद्यलक्षणाविषयम् । नन्वहृद्या लक्षणैकाऽपि दुष्टा । सन्तु दूरे बहव इति चेन्न । एकस्या अहृद्याया अपि सरसान्यवाक्यसङ्गेन कथंचन शक्यते हृद्यताऽऽपादयितुं न बह्वीनां तथा। अत्रोपदिशतीति। अगूढव्यङ्ग्यव्यञ्जकपदमिदम् । तथाहि—यौवनमदस्याचेतनत्वादुपदेशेन बाधितस्वार्थेन वक्रप्रेक्षणादिव्यवस्थापकादिसाम्यान्मदं लक्षयताऽप्रयासेन शिक्षादानं वस्तु व्यङ्ग्यमभिधेयवदतिस्फुटतया प्रतीयते । तेनात्रागूढं नाम गुणीभूतव्यङ्ग्यभेदः ।

एवं यत्र झटित्येव मुख्यार्थबाधादिसहकार्यपेक्षार्थभासनशक्तिर्लक्षणाशक्तिस्तदाश्रयं लाक्षणिकं वदन्तीत्याह—तद्भूरिति ।

तत्र व्यापार इति । तत्र प्रयोजने गूढागूढे व्यञ्जनात्मा व्यापारः । तत्रेति विषयसप्तमी । तेन शब्दस्य व्यङ्ग्यविषये व्यञ्जनव्यापार इत्युक्तं स्यात् ।

यस्येति । प्रयोजनभूतफलावगमस्य सुखसंपत्तये हि स लक्षणाशब्दस्तस्मिन्नमुख्येऽर्थे प्रयुज्यते । यदि च सिंहो माणवक इति शौर्यातिशयेऽवगमयितव्ये स्खलद्गतित्वं शब्दस्य किमर्थं तस्य प्रयोगः । गम्य इति ण्यन्तो निर्देशः । शब्दावगमयितव्य इत्यर्थः । नान्यत इति । अभिधालक्षणाव्यापारात् । शब्दादिति । गङ्गादेः ।

नाभिधा समयाभावात् ।

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः संकेतिताः ।

हेत्वभावान्न लक्षणा ॥ १५ ॥

मुख्यार्थबाधादित्रयं हेतुः । तथा च—

लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।
न प्रयोजनमेतस्मिन्न च शब्दः स्खलद्गतिः ॥ १६ ॥

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि तटेऽपि सबाधः स्यात्तत्प्रयोजनं लक्षयेत् । न च तटं मुख्योऽर्थः । नाप्यत्र बाधः । न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः संबन्धः । नापि प्रयोजने लक्ष्ये किंचित्प्रयोजनम् । नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ।

एवमप्यनवस्था स्याद्या मूलक्षयकारिणी ।

एवमपि प्रयोजनं चेल्लक्ष्यते तत्प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृदनवस्था भवेत् ।

---

लक्ष्य न मुख्यमिति । यदि लक्षणाव्यापारगम्यं प्रयोजनमिष्यते तदा लक्ष्यं तटं तावन्मुख्यं न भवति । न च तटस्य मुख्यार्थस्य बाधः । घोषाधारत्वोपपत्तेः । न वा पावनत्वाद्यैर्लक्ष्यैः संबन्धः । प्रत्युत विष्ठास्थिप्रभृत्यपवित्रपदार्थयोगः । न च प्रयोजने लक्ष्ये प्रयोजनान्तरमस्ति । तथा तत्र प्रयोजने व्यङ्ग्ये शब्दो न स्खलद्गतिः प्रतिपादयितुमसमर्थः । स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवबोधनशक्तिर्यस्य शब्दस्य । तद्व्यापारो हि लक्षणा । न हि प्रयोजनमवगमयतस्तटवृत्तेर्गङ्गाशब्दस्य बाधकयोगः । यदि च प्रयोजनेऽवगम्ये स्खलद्गतित्वं तत्तस्य प्रयोगे दुष्टतैव स्यादित्याह—नापि गङ्गाशब्द इति । यथा तटस्य प्रयोजने प्रतिपाद्ये सामर्थ्यं न तथा गङ्गाशब्दस्य । तस्मादभिधालक्षणाभ्यामन्यस्तच्छक्तिद्वयोपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्ध्वननात्मा व्यापारः । तेन यत्कैश्चिल्लक्षितलक्षणेति नाम कृतं तद्व्यसनमात्रं तथाभावे च प्रयोजने लक्ष्ये प्रयोजनान्तरान्वेषणेनानवस्थानादतिप्रसक्तिः ।

ततश्च मूलक्षतिरित्याह—एवमपीति ।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते । गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतिपत्तिश्च प्रयोजनमिति विशिष्टे लक्षणा । तत्किं व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥**

कुत इत्याह—

**ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्हि नीलादिर्विषयः । फलं तु प्रकटता संवित्तिर्वा ।

**विशिष्टे लक्षणा नैवम्**

निगदेन व्याख्यातम् ।

**विशेषाः स्युस्तु लक्षिते ॥ १८ ॥**

लक्षिते तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ।

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम् । अभिधामूलं त्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १९ ॥**

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

---

प्रतिपत्तिश्चेति । एषाऽपि लक्षणा व्यापारविषया ।

प्रकटतेति । प्रकटत्वं भट्टमते । संवित्तिः प्रभाकरमते । प्रकटत्वं वस्तुधर्मः । संवित्तिस्त्वात्मनः । यथाऽऽत्मना स्वमहत्त्वेन व्याप्तं शरीरमेव जीववदिति व्यपदिश्यते न घटादि तथा ध्वनिनाऽपि गुणालंकारचारुशब्दार्थावेव व्याप्तौ काव्यमिति व्यपदेश्यौ न निर्गुणालंकारौ। तेन गौर्वाहीक इत्यादौ सव्यङ्ग्यत्वेऽपि न काव्यता ।

संकेतस्याविशेषेण प्रवृत्तत्वादनेकार्थानां शब्दानां नियतार्थप्रत्यायकत्वे संयोगादिसहितानां नियतार्थप्रत्यायकत्वं स्यादित्याह—संयोगाद्यैरिति । सशङ्खचक्रोऽशङ्खचक्र इत्यत्र संयोगविप्रयोगाभ्यां विष्णुरेवो-

इत्युक्तदिशा सशङ्खचक्रो हरिः, अशङ्खचक्रो हरिरित्युच्यते। रामलक्ष्मणाविति दाशरथौ। रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः। स्थाणुं भज भवच्छिद इति हरे। सर्वं जानाति देव इति युष्मदर्थे। कुपितो मकरध्वज इति कामे। देवस्य पुरारातेरिति शंभौ। मधुना मत्तः कोकिल इति वसन्ते। पातु वो दयितामुखमिति सांमुख्ये। भात्यत्र परमेश्वर इति राजधानीरूपादेशाद्राजनि। चित्रभानुर्विभातीति दिने रवौ, रात्रौ वह्नौ। मित्रं भातीति सुहृदि। मित्रो भातीति रवौ। इन्द्रशत्रुरित्यादौ वेद एव न काव्ये स्वरो विशेषप्रतीतिकृत्। आदिग्रहणात्

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं।
एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं॥ ११॥

इत्यादावभिनयादयः। इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत्क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा। नियमनात्तस्याः। न च लक्षणा। मुख्यार्थबाधाद्यभावात्। अपि त्वञ्जनं व्यञ्जनमेव व्यापारः। यथा—

---

च्यते। स्थाणुं भजेत्यत्रार्थात्प्रयोजनाच्छंभौ। सर्वं जानातीति प्रकरणेन युष्मदर्थे। प्रकरणमशब्दमर्थस्तु शब्दवानित्यनयोर्भेदः। कुपित इति। कोपलक्षणं हि लिङ्गं कामस्य नाब्धेः। अचेतनत्वात्। देवस्येति। पुरारातेरिति शब्दसंनिधेर्देवशब्दः शंभौ। मधुनेति। वसन्तस्यैव पिकमदजनने सामर्थ्यमिति स एव मधुशब्दवाच्यः। पात्विति। बहुप्रकारं हि रक्षणम्। तदत्र दयितामुखमपेक्ष्यौचित्यात्प्रसादसांमुख्यमेव पालनं नियम्यते। इन्द्रशत्रुरिति। इन्द्रशत्रुर्विवर्धस्वेत्यत्रेन्द्रश्चासौ शत्रुश्चेति कर्मधारये 'समासस्य' (पा० सू० ६।१।२२३) इति सूत्रेणान्तोदात्तत्वम्। बहुव्रीहौ तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० सू० ६।२।१) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वे इन्द्रशब्दस्यान्तोदात्तत्वमिति स्वरो वेद इव न काव्ये विशेषप्रतिपत्तिकृत्। वेदे तु विशेषप्रतिपत्तिकृत्। तथा ह—

---

१—एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः॥

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसंग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य दाना-
म्बुसेकसुभग सततं करोऽभूत् ॥ १२ ॥

तद्युक्तो व्यञ्जकः शब्दः ।

तद्युक्तो व्यञ्जनयुक्तः ।

यत्सोऽर्थान्तरयुक्तथा ।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥ २० ॥

तथेति व्यञ्जकः ।

इति श्रीकाव्यप्रकाशे शब्दनिर्णयो नाम द्वितीय उल्लासः ॥ २ ॥

---

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रु स्वरतोऽपराधात् ॥

अभिनयादय इत्यत्राऽऽदिशब्दादपदेशसंज्ञानिर्देशेङ्गिताकाराः । भद्रेति । भद्रः कल्याणप्रकृतिः । भद्रा हस्तिनां विशिष्टा जातिः । वंशः पृष्ठनाडिरन्वयश्च । शिलीमुखाः शरा भ्रमराश्च । परान्वारयतीति परः प्रकृष्टो वारणो हस्ती च । दानं त्यागमदौ । अत्र राजवर्णनप्रकरणेन नियताभिधानशक्तयो भद्राद्याः शब्दा एकमेवार्थमुक्त्वा मार्थका एव । अनन्तरं त्वर्थावगतिर्ध्वननव्यापारादेव शब्दशक्तिमूलात् । अत्र पदानि शब्दशक्त्या गजवृत्तान्तं व्यञ्जयन्तीति वाक्यप्रकाशो वस्तुध्वनिः । यदा तु प्रस्तावादिनियमो न स्यात्तदा द्वयोरप्यर्थयोर्वाच्यत्वाच्छ्लेषालंकार एव न शब्दशक्तिमूलो ध्वनिः ।

अर्थान्तरेति । द्वितीयेनार्थेन युक्तो व्यञ्जकः । यद्वा—अर्थमन्तरे युनक्तीति स तथा । सहकारितयेति । यद्यप्यविवक्षितवाच्ये लक्षणाभिधामूले शब्द एव व्यञ्जकस्तथाऽप्यर्थस्य सहकारित्वं न हीयते । इतरथा त्वज्ञातार्थोऽपि शब्दस्तस्य व्यञ्जकः स्यात् । केवलं शब्दस्य मुख्यता । तत्राविवक्षितवाच्यध्वनौ मुखं विकसितेत्यादिवाक्यमभिधया पदार्थमुक्त्वाऽन्वयं च तात्पर्यशक्त्याऽवगमय्य बाधकेनान्वय व्यपहत्य लक्षणया लक्ष्यं लक्षयित्वा ध्वन्यं ध्वनयति । तेनात्राभिधातात्पर्यलक्षणाध्वननाम्नाश्चत्वारो व्यापाराः । विवक्षितवाच्ये तु त्रयः । तत्र लक्षणाया अभावात् ।

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशव्याख्याने संकेते द्वितीयोल्लासः समाप्तः ॥ २ ॥

अथ तृतीय उल्लास. ।

अर्थाः प्रोक्ताः पुरा तेषाम् ।

अर्था वाच्यलक्ष्यव्यङ्ग्याः । तेषां वाचकलाक्षणिकव्यञ्जकानाम् ।

अर्थव्यञ्जकतोच्यते ।

कीदृशीत्याह—

वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसंनिधेः ॥ २१ ॥

प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ॥

योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ २२ ॥

बोद्धव्यः प्रतिपाद्यः काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्यात्मनः । क्रमेणोदाहरणानि—

अइपिहुलं जलकुम्भं घेत्तूण समागदह्मि सहि तुरिअम् ।

समसे असलिलणीसासणीसहा बीसमामि खणम् ॥ १३ ॥

अत्र चौर्यरतगोपनं गम्यते ।

---

सम्यक्च्छब्दविलासश्रीस्तेषां न स्याद्गवीयसी ।

परिच्युता न संकेताद्येषां मतिनितम्बिनी ॥ १ ॥

अर्थव्यञ्जकतेति । अर्थो व्यञ्जको यदि निरपेक्षस्तत्सदा तमर्थमवगमयेत् । अथ सापेक्षः किं तस्यापेक्षणीयमित्याह—वक्तृबोद्धव्येति । बोद्धव्य इत्यन्तर्भूतण्यर्थः । वाक्यवाच्याभ्यां युक्तोऽन्यसंनिधिर्वाक्यवाच्यान्यसंनिधिस्तस्य तथेति विग्रहो न तु समाहारः । तस्य नपुंसकत्वात्संनिधिन इति स्यात् । वयं त्वस्य श्लोकस्य द्वितीयं पादम् ‘ अथ व्यञ्जकतोच्यते ’ इति पठामः । व्याख्यानं चेत्थम्—अर्था वाच्यादयः पुरोक्ता अथ तेषामर्थानां व्यञ्जकतोच्यते । मूलव्याख्यायां त्वथशब्दस्य गम्यमानता व्याख्येया । प्रस्तावदेशेति । स्पष्टम् । अइपिहुलमिति । अत्र काचिदसती कृतान्यपुरुषसङ्गा कायगतविकारविशेषापह्नवेनाभिधत्ते । तस्याश्चासाध्वीत्वेऽवगते तृतीयस्य तटस्थस्य प्रतिभाजुषो व्यङ्ग्यप्रतीतिः । न ह्यत्र बोद्धव्यादीनां सामर्थ्यम् । सत्या वक्तृत्वे सति ते हि नैवंविधार्थं व्यक्तुमलम् ।

तुहेति द्वितीयार्थे षष्ठी । त्वामपीत्यर्थः ।

---

१—अतिविपुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम् ।

श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअं।
मह मन्दभाइणीए केरं सहि तुह वि अहह परिहवइ॥ १४॥

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु॥ १५॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम्। प्रश्नमात्रेणापि काकोर्विश्रान्तेः।

---

कायत्यर्थान्तरमिति काकुः। यद्वा काकुर्जिह्वा तद्व्यापारविशेषसंपाद्यत्वाद्ध्वनिर्विकारोऽपि काकुः। यद्वा ककि लौल्य इत्यस्य धातोः काकुशब्दः। प्रकृतार्थातिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते। यद्वेषदर्थे कुशब्दस्य कादेशः। तेन हृदयस्थवस्तुप्रतीतेरीषद्भूमिः काकुः। ननु काव्ये स्वरो न विशेषप्रतिपत्तिकृदिति प्रागुक्तम्। तत्कथं काकुस्वरोऽत्र काव्योपयोगी प्रोक्तः। सत्यम्। प्रकृतार्थापेक्षया काव्ये स्वरो नोपयोगीति ज्ञेयम्। व्यङ्ग्यापेक्षया तु काव्योपयोगी लक्ष्यानुसारतः प्रतिपत्तव्यः। यथाऽत्र। तद्वेणिसंहाराद्यथा—तथाभूतामिति। कौरवैर्युधिष्ठिरं प्रति प्रधानानि प्रेषितानि। तत्प्रस्तावेन संधित्सता भीमानुनयार्थं सहदेवः प्रेषितः। स च कोपसमये सहदेवं प्रति काक्वेदमाह। गुरुः खेदं कोपं मयि भीमे भजतीति। ननु तथाभूतामित्यादिवाच्यसिद्धौ काकुरयं स्वरविशेषः कारणमिति गुणीभूतव्यङ्ग्यभेदः कथं न स्यादित्याशङ्क्याऽऽह—न च वाच्येति। हे सहदेव कुरुषु न खेदो गुरोर्यन्मयि खेद इत्येवंरूपप्रश्नमात्रेणापि काकोर्विश्रान्तेः। काकोस्तु यद्वैशिष्ट्यं तत्पर्यालोचनया सहदेवस्य व्यङ्ग्यप्रतीतिरिति नैष काकाक्षिप्तो गुणीभूतव्यङ्ग्यभेदः। अयमाशयः—काव्येऽर्थानुपपत्तिसंभवे सति व्यङ्ग्याद्यदा काव्यार्थोपपत्तिस्तदा वाच्यसिद्ध्यङ्गाख्यो मध्यमकाव्यभेदः। यदा त्वर्थानुपपत्तिसंभव एव सति काकोर्व्यङ्ग्यविश्रान्तिद्वारेण काव्यार्थोपपत्तिस्तदा काक्वाक्षिप्तता। यथा—मथ्नामि।

---

१—औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि त्वामप्यहह परिभवति॥

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एह्निं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी ॥ १६ ॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्, चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं त इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥ १७ ॥

---

कौरवशतं समरे न कोपादित्यत्र । तथा हि । अत्र भीमेन मथ्नामीति वक्तुं स्वप्नेऽपि न संभाव्यत इति काव्यार्थानुपपत्तौ सत्यां काकुर्व्यङ्ग्यार्थविश्रान्तिद्वारेण काव्यार्थमुपपादयति तदा न काकाऽऽक्षिप्तता । यथाऽत्र । अत एव काक्वा प्रकाश्यत इति पदं काक्वा काकुवैशिष्ट्येन प्रकाश्यत इत्थं व्याख्येयमिति शुद्धध्वन्युदाहरणवादिनां पक्षः । ये तु ध्वनिमात्रं प्रत्येवार्थस्य व्यञ्जकताऽत्र प्रकरणे प्रोच्यत इत्यूचुस्तत्पक्षाश्रयणेन पूर्वोक्तरीत्यऽनपेक्षया काकाऽऽक्षिप्तव्यङ्ग्यता ज्ञेया । तथा दृष्टेति क्रिया यदा गुरुकर्तृका तदा स्थितोषितेत्यत्र भावक्तान्तत्वे सति कर्मता व्याख्येया । यदा त्वस्मत्कर्तृका तदा यद्यपि तथाऽपीति पदद्वयाध्याहारेण व्याख्या कार्या । अपराऽप्यसंगतिरस्य श्लोकस्य प्रकृतानुपयोगात्संकेतकरणस्य प्रस्तुतत्वाच्च न प्रकाशिता ।

वाक्यविशेषाद्यथा—तइआ इति । अत्र वाक्योपात्तपदसमन्वयानुपपत्तेर्वाक्यपर्यालोचनया प्रच्छन्नकामुकत्वं व्यज्यते । न चात्र वक्तृबोद्धव्यवैशिष्ट्यं यतस्तयोर्वैशिष्ट्ये सत्यप्येवंविधवाक्याभावे व्यङ्ग्यार्थाप्रतीतेः ।

उद्देश इति । न ह्यत्र वक्तृस्वभावपरिशीलनोपयोगो नापि वाक्ये पदानां व्यङ्ग्यमन्तरेणान्वयानुपपत्तिः । किं तु वाच्यविशेषस्वरूपविचारेण रतार्थं प्रविशेति व्यज्यते ।

---

१—तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

णोल्लेइ अणुल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥ १८ ॥

अत्र सन्ध्या संकेतकाल इति तटस्थं प्रति कयाचिद्द्योत्यते ।

सुव्वइ समागमिस्सादि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ किंत्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥ १९ ॥

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते ।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यताभित्याश्वस्तां प्रति कयाचिन्निवेद्यते ।

गुरुअणपरवस पिअ किं भणामि तुह मन्दभाइणी अहकम् ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम् ॥२१॥

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावन्न भवामि तव तु न जानामि गतिमिति व्यज्यते । आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

---

अन्यसंनिधेर्यथा—णोल्लेइ इति । प्रेरयत्यनार्द्रमनाः । अत्र प्रच्छन्नकामुके कापि प्रदेशे सान्निध्यभाजि सति सखीं प्रति स्वैरिणीं गाथां पठन्तीं दृष्ट्वा चतुर्थसञ्चरो व्यङ्ग्यार्थं प्रत्येति । यद्यपि संध्यासमनरसरो भवत्वेवेति विवक्षितं तथाऽपि तदुच्यमानं परस्य लक्षणीय भवतीति तथा नोक्तम् ।

देशविशेषाद्यथा—अन्यत्रेति । उद्देश इत्यादिवृत्ते समग्रस्यापि वाक्यस्य

---

१-नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्याया भवति न वा भवति विश्रम ॥

२-श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥

३-गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव ज्ञास्यसि करणीयम् ॥

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसाराश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंऽशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥ २२ ॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते ।

वक्त्रादीनां मिथः संयोगे द्विकादिभेदेनानेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् । द्विकभेदे वक्तृबोद्धव्ययोगे यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ रत्तिअंधिअ सेज्जाए मह णिमज्जहिसि ॥ २३ ॥

---

वैशिष्ट्यमिह तु देशस्येति भेदः । द्वारोपान्तेति । अत्र मर्यादेति प्रकृतकामुकः । ननु द्वितीये ह्युल्लासेऽपि वाच्यलक्ष्यव्यङ्ग्यानामर्थानां व्यञ्जकत्वमुक्तम् । तत्किं पुनरुच्यत इत्याह—निराकाङ्क्षेति । वक्तृबोद्धव्येत्यादिक्रमेणोक्ते निश्चिता प्रतीतिः स्यादित्यर्थः ।

मिथः संयोग इति । तत्र वक्तृबोद्धव्ययोगे यथा—अत्ता एत्थ इति । अत्तेति श्वश्रूसदृशा । न तु माता । तेन सुप्तमनिस्त्वात् प्रोक्तः । अत्र दूरे सा शेते । अत्र त्वन्मार्गनिकटेऽहमुपभोगयोग्या । सांप्रतं विप्रकारित्वात्कुत्सितं दिवसं दिवसकम् । प्राकृते पुंनपुंसकयोरनियमः । तस्मात्संप्रति विलोकय । मिथो वक्त्रावलोकनेन दिनातिवाहनं कुर्वन्तावदित्यर्थः । पथिकेति चेतिनेऽपि तत्र न दोषकारीति न भेतव्यम् । रात्रौ राज्या वा स्मरोद्रेकादन्धं शय्याविभागानभिज्ञ शय्यायां मम मक्षिप्ता अपि तु महच्चतुष्टयमपि क्रीड । काचित्प्रोषितपतिका तरुणी विलोक्य जातकामः पान्थो निषेधद्वारेण तयाऽङ्गीकृत इति निषेधा-

---

१—श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक रात्र्यन्ध शय्यायां मावयोर्निमङ्क्ष्यसि ॥

शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ २३ ॥

शब्देति । न हि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ।

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम
तृतीयोल्लासः ॥ ३ ॥

---

भावोऽत्र विधिः । न तु मन्त्ररूपोऽप्रवृत्तप्रवर्तनारूपः । सौभाग्याभिमान-खण्डनप्रसङ्गात् । मह इति निपात आवयोरित्यर्थे । ममेत्युच्यमाने व्यङ्ग्यस्याभिधेयत्वमेव स्यात् । अत्र निषेधे वक्तृबोद्धव्यपर्यालोचनया विधिरूपव्यङ्ग्यार्थप्रतीतिः । एवं त्रिकादेर्योगे स्वयमूह्यम् ।

सहकारितेति । विवक्षितवाच्येऽर्थशक्तिमूले शब्दस्यापि सहकारित्वमस्ति यतो विशिष्टशब्दाभिधेयतया विनाऽर्थस्याव्यञ्जकत्वात् । ततो द्वयोरपि व्यञ्जकत्वम् । केवलमर्थस्य मुख्यं व्यञ्जकत्वं शब्दस्य तु सहकारिभावेन ।

इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशव्याख्याने
संकेते तृतीयोल्लासः समाप्तः ॥ ३ ॥

अथ चतुर्थोल्लासः ।

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालंकाराणां स्वरूपमभिधानीयं तथाऽपि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ॥ २४ ॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येवाविवक्षितं वाच्यं यत्र स ध्वनावित्यनुवादाद्ध्वनिरिति ज्ञेयः । तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् । यथा—

---

मनोवृत्ते भोक्तुं निबिडजडिमाग्राऽपि परितः
परस्मै चेत्काव्याद्भुतपरिमलाय स्पृहयसि ।
समुद्यद्गूढव्यङ्ग्यध्वनिसुभगमर्थार्थजनने
तदा संकेतेऽस्मिन्नवहितवती सूत्रय रतिम् ॥

स्वरूपमभिधानीयमिति । अभिधानीयं वक्तव्यमिति प्रस्तुतम् । अन्ये तु हितो योग्यः साधुरित्येषां शब्दानामेकार्थत्वादभिधानाय हितमभिधानीयं वक्तुं योग्यमिति व्याचक्षते । काव्यभेदानिति । यथाक्रममुल्लासत्रयेणोत्तममध्यमाधमानाहेत्यर्थः । अर्थान्तरे संक्रमितमिति । संक्रमितशब्दो यदा णिजन्तस्तदाऽर्थान्तरे सहकारिसहितव्यञ्जनव्यापारेण संक्रान्तिं नीतं वाच्यमिति व्याख्येयम् । यदा पुनरितच्प्रत्ययान्तस्तदाऽर्थान्तरे संक्रान्तमिति । व्याख्याद्वयं चाग्रे क्वचिदर्थान्तरे परिणमितं क्वचिदर्थान्तरे परिणतमिति पाठद्वयदर्शनात्क्रियते । लक्षणामूलेति । लक्षणामूलं यद्गूढव्यङ्ग्यं तस्य प्राधान्ये । गूढेत्यनुवाद्यतया विशेषणं न विधेयतया । प्राधान्योक्त्यैव गूढत्वस्य लब्धत्वात् । न ह्यगूढं प्रधानं स्यात् । क्वचित् 'लक्षणामूलरूढव्यङ्ग्यप्राधान्ये' इति पाठः । तदा चैवं व्याख्या—लक्षणैव मूलं ततो रूढं जातं यद्व्यङ्ग्यं तस्य प्राधान्ये । अस्मिंश्च पाठेऽय गुणः—यल्लक्षणामूलरूढव्यङ्ग्यत्वस्य सामान्यलक्षणत्वेनोत्तममध्यमकाव्यभेदेषु प्राधान्याप्राधान्याभ्यामुपयुज्यमानत्वम् । तेन व्यङ्ग्यस्याप्राधान्येऽप्येतौ भेदौ भवतः । सर्वत्र हि सामान्यलक्षणानुवादेन विशेषलक्षणं विधेयमिति न्यायादत्रोत्तमकाव्यभेदप्रस्तावे लक्षणामूलरूढव्यङ्ग्येति सामान्यलक्षणमनूद्य प्राधान्य इति विशेषलक्षणं कृतम् । एवं विवक्षितवाच्यभेदेष्वपि बोध्यम् ।

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत् ॥ २४ ॥

अत्र वचनाद्युपदेशादिरूपतया परिणमति ।

क्वचिदनुपपद्यमानतयाऽत्यन्तं तिरस्कृतम् । यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥ २५ ॥

---

त्वामस्मीति । वच्मीत्याप्ततयोपदिशामि न तु वचनमात्रं ब्रवीमि । मतिमादाय सावधानीभूय । अत्र वचनरूपस्यार्थस्य साक्षाद्दृश्यमाणत्वाद्वच्मीत्यस्यानुपयुज्यमानत्वे मुख्यार्थबाधः । तुल्यहेतुजन्यत्वं च संबन्धः । बुद्धिपूर्वकत्वमत्यन्ताशेषविशेषकथनाकीर्तिभ्रंशाद्यं च प्रयोजनम् । अत्र च वचनस्योपदेशपरिणत्या स्वपरत्वेनानुपात्तं वाच्यम् । तेनाविवक्षितं न पुनरत्यन्ततिरस्कृतम् । उपदेशस्यापि वचनरूपत्वात् । वचनादीत्यादिपदादस्मीत्यादेरुपदेशादीत्यादिशब्दादत्याप्तत्वादेश्च स्वीकारः । अत्र च विषयिणा वचनेन लक्ष्योपदेशरूपोऽर्थः स्वविषयो निगीर्ण इति साध्यवसाना संबन्धान्तरनिमित्तत्वाच्छुद्धा लक्षणेयम् । न ह्यत्र वचनोपदेशयोर्लेशेनापि सादृश्यं पश्यामः । येनेमां गौणीं साध्यवसानां ब्रूमः । साध्यवसानत्वं चास्या लक्षणायाः अत्र वचनाद्युपदेशादिरूपतया परिणमतीत्यक्षरापेक्षया व्याख्यातं यावता तूपादानलक्षणाऽपि स्यात् । तथा हि यत्राऽऽरोपविषयं मनसि कृत्वाऽत्यन्ताभेदप्रतिपत्तये आरोप्यं निर्दिश्यते तत्र साध्यवसानशुद्धलक्षणा । यथाऽऽयुरेवेदमित्यत्र । यत्र त्वारोपविषयं प्रति मनोऽपि न धावति तत्रोपादानलक्षितलक्षणा । न ह्यत्राऽऽरोपविषयमुपदेशादि मनसि कृत्वाऽत्यन्ताभेदबुद्धये वचनादिविषयिरूपं प्रयुज्यते । तस्माद्वच्मीत्याद्यनुपयुज्यमानं स्वसिद्धये परस्योपदेशादेराक्षेपं करोति ।

उपकृतमिति । यत्रेत्युपकृते । अनुपकारिणं प्रत्युपकृत सुखितमास्स्वेत्युक्तेरनुपपद्यमानत्वे मुख्यार्थबाधः । वैपरीत्यं च संबन्धः । ततोऽनुपकृतत्वदौर्जन्यादिकं दुःखितत्वेनावस्थानं च लक्ष्यते । गुप्तासभ्यार्थप्रतिपादनमाशु म्रियस्वेत्यादि व्यङ्ग्यम् । यदि वोपकारकारिण्यं

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति ।

विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः ।

अन्यपरं व्यङ्ग्यनिष्ठम् । एष च —

कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २५ ॥

अलक्ष्येति । न खलु विभावानुभावव्यभिचारिण एव रसोऽपि तु रसस्तैरित्यस्ति क्रमः । स तु लाघवान्न लक्ष्यते । तत्र—

रसभावतदाभासभावशान्त्यादिरक्रमः ।

भिन्नो रसाद्यलंकारादलंकार्यतया स्थितः ॥ २६ ॥

आदिग्रहणाद्भावोदयभावसंधिभावशबलत्वानि । प्रधानतया

---

श्लाघ्यत्वमिति व्यङ्ग्यम् । शुद्धा साध्यवसाना लक्षणेयम् । अत्रोपकृतत्वादेर्वाच्यस्यात्यन्ततिरस्कारः । अनुपकृतत्वादिनाऽर्थान्तरेण सर्वथाऽनन्वितत्वात् । तदयं भावः—यत्रानुपयुज्यमानतया मुख्यार्थबाधस्तत्रार्थान्तरसंक्रमितवाच्यो भेदः । यत्र त्वनुपपद्यमानतया तत्रात्यन्ततिरस्कृतवाच्यता ।

विवक्षितमिति । अत्रान्यपरत्वेनैव विवक्षणाद्विवक्षितं चेत्कथमन्यपरमिति विरोधो न शङ्क्यः । अपरस्तु सः । विवक्षितान्यपरवाच्य इत्यर्थः ।

न लक्ष्यत इति । शतपत्रपत्रसूचीभेदवद्रसादिरर्थो वाच्येन विभावाद्यर्थेन सममेव प्रतीयत इत्यर्थः । अलक्ष्यक्रमत्वप्रतिपादनाच्च न लक्षणागन्धोऽप्यत्रास्ति ।

रसाद्यलंकारादिति । रसादीनामलंकार इति विग्रहे, रसालंकारो रसवत् । भावालंकारः प्रेयः । तदाभासालंकार ऊर्जस्वित् । भावशान्त्यलंकारः समाहितमित्यर्थः । परविश्रान्तिरूपतया रसस्य न शान्तिरिति भावस्यैव शान्तिरुक्ता । प्रधानतयेति । अङ्गितयेत्यर्थः । भेदोपलक्षिताविवक्षितप्रधानतयेत्यसाधारणं विशेषलक्षणं काव्यभेदानामुत्तमत्वनिबन्धनम् । अतः सर्वेष्वपि काव्यभेदेषु प्रधानतया

यत्र स्थितो रसादिस्तत्रालंकार्यः । यथोदाहरिष्यते । अन्यत्र तु प्रधाने वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेयऊर्जस्वित्समाहितादयोऽलंकाराः । ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते ।

तत्र रसस्वरूपमाह—

**कारणान्यथ कार्याणि सहकारीणि यानि च ॥**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥ २७॥**
**विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः ।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥२८॥**

उक्तं हि भरतेन—विभावानुभावव्यभिचारिसंयोगाद्रसस्य निष्पत्तिरिति । एतद्विवृण्वते—विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणैः स्थायी रत्यादिको भावो जनितोऽनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतो व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादा-

---

त्यनुषञ्जनीयम् । भेदोपलक्षितावविवक्षितविवक्षितवाच्यसंलक्ष्यासंलक्ष्यक्रमत्वं तु मध्यमकाव्येष्वपि संभवात्सामान्यलक्षणम् । विशेषलक्षणं सामान्यलक्षणाव्यभिचारि स्यात् । सामान्यलक्षणं तु न विशेषलक्षणाव्यभिचारि ।

एतदिति । भरतमुनिसूत्रम् । विभावैरिति । वागङ्गसत्त्वाभिनयात्मकाः स्थाय्यादिचित्तवृत्तयो विभाव्यन्ते विशिष्टतया ज्ञायन्ते सभ्यैरेभिः कृत्वेति विभावाः । अनुभावैरिति । वागङ्गसत्त्वाभिनयैश्चित्तवृत्तिरूपमर्थमनुभवन्तोऽनुभाव्यन्ते साक्षात्कार्यन्ते जना एभिरित्यनुभावाः । ते चात्र न रसजन्या ग्राह्याः । तेषां रसकार्यत्वेन गणनानर्हत्वात् । अपि तु स्थायिनामेव येऽनुभावाः । व्यभिचारिभिरिति । विविधमाभिमुख्येन स्थायिधर्मोपजीवनस्वधर्मार्पणाभ्यां चरन्तीत्येवंशीला व्यभिचारिणः । अथ वा व्यभिचरन्ति रसायनाद्युपयोगेन जन्ममध्ये न सर्वथा भवन्त्यपीत्येवंशीलाः । निर्वेदादिभिः सहकारिभिरिति । चित्तवृत्तीनां क्रमभावित्वाद्व्यभिचारिरूपचित्तवृत्तयो यद्यपि स्थायिरूपचित्तवृत्तिभिः समं न सहकारितां यान्ति तथाऽपि व्यभिचारिचित्तवृत्त्युदये स्थायिचित्तवृत्तीनां वासनात्मकतया सद्भावात्स्थायिभिः सह व्यभिचारिणः सहभाविनः ।

चनुकार्ये तद्रूपतानुसंधानान्नर्तकेऽपि प्रतीयमानो रस इति भट्ट-लोल्लटप्रभृतयः।

---

प्रतीयमानो रस इति । अयं भावः—विभावैर्जनितोऽनुभावैः प्रतीतिं नीतो व्यभिचारिभिरुपचितो मुख्यया वृत्त्याऽनुकार्ये तद्रूपतानुसंधानादनुकर्तर्यपि प्रतीयमानः स्थायी भावो रस इति । विभावानुभावव्यभिचारिसंयोगात्स्थायी परिपुष्टो रसतां यातीति तात्पर्यम् ।

एतन्नेति श्रीशङ्कुकः । तथाहि । विभावाद्ययोगे स्थायिनोऽवगमनं न घटते । अवगमकस्याभावात् । न हि धूमं विना पर्वतस्थोऽग्निरवगम्यते । अपि च स्थायिनः संयोगाद्रसीभवन्तीत्येतद्यदि मुनेर्मतं स्यात्तदा स्थायिभावानामुद्देशं लक्षणं चाऽऽदावेवाभिदध्यात् । अथ चाऽऽदौ रसानामुद्देशलक्षणे अभिहिते । कुतश्च रसानामेव विभावानुभावान्विस्तरेण पूर्वमुक्त्वा तानेव स्थायिनां लेशेन पुनराह । न चोत्पत्तौ पदार्थानां कारणमुक्त्वा पुष्यतां पुनस्तदुत्पत्तौ कारणं वक्तव्यम् । वैयर्थ्यात् । किं चानुपचितः स्थायी भाव उपचितो रसः स्यादित्युच्यमान एकैकस्य स्थायिनो मन्दमन्दतरमन्दतमादिविशेषापेक्षयाऽऽनन्त्यं स्यात् । रसस्यापि तीव्रतीव्रतरतीव्रतमादिभिरसंख्यत्वं स्यात् । अथोपचयं प्राप्त एव रस उच्यते तर्हि स्मितहसितविहसिताद्याः षड्भेदा हास्यरसस्य न स्युः । अपरं च प्रागवस्थो भावः स्थायी रसीभवति न तु क्रमेणोपचित इत्यत्रापि व्यत्ययो दृश्यते । यस्मादिष्टवियोगजो महाञ्छोकः क्रमेण शाम्यति न तु दृढी भवति । क्रोधोत्साहरतयश्च निजनिजकारणोद्भूता अपि कालवशादमर्षस्थैर्यसेवाविपर्ययेऽपचीयन्ते । तस्मान्न भावपूर्वकत्वं रसस्यापि तु तद्विपर्यय एव । यदाह मुनिः—रसपूर्वकत्वं भावानां भावपूर्वकत्वं रसस्य विषयविशेषापेक्षया । तथाहि—प्रयोगेऽनुकर्तरि रसानास्वादयतामनुकार्ये भावप्रतीतिर्जायत इति प्रथमपक्षोत्थानम् । लोके तु भावदर्शनात्तत्स्वरूपरसनिष्पत्तिरिति । वयं तु ब्रूमः । अत्र मते लौकिकस्य साक्षाद्रामादिगतस्य रसस्य लोकोत्तरस्य च नाट्यादिप्रत्ययस्य सभ्यरसनीयस्य नान्तरं किमपि विभाव्यते । अन्यच्च नटेऽनुकर्तरि यदि रसः स्यात्तदा तस्य लयाद्यननुसरणं प्रसज्येत । नटेन च विभा-

राम एवायमयमेव राम इति, न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति, रामः स्याद्वा न वाऽयमिति, रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥२६॥
दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २७ ॥

इत्यादिकाव्यानुसंधानबलाच्छिक्षाभ्यासनिर्वर्तितस्वकार्यप्रक-

---

बाद्यैः काव्यशिक्षाप्रकाशितैरनुकार्यगता विभावादय एवानुक्रियन्ते । नानुकार्यगो रसः। परचित्तवृत्तीनामलक्ष्यमाणत्वेनानुकर्तुमशक्यत्वात् । तस्मादन्यथोच्यते–राम एवायमिति । अत्राऽऽद्ये रामस्य प्राधान्यम् । इदमर्थस्य तु द्वितीये । अनेनोल्लेखयुगलेन सम्यक्प्रतीतिः । रामोऽयमिति प्रतीतिर्मिथ्या । न रामोऽयमित्येवंरूपबाधस्यौत्तरकालिकस्य समुदयात् । चित्रेति । चित्रे चित्रिततुरगदृष्टान्तेन । तदाह—

प्रतिभाति न संदेहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि ॥
विरुद्धबुद्ध्यसंभेदादविवेचितविप्लवः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥

इति । अत्र च विरुद्धा संदेहादिरूपा । अविवेचितविप्लवः, अज्ञातानेकरूपावभासः । काव्यानुसंधानेति । अत्र प्रथमात्काव्याद्रामोक्तत्वेनानुसंहितादालम्बनविभावो द्वितीयात्तु कारणरूप उद्दीपनविभावः प्रकाश्यते । शिक्षाभ्यासादपि यथोपदेशं परिशीलनेन स्थायिकार्याः कटाक्षादयोऽनुसंधीयन्ते । न ह्यशिक्षितोऽनभ्यासी च नटो रोमाञ्चस्वेदाद्यनुभावाभिनयक्षमः । अभ्यासेति । अभ्यासेन निर्वर्तितं यद्व्यभिचारिकार्याणां कृत्रिमनिजानुभावानां प्रकटनं तेन व्यभिचारिणोऽनुसंधेयाः । निर्वेदादयो हि व्यभिचारिणः स्वस्वरुदिताद्यनुभावस्वरूपकार्यकारिणः सर्वेऽपि प्रत्येकं भवन्त्येव । स्थायी तु काव्यबलादपि नानुसंधेयः । रतिः शोक इत्यादयो

---

१ ख. अविज्ञातानेकरूपत्वावभासः । २ क. 'यी का° ।

टनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद्गम्यगमक-भावरूपादनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमी-यमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रास-न्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति श्रीशङ्कुकः ।

---

हि शब्दा रत्यादिकमभिधेयीकुर्वन्ति अभिधानत्वेन । न तु वाचिकाभिन-यरूपतयाऽवगमयन्ति । न हि वागेव वाचिकमपि तु तया निर्वृत्तमङ्गैरि-वाङ्गिकम् । तेन

विवृद्धात्माऽप्यगाधोऽपि दुरन्तोऽपि महानपि ।
वाडवेनेव जलधिः शोकः क्रोधेन पीयते ॥

इत्येवमादौ न शोकोऽभिनेयोऽपि त्वभिधेयः । कृत्रिमैरपीति । नाट्य-काले मुख्यरामाद्यभावात्कृत्रिमत्वम् । तथेति । कृत्रिमतया । संयोगादिति । संबन्धात् । संबन्धमात्रेऽपि संयोगशब्दः । स च गम्यगमकभावात्मा । तत्र रसो गम्यो भावादिर्गमकः । वस्त्विति । रसरूपम् । रसनीयत्वेनेति । कषायफलचर्वणपरपुरुषदर्शनप्रभवमुखप्रसेकक्लिन्नताकल्पया रसनीयस्व-रूपतयाऽन्येभ्योऽनुमीयमानेभ्यो विलक्षणः । संभाव्यमान इति । हेत्वादि-दर्शने सति हेतुमदादिभिर्भाव्यमिति संभावना । तत्रेति । नटे वस्तुतोऽ-सन्नपि । सामाजिकानामिति । सभ्यानाम् । मुख्यरामाद्यनुगतस्थाय्यनुकर-णरूपोऽनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रत्यादी रसः । तेन रतिरनुक्रियमाणा शृङ्गारः । एवं हासोऽनुक्रियमाणो हास्यो रस इत्यादि । मिथ्याज्ञानादप्यर्थक्रिया स्यात् । तदाह धर्मकीर्तिः—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थः क्रियां प्रति ॥ इति ।

नैतदिति भट्टतोतः । तथाहि । अनुकरणरूपो रस इति यदुक्तं तन्न । किंचिद्धि प्रमाणेनोपलब्धं तदनुकरणमिति शक्यं वक्तुम् । यथैवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन जलपानं प्रत्यक्षेक्षितं भाति । इह च नटगतं किंचिदुपलब्धं सत्यंन्यत्र प्रमाणत उपलब्धेऽनुकरणतया भातीति चिन्त्यम् । तद्वपुस्तन्निष्ठं प्रतिशीर्षकादि-रोमाञ्चगद्गदिकादि-

---

१ ख. ॰रूपत्वा॰ । २ ख. ॰तथापीति । ३ ख. ॰स्थमुक॰ ।

भुजाक्षेपचलनादि—भ्रूक्षेपकटाक्षादि—वचनं चित्तवृत्तिरूपरतेरनुकरणत्वेन न कस्यचिद्भाति। जडत्वभिन्नेन्द्रियग्राह्यत्वभिन्नाधिकरणत्वैस्ततोऽतिवैलक्षण्यात्। तथाहि—नटवपुरादीनां जडत्वं चक्षुर्ग्राह्यत्वं च रतेरजडत्वमचक्षुर्ग्राह्यत्वं च। प्रतिशीर्षकादीनां वपुरधिकरणं रतेस्तु मनोऽधिकरणमिति। मुख्यदर्शने च तदनुकृत्याभासः। न च रामरतिमुपलब्धपूर्वी कश्चित्। एतेन रामानुकारो नट इत्यपि निरस्तम्। अथ नटगता चित्तवृत्तिरेव प्रतीता सती रत्यनुकारः शृङ्गारः। तत्रापि किमात्मकत्वेन प्रतीयत इति चिन्त्यम्। ननु प्रमदादिभिर्लिङ्गैर्या लौकिकी कार्यकारणसहचाररूपा चित्तवृत्तिः प्रतीतियोग्या तदात्मकत्वेन सा नटचित्तवृत्तिर्भाति। हन्त तर्हि रत्याकारेणैव सा भातीति दूरे रत्यनुकृतिवाचोयुक्तिः। ननु ते विभावादयोऽनुकार्ये वस्तुसन्त इह त्वनुकर्तरि न तथेति विशेषः। अस्त्वेवम्। किंतु ते विभावादयोऽतत्कारणा अतत्कार्या अतत्सहचररूपा अपि काव्यशिक्षादिबलानीताः कृत्रिमाः सन्तः कृत्रिमत्वेन सभ्यैर्गृह्यन्ते न वा। यदि गृह्यन्ते तदा तैः कथं रतेरवगतिः। नन्वत एव तत्प्रतीयमानं रत्यनुकरणम्। मुग्धबुद्धे हेत्वन्तरजाते हि कार्ये विशेषविदा हेत्वन्तरजत्वेन ज्ञाते रत्यनुकाररूपवस्त्वन्तरस्यानुमानं भवेद्युक्तम्। अविशेषविदा तु तस्यैव मुख्यरतिरूपस्य प्रसिद्धस्य हेतोः। यथा वृश्चिकविशेषाद्गोमयस्यैवानुमानम्। सर्पस्य वा वृश्चिकस्यैव वा तत्परं मिथ्याज्ञानम्। अयं भावः—प्रसिद्धाद्रामादिगताद्रतिरूपाद्धेतो रत्यनुकरणं नाम हेत्वन्तरम्। तज्जाश्चेदनुभवाः स्युस्तथैव च विशेषविदा यदि ज्ञायेरंस्तदा रत्यनुकरणरूपवस्त्वन्तरस्यानुमानं युज्येत। न चैवं कथमिव रत्यनुकारप्रतीतिः। अविशेषविदा च च तथाविधानुभावदर्शने रतिरेवानुमीयते तच्च मिथ्याज्ञानमेवेति। यत्रापि मिथ्या लिङ्गज्ञानं तत्रापि तदाभासानुमानमयुक्तम्। न हि धूमत्वेन ज्ञाताद्बाष्पादग्न्यनुमानम्। तदनुकरणत्वेन भासमानादपि लिङ्गान्न तदनुकारानुमानं युक्तम्। धूमानुकारत्वेन हि ज्ञायमानात्तुषाराभ्न वह्न्यनुकारजपापुञ्जप्रतीतिर्दृष्टा। नन्वक्रुद्धोऽपि नटः क्रुद्ध इव भाति। सत्यं क्रुद्धेन सदृशः। सादृश्यं च भ्रुकुटयादिभिर्गौरिव गवयेन मुखादिभि-

१ क. 'तीतेत्यपि चि°।

रिति नैतावताऽनुकारः कश्चित्। नापि सभ्यानां सादृश्यं भाति। सभ्यानां च[1] भावशून्या नर्तके प्रतिपत्तिरित्युच्यते। अथ च तदनुकारप्रतिपत्तिरिति स्ववचनविरोधः। यच्चोक्तं रामोऽयमित्यस्ति प्रतीतिस्तत्रापि यदि न बाधकोदयस्तत्कथं न सम्यग्ज्ञानम्। बाधकोदयश्चेत्कथं न मिथ्या। वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात्तेन विरुद्धबुद्ध्यसंभेदादित्यसत्। नर्तकान्तरेऽपि रामोऽयमित्यस्ति प्रतीतिः। ततश्च रामत्वं सामान्यरूपमित्यायातम्। विभावाश्च काव्यादनुसंधीयन्त इत्यपि न। न हि ममेयं सीता काचिदिति स्वात्मीयत्वेन प्रतीतिर्नटस्य। अथ सभ्यस्य तथा प्रतीतियोग्याः क्रियन्त इत्येतावदेवानुसंधानं तर्हि स्थायिनि सुतरामनुसंधानं स्यात्। तस्यैव मुख्यत्वेनास्मिन्नयमिति सभ्यानां प्रतीतिः। तन्न सभ्यप्रतीत्यनुसारेण स्थाय्यनुकरणं रसः। न चापि नटस्येत्थं प्रतीतिः रामं तद्रतिं वाऽनुकरोमीति। सदृश करणं ह्यनुकरणमनुपलब्धप्रतीतिना न कर्तुं शक्यम्। अथ पश्चात्करणमनुकरणं तल्लोकेऽप्यनुकरणात्मता प्रसक्ता। अथ न नियतस्य कस्यचिदनुकारोऽपि तूत्तमप्रकृतेः शोकमनुकरोमीति। तर्हि केनेति चिन्त्यम्। न तावच्छोचकेन। उत्तमप्रकृतेः शोकाभावात्। न चाश्रुपातादिना शोकस्यानुकारस्तद्वैलक्षण्यादित्युक्तम्। इयत्तु स्यादुत्तमप्रकृतेर्ये शोकानुभावास्ताननुकरोमीति। तत्रापि कस्योत्तमप्रतीतेः। यस्य कस्यापीति चेत्सोऽपि विशिष्टतां विना कथं बुद्धावारोप्यते। य एवं रोदितीति चेत्तर्हि स्वात्मानमपि नटोऽनुकरोतीत्यायातम्। रोदनसद्भावात्तस्येति[3] गलितोऽनुकार्यानुकर्तृभावः। यच्चोच्यते वर्णकैर्हरितालादिभिः संयुज्यमान एव गौरित्यादिः। तत्र यद्यभिव्यज्यमान इत्यर्थो मतस्तन्न। न हि वर्णकैः पारमार्थिको गौरभिव्यज्यते यथा दीपाद्यैः। किं तु तत्सदृशः समूहविशेषो निर्वर्त्यते। अत एव हि वर्णका गवावयवसंनिवेशसदृशेन संनिवेशेन स्थिता गोसदृगिति प्रतिभां समुत्पादयन्ति। नैवं विभावादिसमूहो रतिसादृश्यप्रतीतिग्राह्यः। न च स्थाय्यनुकरणं रस इति मुनिना क्वचिदप्युक्तम्। तन्न भावानुकरणं रसः। अन्यान्यपि दूषणानि सन्ति विस्तरभीरुभिरस्माभिर्नोक्तानि।

१ ख. °नां च। २ ख. च न भा°। ३ ख. तस्यापि रोदनसद्भावादिति।

न ताटस्थ्येन नाऽऽत्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यतेऽपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावा-

---

वयं तु ब्रूमः—अत्र नटगतत्वेनानुमीयमानः स्थायी सभ्यानां रस इत्यूचे। तत्रानुमीयमानत्वमनुभवविरुद्धम्। तस्य विगलितवेद्यान्तरत्वेन रस्यमानत्वात्। तस्मादन्यथोच्यते नायकेन—न ताटस्थ्येनेति। ताटस्थ्यं स्वव्यतिरिक्ताश्रयत्वम्। तद्गतत्वेन हि रतिप्रतीतौ घटादिवन्न रसनीयत्वं स्यात्। स्वगत्वेन तु रतिप्रतीतौ स्वात्मनि रसस्योत्पत्तिरित्यङ्गीकृतं स्यात्। सा च न युक्ता। सीतादेः सभ्यान्प्रत्यविभावत्वात्। कान्तादित्वं साधारणं वासनाविकासहेतुर्विभावीभविष्यतीति चेद्देवतावर्णनादौ तदपि कथम्। न च स्वकान्तादिस्मरणं मध्ये संवेद्यते। लोकोत्तरस्य च रामादेर्ये सेतुबन्धादयस्ते कथं साधारणाः स्युः। न चोत्साहादिमतो रामादेः स्मृतिः। अननुभूतत्वात्। शब्दादेरपि तत्प्रतीतौ न रसोत्पत्तिः। प्रत्यक्षादिव नायकमिथुनप्रतीतौ। प्रत्युत लज्जादेरुत्पत्तिः स्यात्। किं चोत्पत्तिपक्षे सीतादिषु कामित्वं स्यात्। करुणस्योत्पादाद्दुःखितत्वं च। ततस्तत्प्रेक्षासु पुनरप्रवृत्तिः स्यात्। विभावादिनिवृत्तावपि कार्यरूपरसस्य घटादिवदवस्थानं प्रसज्येत। न चैवमस्ति। विभावादिनिवृत्तौ रसस्यापि निवृत्तेः। तन्नोत्पत्तिरपि। नाप्यभिव्यज्यते। दीपादिप्रकाश्यघटादिवत्तस्य पूर्वसिद्धत्वाभावात्। अथ शक्तिरूपतयाऽस्ति चेत्तदा तदभिव्यक्तौ विषयार्जनरतस्याप्रवृत्तिः स्यात्। तत्रापि च स्वगतोऽभिव्यज्यते परगतो वेति पूर्ववदेव दोषः। तत्कथमनुभूयत इत्याह—अपि तु काव्य इत्यादि। काव्येऽनभिनेये। नाट्येऽभिनेये। तन्मते हि वाच्यविषयाभिधाव्यापारानन्तरभावी रसादिविषयो भावकत्वनामा व्यापारः स्वीकृतोऽस्ति। स च चेतसो घनसंमोहसंवृत्तत्वं निवार्य विभावादीन्स्वस्य नटस्य च साधारणान्करोति। अत एव न ताटस्थ्यात्मगतत्वे। अयं भावः—यदि ह्यभिधाव्यापारानन्तरभावी भावकत्वव्यापारो नाङ्गी क्रियते तदा शास्त्रेभ्यः काव्यनाट्ययोः किमन्तरं स्यात्। तस्माद्द्वितीयोऽस्ति रसभावनाख्यो व्यापारः, यद्वशाद्विभावानां साधारणत्वापादनं स्यात्। भाविते च रसे तस्य

दिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यत इति भट्टनायकः ।

---

भोगः स्यादित्याह—भोगेनेति । यः स्वयं भुज्यते रस्यते परस्मै दीयते च स भोगः । स चानुभवस्मृत्यादिविलक्षण एव । तद्विशेषणमाह—सत्त्वेति । यदा हि रजसो गुणस्य द्रुतिस्तमसो विस्तरः सत्त्वस्यातिविकासस्तदानीं भोगः स्वरूपं लभते । सत्त्वोद्रेके चाऽऽनन्दो भवति । सत्त्वोद्रेकेण प्रकाशः प्रकटो य आनन्दस्तन्मयी या संवित्तस्यां या विश्रान्तिः सा सतत्त्वं परमार्थो यस्य स तथा परब्रह्मास्वादसोदरः[1] । स च हृदयविषयः । एतेन काव्ये व्यापारत्रयं वान्यरससहृदयविषयमभिधाभावनाभोगात्मकमुक्तम् ।

अत्रोच्यते । रसस्वरूप एव तावद्विप्रतिपत्तिर्वादिनाम् । तथाहि—प्रागवस्थायां यः स्थायी स एव विभावादिभिः प्राप्तपरिपोषोऽनुकार्यगत एव रसोऽनुकर्त्रा नाट्ये प्रयुज्यमानत्वान्नाट्यरस इति केचित् । प्रवाहधर्मिण्यां चित्तवृत्तौ चित्तवृत्तेश्चित्तवृत्त्यन्तरेण कः पोषार्थः । विस्मयशोकक्रोधादेश्च क्रमेण तानवं दृष्टं न पोषः । तन्नानुकार्ये रसः । अनुकर्तर्यपि न । लयाद्यननुसरणप्रसङ्गात् । सभ्यगते न कश्चमत्कारः । प्रत्युत करुणादौ दुःखम् । तस्मान्नायं पक्षः । कस्तर्हि—इहाऽऽनन्त्यान्नियतानुकारो न शक्यः । निष्प्रयोजनश्च । विशिष्टताप्रतीतौ ताटस्थ्येन[2] वृत्त्यभावात् । तस्मादनियतावस्थात्मकं स्थायिनं भावमुद्दिश्य विभावादिभिः संयुज्यमानैरयं रामः सुखीति स्मृतिविलक्षणा स्थायिनि प्रतीतिगोचरतयाऽऽस्वादरूपा प्रतिपत्तिरनुकर्त्रवलम्बना नाट्यैकगामिनी रसः । तस्य चानुकार्याभिन्नत्वाभिमतो नर्तक एवाऽऽधारः । सभ्यस्त्वास्वादकः । तेन नाट्य एव रसा नानुकार्यादिष्वित्यन्ये । अपरे त्वनुकर्तरि यः स्थाय्यवभासोऽभिनयादिना कृतो भित्ताविव वर्णकादिनाऽश्वावभासः स एव लोकातीततयाऽऽस्वादापरसंज्ञया प्रतीत्या रस्यमानो रस इति । नाट्याद्रसा नाट्यरसाः । केचित्तु ध्वनेर्विभावानुभावमात्रमेव भावकत्वादिरूपविशिष्टसामग्र्या संपद्यमानं तद्विभावनीया

---

१ क स्वादो रसः । २ ख. 'न व्युत्पत्त्य' ।

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये

---

नुभावनीयव्यभिचारिभिरुपचितस्थायिरूपचित्तवृत्त्युचितवासनानुरक्तस्वनिर्वृत्तिचर्वणाविशिष्टमेव रसः। तन्नाट्यमेव रसाः। अन्ये तु शुद्धं विभावमेवापरे शुद्धमनुभावमितरे स्थायिभावमात्रं परे व्यभिचारिणमन्ये तत्संयोगमेकेऽनुकार्यं केचन सकलमेव समुदायं रसमाहुरित्यलं बहुना।

काव्ये च लोकनाट्यस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेन लोकोत्तरप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता। स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयं नाट्यं लोकधर्मी। स्वरालंकारसंयुक्तमसुस्थपुरुषाश्रयं नाट्यधर्मम्। एवं स्थिते सर्वपक्षेषु रसस्य प्रतीतिरपरिहार्या। न ह्यप्रतीतं व्यवहार्यं पिशाचवत्। किं तु यथा प्रतीतिमात्रत्वावैशिष्ट्येऽपि प्रात्यक्षी, आनुमानिकी, आगमोत्था [1]प्रतिभानकृता योगिप्रत्यक्षजा च प्रतीतिरुपायवैलक्षण्यादन्यैव तद्वदियमपि प्रतीतिश्चर्वणास्वादनरसनाभोगापरनामाऽस्तु। [2]तद्धेतुभूताया हृदयसंवादादिनोपकृताया विभावादिसामग्र्या लोकोत्तररूपत्वात्—इति प्रतीयमान एव रसः। प्रतीतिरेव च विशिष्टा रचनाचर्वणाचमत्कारास्वादभोगलयादिशब्दवाच्या। सा च नाट्ये लौकिकानुमानप्रतीतेर्विलक्षणा। सा च तां प्रमुखे उपायतया संदधाति। एवं काव्येऽन्यशब्दप्रतीतेर्विलक्षणा परं प्रमुख उपायतया तामपेक्षते। लौकिप्रमाणादिव्युत्पन्नहृदयो हि लोकोत्तरं व्यवहारमाकलयति। एवं च प्रतीत्याद्यव्यतिरिक्तो न भोगः। प्रतीत्याद्यव्यतिरिक्तत्वाद्भोगो रसना भविष्यत्यपि न [3]रसोऽपि प्रतीतिरेव भोगीकरणव्यापारः काव्यस्य रसविषयो व्यञ्जनरूपो नामान्तरेण परैः स्मृतः। किं चोत्पत्त्यभिव्यक्तिद्वयानभ्युपगमे नित्यो वा सन्वा रस इति न तृतीया गतिः स्यादिति निष्टङ्कय श्रीमानभिनवगुप्तः प्राह—लोके प्रमदादिभिरिति। यथा लोके धूमदर्शनानन्तरमग्न्यनुमानमन्यत्र धूमाग्न्योरनियतदेशादितया यत्राग्निस्तत्र धूम इति व्याप्तिनिश्चयश्च तथा विभावादिप्रतीत्यनन्तरमेव रत्याद्यनुमानमन्यदानि-

---

१ क प्रधानकृतयो°। २ क. तत्र हेतु°। ३ ख. रसौ नांपि।

नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारव-
त्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थ-
स्यैवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैत इति संबन्धि-
विशेषस्वीकारपरिहारनियमानध्यवसायात्साधारण्येन प्रतीतैरभि-
व्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको
नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात्तत्कालवि-

---

यततया यत्र विभावादिस्तत्र रत्यादिरिति व्याप्तिग्रहोऽपीत्यर्थः । नाट्ये चेति । नाट्येऽपि तैरेव कारणादिभिर्विभावादिवाच्यैः स्थायी व्यक्तः । काव्ये च लोकनाट्यधर्मस्थानीयेन स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता । यन्मुनिः काव्यार्थान्भावयन्तीति भावाः । असाधारण्यप्राधान्याभ्यां काव्यार्था रसाः । पदार्थवाक्यार्थौ तु रसेषु पर्यवस्यतः । अर्थ्यन्ते प्राधान्येनेत्यर्थाः । न त्वर्थशब्दोऽभिधेयवाची । रसादेः स्वशब्देनानभिधेयत्वात् । ममैवैत इत्यादिकं साधारण्येन प्रतीतौ हेतुः । स्वस्य शत्रोरुदासीनस्येति पक्षत्रयेण सर्वसंबन्धिदर्शनं संबन्धिनां विशेषेण संबन्धिविशेषाणां वा यौ स्वीकारपरिहारौ यस्तयोर्नियमस्तस्यानवसायोऽपरिच्छेदस्तस्मात् । नियतप्रमातृगतत्वेनेति । यः कोऽपि विदग्धः स नियतः । साधारणोपायेति । विभावादयो हि सर्वेषां तुल्यत्वेन प्रतीतिगोचराः । तत्कालेति । तत्कालं विभावादिदर्शनश्रवणसमकालं विगलिता या परिमितप्रमातृता तद्वशादुन्मीलितो ज्ञेयान्तरस्पर्शशून्योऽपरिमितभावोऽपरिमितत्वं यस्य स तथा । केन प्रमात्रा । स्वगतत्वेन हि रतिप्रतीतौ कामित्वम् । परगतत्वेन तु द्वेषादि । ताटस्थ्यं वा घटादिवत् । सर्वसाधारणप्रतीतौ ताटस्थ्यमेव न रसनीयत्वम् । रसनीयतायामपि सुखवन्नियतनिष्ठत्वं कामित्वम् । तस्मादनियतनिष्ठत्वेन यो रसनीयः सर्वप्रमातृतावलम्बनेनैव यो रस्यते । अत एव रङ्गमण्डपान्तरप्रविष्टानां सर्वेषां हृदयसंवादभाजित्वमित्युच्यते । अत एव रङ्गभूमावहृदयानामपि साधारण्यप्रतीतये सहृदयीकरणाय साधारण्यमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैरातोद्यगानविचित्रमण्डपविदग्धगणिकादिभिरुपर-

गलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मानन्दास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः।

---

ञ्जनमाश्रितम्। अस्मादेव च साधारणसंवादकार्युपरञ्जनसमाश्रयणात्सुखादिप्रतीत्या न प्रमाता विवशीभवति। अविवशीभूतश्च रससंविदं वस्त्वन्तरे विश्रमयति। स्वाकार इवेति। यथा स्वात्मानमहमात्मना जानामीत्यत्राभिन्नोऽपि स्वाकारः। ग्राह्यग्राहकता हि सर्वत्र भेदे स्यादत्र त्वभेदेऽपीत्यपिशब्दार्थः। चर्व्यमाणतैकेति। न सिद्धस्वभावोऽपि तु तात्कालिक एव। न च चर्वणातिरिक्तकालस्थायी। अत एव विभावादिजीवितावधिः। पानकरसेति। यथा हि पानकरसास्वादो गुडमरिचादिषु वस्तुषु मध्य एकस्मिन्वस्तुनि चर्वद्भिरवधारयितुं न शक्यते तथाऽयमपि। अनुभावयन्निति। साक्षात्कारयन्। रस इति। अयमाशयः - प्रमदादिभिः कारणादिभिर्लौकिकैः कारणत्वादिमतिक्रान्तैर्विभावनानुभावनासमुपरञ्जकत्वमाणैरत एव लौकिकविभावादिशब्दव्यपदेश्यैरलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरश्चर्वणैकसारः स्थायिविलक्षण एव रसः। न तु यथा शङ्कुकादिभिरभ्यधीयत। स्थाय्येव विभावादिभिः प्रत्याय्यमानो रस्यमानत्वाद्रस उच्यते। एवं हि लोकेऽपि रसः स्यादसतोऽपि हि यत्र रसनीयता तत्र वस्तुसतः कथं न भविष्यति। तेन स्थायिप्रतीतिरनुमितिरूपा प्राच्या न रसः। अत एव विभावानुभावव्यभिचारिसंयोगादिति सूत्रवाक्ये स्थायिग्रहणं न कृतम्। तत्कृतं प्रत्युत शल्यभूतं स्यात्। स्थायी रसीभूत इति पुनरौचित्यादुक्तम्। औचित्यं तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामिदानीं चर्वणोपयोगितया विभावत्वावलम्बनात्।

---

१ ख. °भावादित्वा°।

स च न कार्यः। विभावादिविनाशेऽपि तस्य संभवप्रसङ्गात्। नापि ज्ञाप्यः। सिद्धस्य तस्यासंभवात्। अपि तु विभावादिभि-र्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत्क दृष्टमिति चेत्— न क्वचिद्दृष्टमित्यलौकिकसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानि-ष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्। लौकिक-प्रत्यक्षादिप्रमाणताटस्थ्यावबोधशालिपरिमितयोगिज्ञानवेद्यान्तर-संस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमितेतरयोगिसंवेदनविलक्षण-लोकोत्तरस्वसंवेदनगोचर इति प्रत्येयोऽभिधीयताम्। तद्ग्राहकं च प्रमाणं न निर्विकल्पकम्। विभावादिपरामर्शप्रधानत्वात्। नापि सविकल्पकम्। चर्व्यमाणस्यालौकिकानन्दमयस्य तस्य

---

विभावादिभिर्व्यञ्जित इति। दीपादिव्यङ्ग्यलौकिकघटादिवैलक्षण्येन व्य-ञ्जितः। ननु यदि रस्यमानतैकप्राणो ह्यसौ न प्रमेयादिरूपस्तर्हि सूत्रे निष्प-त्तिरिति कथमित्याह—चर्वणानिष्पत्त्येति। नेयं रसस्य निष्पत्तिरपि तु तद्वि-षयरसनायाः। तन्निष्पत्त्या तु तदेकायत्तजीवितत्वाद्यदि रसस्य निष्प-त्तिरुपचर्यते तन्न कश्चिद्दोषः। सा च चर्वणा न प्रमाणान्तरतो जाता पूर्वं येनेदानीं स्मृतः स्यात्। न चाधुना प्रमाणान्तरादुत्पन्ना। लोकोत्तरे प्रत्यक्षाद्यव्यापारात्। स्वयं तु नाप्रामाणिकी। स्वसंवेदनसिद्धत्वात्। चर्वणावबोधरूपैव। ज्ञानविशेषस्यैव चर्वणारूपत्वात्। अयं भावः—विभावा-दिभ्यो लोकोत्तरेभ्य उपायेभ्यो जातत्वाल्लोकोत्तरैषा चर्वणा बोधरूपा लौकिककारणादिजातेभ्योऽत एव लौकिकेभ्यो ज्ञानान्तरेभ्यो विलक्ष-णैव। प्रत्येयत्वमपि दर्शयति—लौकिकेति। लौकिकप्रमाणेभ्यो विलक्षणम्। चमत्कारकारित्वात्। ताटस्थ्येन स्वात्मानं विना यः परस्य बोधस्तेन शालते यन्मितयोगिज्ञानं तस्माद्विलक्षणम्। ताटस्थ्यप्रतीत्यादित्वेन रत्यादिबोधस्य निषिद्धत्वात्। तथा विषयोपरागशून्यस्वनिष्ठामितयो-गिज्ञानाच्च विलक्षणम्। स्वात्मगतत्वेन प्रतीत्यादिनिषेधस्योक्तत्वात्। अन्यत्स्वसंवेदनमत एव लोकोत्तरं तद्ग्राह्यः। अलौकिकानन्दमयस्येति। सदोल्लेखरहितस्येत्यर्थः। तदयमत्र संक्षेपः—मुकुटप्रतिशीर्षकादिना

---

१ ख 'स्यतेक°'।

स्वसंवेदनासिद्धत्वात् । उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः ।

व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्ता-

---

तावन्नटधीराच्छाद्यते । गाढप्राक्तनसंवित्संस्काराच्च काव्यबलोपढौक्यमानाऽपि न तत्र रामधीर्विश्राम्यति । अत एवोभयदेशकालत्यागो रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारितया दृष्टास्तत्रावलोकिता देशकालानियमेन रतिं गमयन्ति । यस्यां स्वात्माऽपि तद्वासनावत्त्वादनुप्रविष्टः । अत एव न ताटस्थ्येन रत्यवगतिः । न च नियतहेतुतया, येनार्जनाभिष्वङ्गादिसंभावना । न च नियतपरात्मैकगततया, येन दुःखद्वेषकामित्वाद्युदयः । तेन साधारणीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः । साधारणी भावना च विभावादिभिरिति । अत्र संकेतस्य प्रस्तुतत्वाद्रसविचारः संक्षेपादुक्तः । विस्तरेण तु लोल्लटादिविरचितरसविवरणेभ्यो ज्ञेयः । पादा इति बहुवचनोक्त्या ग्रन्थकारस्तन्मतं बहु मतवान् ।

न वेत्ति यस्य गाम्भीर्यं गिरितुङ्गोऽपि लोल्लटः ।
तत्तस्य रसपाथोधेः कथं जानातु शङ्कुकः ॥ १ ॥
भोगे रत्यादिभावानां भोगं स्वस्योचितं ब्रुवन् ।
सर्वथा रससर्वस्वमभाङ्क्षीद्भट्टनायकः ॥ २ ॥
स्वादयन्तु रसं सर्वे यथाकामं कथंचन ।
सर्वस्वं तु रसस्यात्र गुप्तपादा हि जानते ॥ ३ ॥

व्याघ्रादय इति । विभावादयः प्रत्येकं रसेषु पृथगुच्यमाना अनैकान्तिकतां भजन्ते । संयोगस्त्वव्यभिचारी । तथा हि—यत्र बन्धुविनाशो विभावोऽश्रुपातादिश्चानुभावश्चिन्तादैन्यादिश्च व्यभिचारी सोऽवश्यं शोको रस इति । एवमन्यत्रापि । अश्रुपातादय इति । तत्र वीरेऽश्रुपातो माघे यथा—

स वमन्रुषाऽश्रुघनघर्मविगलदुरुगण्डमण्डलः ।
स्वेदजलकणकरालकरो व्यरुचत्प्रभिन्न इव कुञ्जरस्त्रिधा ॥ इति ।

दयो व्यभिचारिणः शृङ्गाररस्येव वीरकरुणभयानकानामिति पृथगनैकान्तिकत्वात्सूत्रे मिलिता एव निर्दिष्टाः ।

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः ।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥ २८ ॥

इत्यादौ

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २९ ॥

इत्यादौ

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलताम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ३० ॥

---

मिलिता इति । संयोगरूपतया ।

वियदलीति । अङ्कश्चिह्नम् । टङ्को बन्धः । अत्र केवलविभावसद्भावेऽप्यन्यतमद्वयाक्षेपकत्वेन रसपुष्टिः । तेन नानैकान्तिकत्वम् । अन्यतमद्वयाक्षेपकश्च प्रसीदेति पदात्प्रसन्नावलोकनमुखप्रसत्तिप्रसादवचनादिरनुभाववर्गः, प्रणतिपर इति पदाच्चौत्सुक्याभिलाषदैन्यादिः, मुग्धपदाच्च त्रासत्रपाहर्षादिर्व्यभिचारी समाक्षिप्यते । परिमृदितेति । अत्र कथमपिपदाद्ग्लान्यालस्यश्रमप्रभृतिर्व्यभिचारिगणः, प्रवृत्तिरङ्गं कपोल इति पदेभ्यः कस्या अङ्गमित्याद्यपेक्षायां विभावो लभ्यते । दूरादुत्सुकमिति । अत्रौत्सुक्यादिव्यभिचार्यनुगतत्वेन दूरादित्यादिपदेभ्यः सहसाप्रसरणादिरूपोऽनुभावः, प्रेयसीतिपदाच्च विभावो लभ्यते । पूर्णेक्षणमित्यत्रेक्षणशब्दो व्यापारवचनः । एवं द्वयसद्भावेऽप्युदाहार्यम् । परं विभावादित्रयसद्भावे रसप्रतीत्युत्कर्षः । त्रयसद्भावश्च दशरूपक एव । यदाह वामनः—संदर्भेषु दशरूपकं श्रेयः । तद्धि चित्रं चित्रपटवद्विशेषसा-

इत्यादौ च यद्यपि विभावा अनुभावा औत्सुक्यव्रीडाहर्ष-कोपासूयाप्रसादाश्च व्यभिचारिणः केवलानामत्र स्थितिः, तथाप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैका-न्तिकत्वमिति ।

तद्विशेषानाह—

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ २९ ॥**

तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्चेति । तत्राऽऽद्यः

---

कल्यात् । तद्रूपसमर्पणया तु प्रबन्धेऽपि । नानेकान्तिकत्वमिति । विभा-वानुभावव्यभिचारिसंयोगस्येति शेषः ।

शृङ्गारेति । अत्र कामस्य सकलजातिसुलभतयाऽत्यन्तपरिचितत्वेन सर्वान्प्रति हृद्यतेति पूर्वं शृङ्गारः । तदनुगामित्वाद्धास्यः । तद्वैपरीत्या-न्निरपेक्षभावत्वाच्च ततः करुणः । ततस्तत्कारणमर्थसारो रौद्रः । ततो रौद्रस्य कामार्थप्राधान्येन कामार्थयोश्च धर्ममूलत्वादिति धर्मप्रधानो वीरः। तस्य भीतत्राणसारत्वात्ततो भयानकः । ततस्तद्विभावैः साम्यसंभाव-नाद्बीभत्स इतीयद्वीरेणाऽऽक्षिप्तम् । वीरस्य फलभूतोऽद्भुत इत्येतेषां क्रमः । द्वौ भेदाविति । आत्मेति शेषः । ततो द्वौ भेदावात्मा शृङ्गारस्य न त्वात्मानाविति । अयमभिप्रायः—संभोगे चेन्न विप्रलम्भाशङ्का । तदा स्वाधीनेऽनुकूले चानादरः स्याद्ग्राम्यत्वात्कामस्य । यन्मुनिः—

यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः कामिनः सा परा रतिः ॥ इति ।

विप्रलम्भे चेन्न संभोगाशा । तदा नैराश्येन करुण एव स्यात् । तस्मात्प्राप्तं गतमिव गतं प्राप्तमिवेत्येवं परम्पराक्रमेण वर्धिष्णुरयं कामः परमप्रीतिकृत् । संभोगविप्रलम्भयोस्तु शृङ्गारशब्दो ग्रामैकदेशे ग्राम-शब्दवदुपचारात् । संभोग इति । संयुक्ताभ्यां भुज्यत इति संभोगः । विप्रलम्भ इति । संभोगास्वादलोभेन वियुक्ताभ्यां प्रलभ्यत आत्माऽ-नेनेति ।

परस्परावलोकनालिङ्गनाधरपानपरिचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यते । यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ ३१ ॥

तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ३२ ॥

अपरस्तु अभिलाषविरहेर्ष्याप्रवासशापहेतुक इति पञ्चविधः ।

क्रमेणोदाहरणानि—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ३३ ॥

---

शून्यमिति । किंचित्पूर्वकायेन शनैर्मन्दं यथा स न जागर्तीत्याशयेन । अत्र गण्डयोः पुलकोद्गमेन निद्राव्याजावगमान्नायिकालज्जाभावः । त्वं मुग्धाक्षीति । वीटिका कशासंयोजनपाशः । जालिकेति यावत् । संभोगस्य तात्कालिकं फलं परीरम्भः । स च कञ्चुलिकासद्भावे तथाविधो न स्यादित्याशयेन विनैव कञ्चुलिकयेत्युक्तम् । सस्मिता या सखी सैव नेत्रोत्सवस्तेनाऽऽनन्दितः । अलीकेति समिषोपन्यासं यथा भवतीत्यर्थः ।

अपरस्त्विति । पूर्वमसङ्गे सङ्गेच्छाभिलाषः । प्रतिनियतेऽपि सङ्गे कुतश्चित्कारणादसङ्गो विरहः । सपत्नीषु कान्तकृतसन्मानासहनमीर्ष्या । देशान्तरगमनं प्रवासः । कुपितेन गुर्वादिकृतो वाग्दण्डः शापः । प्रेमार्द्रेति । प्रणयस्पृशः स्वयमाश्लेषादियाच्ञास्पृशः । परिचयात्पुनः

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृ-
द्यो मां नेच्छति नागतश्च हह हा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाऽऽप्नोति निद्रां निशि ॥३४॥

एषा विरहोत्कण्ठिता ।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलोदकैरश्रुभिः ॥ ३५ ॥
प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमु त्यज्यते ॥३६॥

---

पुनः कारणदुर्ज्ञादरोगादयास्तत्रास्तां च मयि भवेयुर्भवन्त्विति । आशंसापरिकल्पितासु स्वनेत्रस्थविषयीकृतासु । लयचेष्टाना साक्षादनुभव इव । अन्यत्रेति । अन्यत्र नायिकान्तरे । एतेन स्वस्मिन्नत्युरनुराग उक्तः । नाप्यस्य तादृगित्यादिना तु परिवारानुकूलत्वमुक्तम् । निशान्तान्तरे गृहान्तर्न बहिः । एतेन गुप्तिरुक्तम् । सा पत्युरिति । अत्र सख्युर्भावः सख्यं मैत्री । सखिवाग्भिः ... यः । तेनोपदेशस्तं तथा । अथ वा सख्यां साधुरिति तः । तत्र साधौ यः । स चासावुपदेशश्च तं तथेति । रोदनस्य सशब्दत्वपरिहारायाश्रुभिरित्युक्तम् । अश्रूणामेव च प्राचुर्याय लोलोदकैरिति चोक्तम् । स्वच्छैरित्यनेन तु चिरकालं रोदनं लभ्यते न क्षणमात्रम् । क्षणमात्ररोदने हि किंचिदञ्जनसंभवादश्रूणां न स्वच्छता स्यात् । प्रागश्रूणि बिन्दुतया कपोलमूलं पतन्ति पश्चात्तत्र मिलितानि लुठल्लोलोदकतया परिणमन्तीति तात्पर्यार्थः । प्रस्थानमिति । अत्र गतमासितमित्यत्राऽऽरम्भे क्तो नातीते । अतीते हि तयोर्गतत्वान्मुहृत्सार्थः किमु त्यज्यत इत्यत्रार्थासंगतिः स्यात् ।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ३७ ॥

हास्यादीनां क्रमेणोदाहरणानि—

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वरं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३८ ॥

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाऽऽशिषो
धिक्प्राणान्पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥ ३९ ॥

---

जीवित प्रियेत्यामन्त्रणे पदद्वयम् । प्रियेति तु सुहृद्विशेषणे प्रियसखैरिति विशेषणं न वाच्यं स्यात् । अथ वा प्रियस्य पत्युर्मित्राणि वलयानि तद्भावभावित्वादिति यदि व्याख्या तदा प्रिय इति सुहृद्विशेषणतया वाच्यम् । प्रियतमेऽत्यन्तवल्लभे न तु भर्तरि । तदयं तात्पर्यार्थः—हे प्रिय जीवित प्रियत्वादेवं भण्यसे पश्चादपि यात्कथं सुहृत्सार्थः किमिति त्यज्यते । पश्चान्महद्दुःखमनुभविष्यसीति । किमु इति पदं काका प्रश्नेन च व्याख्येयम् । यदि च प्रियेण सनाथः सुहृत्सार्थः प्रियसुहृत्सार्थ इति मध्यमपदलोपी समासस्ततोऽयमर्थस्तावदेकं सुहृत्सार्थोऽन्यच्च प्रिययुक्तस्तद्गन्तुमुचितमेवेत्यपि व्याख्या । त्वामालिख्येति । आत्मानमङ्घ्रिगतं यावदालेख्यतया साक्षादेवेच्छामि तावदालेख्येऽपि साक्षादिव तद्विभावनादश्रूद्गमः । तस्मिन्नपीति । चित्रेऽपीति । तथाऽत्र मनसैव तस्याश्चित्रविषयनयनं तस्य पादविषयं पतनं न बहिर्वर्णकादिभिः करणमित्यपि व्याख्यानम् । व्याख्याद्वयेऽप्यत्र सहृदयैः सारेतरता विभाव्या । आकुञ्च्येति । अत्राशुचिं वामम् । अशुचिक्रियाकरणत्वात् । हा मातरिति । कश्मीरराजमातृमरणे भट्टनारायणकविकाव्यमि-

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ४० ॥

क्षुद्राः संत्रासमेते विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ ४१ ॥

---

दम् । अशनिर्हुतवहो वज्राग्निः । मध्यं रुद्धं याभिस्तास्तथा । ततो घर्घरादिभिस्त्रिभिः पदैः कर्मधारयः । घर्घरा अव्यक्ताः । कृतमिति । नरकरिपुरच्युतः । किरीट्यर्जुनः । क्षुद्रा इति । विजहितेति जहातेः पञ्चमीपरस्मैपदमध्यमबहुवचने । हक इत्याकारस्येत्वम् । सौमित्र इति मातृतनयत्वेनावीरत्वं ख्याप्यते । वीरत्वादिहेतुं पितुर्धर्मः कौलीन्यादिकं च मातुः । मेघनाद इत्यत्र मेघनादे वक्तरि मेघनाद इत्यनुपयुज्यमानत्वात्स्वार्थं स्ववाच्यभूतार्थमित्ररूपात्संबन्धादिन्द्रजेतृत्वस्वगपर्यवस्कन्ददातृत्वाद्यर्थान्तरं लक्षयदनन्यसामान्यविक्रमादिकं ध्वनयति । इयं शुद्धा सारोपा लक्षणा । स्वदृश्यव्यक्तिसंबन्धान्तरजत्वात् । आरोप्यस्य मेघनादशब्दस्याऽऽरोपविषयस्याऽशब्दाभिधेयस्य चोक्तत्वात् । अत्र मेघनादरूपं वाच्यं स्वपरत्वेनानुगतम् । व्यङ्ग्यार्थान्तरपरिणतत्वात् । तस्मादविवक्षितमेव वाच्यं न पुनरत्यन्तं तिरस्कृतम् । व्यङ्ग्यार्थान्तरद्वारेण तस्योपयुक्तत्वात् । यदि वा शुद्धसाध्यवसानाऽपि लक्षणा स्यात् । तथाहि—अत्राऽऽरोपविषयः शक्रजेतृत्वादिरर्थ आरोप्येण मेघनादार्थेन विषयिणा निगीर्ण इति । एतच्च युक्तमिव व्याख्यातं भाति । यतो यत्र लक्ष्यलक्षणयोर्विषयविषयिभावेन ताद्रूप्यं स्यात्तत्र सारोपत्वम् । पूर्वव्याख्याने तु न हि मेघनादेनाहंभावो लक्ष्यते किं तु शक्रजेतृत्वादीति । अर्थान्तरं च लक्ष्यं कार्यं यत्र वाच्यं परिणम्यते न पुनर्विलक्षणं किंचित् । संरम्भया लीलया क्रीडया बद्धावधि रमते क्रीड-

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ४२ ॥
उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ४३ ॥
चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥ ४४ ॥

एषां स्थायिभावानाह—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ ३० ॥

---

तीति व्युत्पत्त्याऽङ्कितनामानं राममन्वेषयामीति । अनुपतति । पृष्ठापा-
तिनि । स्यन्दने । रथे । उत्कृत्येति । अथेति । सामस्त्ये चार्थे वा ।
स्थपुटगतं विषमस्थानस्थमपि । तत्रैतेऽष्टौ रसाः सुखप्रधानाः । स्वसंवि-
च्चर्वणरूपस्यैकघनस्य प्रकाशस्य प्रीतिसारत्वात् । तथाहि । एकघन-
शोकसंविच्चर्वणेऽपि लोकस्य हृदयविश्रान्तिः । अन्तरायशून्यविश्रान्ति-
शरीरत्वात् । अविश्रान्तिरूपतैव च दुःखम् । तत एव कापिला रजोवृ-
त्तिं वदन्तो दुःखस्य चाञ्चल्यमेव प्राणा इत्याहुः । इत्यानन्दरूपाः
सर्वे रसाः । किं तूपरञ्जकविषयवशात्केषामपि कटुकिम्ना स्पर्शोऽस्ति
वीरस्येव । स हि क्लेशसहनादिप्राण एव ।

रतिरित्यादि । अन्योन्यास्थाबन्धात्मिका रतिः । चित्तस्य विकासो
हासः । वैधुर्यं शोकः । तैक्ष्ण्यप्रबोधः क्रोधः । स्थेयान्संरम्भ उत्साहः ।
वैक्लव्यं भयम् । संकोचो जुगुप्सा । विस्तारो विस्मयः ।

तत्रैषां विभावानुभावव्यभिचारिणः कथ्यन्ते मिथः स्त्रीपुंसालम्बन-
रूपतदुपयोगिपवनारामचन्द्राकादयास्तज्जलक्रीडाद्युद्दीपनरूपविभावा

संभोगे सुखमयहर्षादिव्यभिचारिणी रोमाञ्चस्वेदाश्रुकम्पश्वसितकेशबन्धांशुकसंयमनभूषामाल्यादिसम्यङ्निवेशचाटुप्रभृत्यनुभावा विप्रलम्भे तु दुःखप्रायशङ्कौत्सुक्यमदग्लानिनिद्रानिर्वेदमरणादिव्यभिचारिणी संतापजागरकृशताविलापदीनवचनलेखलेखनवाचनवार्ताप्रश्नमरणोद्यमसंदेशाद्यनुभावा रतिर्जुगुप्सालस्यौग्र्यवर्जिता शृङ्गारः । स्थायी चर्वणतां गतो रसः स्यादिति सर्वत्र ज्ञेयम् । यद्यपि रतिश्रमकृतं निद्रादि संभोगेऽप्यस्ति तथाऽपि तद्रतौ चित्रतामाधत्ते । विप्रलम्भे तु तद्रतिभावनापरम्परोदितमेवेति युक्तमेवात्र सुखमयत्वम् । विप्रलम्भे च मरणमचिरकालप्रत्यापत्तिमयमिष्टं येन न शोकावकाशः । अथ वा चैतन्यावस्थैव प्राणत्यागकर्तृतात्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मन्तव्या न तु प्राणत्यागः । तथा विप्रलम्भ उन्मादापस्मारव्याधीनां या नात्यन्तकुत्सिता दशा सा काव्ये नाट्ये च दर्शनीया । यदि वा तादृश्यां दशायां स्वजीवितनिन्दात्मिकायां तद्देहोपभोगसाररत्यात्मकास्थाबन्धादि विच्छिद्यत एवेति कुत्सितदशाया असंभव एव । विकृतकेशबन्धवेषनर्तनगत्यनुकरणभूषणन्यासोद्घट्टनादिविभावो नासौष्ठकपोलस्पन्दननेत्रविकाशमुखरागपार्श्वग्रहणाद्यनुभावस्त्रपावहित्थनिद्रादिव्यभिचारी हासो हास्यः । स आत्मस्थ उत्तममध्यमाधमेषु स्मितविहसितापहसितैस्त्रिधा । तत्र कपोलोल्लासमात्रमदृश्यदन्तं स्मितम् । मधुरस्वनं सास्यरागं कालागतं विहसितम् । निर्हेतुकं साश्रुनेत्रं कम्पितांसशिरस्कमपहसितम् । एतेषां स्मितादीनां क्रमेण संक्रमणजैर्हसितोपहसितातिहसितैः परस्थमपि त्रेधा । उपहसितातिहसितयोरुपसर्गभेदेनार्थभेदः । उत्फुल्लास्यनेत्रं विकासिगण्डं किंचिद्दृश्यदन्तं हसितम् । उत्फुल्लनासं विजिह्मनिरीक्षणं निकुञ्चितांसशिरस्कमुपहसितम् । ससंरम्भाश्रुनेत्रमुद्धतं सशब्दं सकराघातमतिहसितम् । अयं भावः—परं हसन्तं दृष्ट्वा स्वयं विभावानपश्यन्नपि हसल्लोँके दृष्टः । तथा विभावदर्शनेऽपि गाम्भीर्यात्कोऽपि न हसति । परहासेक्षणे च तत्क्षणं हसति । यथाऽम्लदाडिमादिरसास्वादोऽन्यत्रापि दन्तोदकविकारानुरूपदर्शनात्संक्रमणस्वभावस्तथा हासोऽपि संक्रामति नान्ये रसाः । यस्तु स्वामिशोकाद्भृत्यस्य शोकः सोऽन्य एव शोकवत्स्वामि-

१ ख. °धुरं सरव° ।

विभावको विभावभेदात् । इह च तद्विभावक एव हासः संक्रामतीत्यर्थः। इष्टानिष्टवियोगसंयोगविभावो निःश्वासमुखशोषाश्रुपातभूलुण्ठनक्रन्दाद्यनुभावो निर्वेददैन्यविषादमरणादिव्यभिचारी शोकः करुणः । दारापहारदेशजातिविद्यानिन्दाक्रोशादिविभावो नेत्रराग भ्रुकुटीकरणदन्तोष्ठग्रहणाद्यनुभाव औग्र्यावेगामर्षादिव्यभिचारी क्रोधो रौद्रः । विपक्षागतनयासंमोहाध्यवसायप्रतापविक्रमाधिक्षेपादिविभावः स्थैर्यधैर्यगाम्भीर्यत्यागाद्यनुभावो धृतिस्मृतिगर्वामर्षादिव्यभिचार्युत्साहो वीरः । स च त्रेधा धर्मदानयुद्धभेदात् । धर्मादित्रयं तु विपक्षगतं सद्विभावरूपं स्यात् । स्वपक्षगतं त्वनुभावरूपमिति । इह च विपत्पङ्कनिमग्नतास्वल्पसंतोषमिथ्याज्ञानान्यपास्य यस्तत्त्वनिर्णयरूपोऽसंमोहाध्यवसायः स एवोत्साहहेतुः प्राधान्येन । रौद्रे तु ममताप्राधान्यादशास्त्रितानुचितयुद्धाद्यपीति मोहविस्मयप्राधान्यमिति विवेकः । पिशाचादिविकृतस्वरश्रुतितदृष्टिशून्यगृहारण्यगमनादिविभावं करहृत्पादकम्पमुखशोषमालिन्याद्यनुभावं शङ्कादैन्यादिव्यभिचारि स्त्रीनीचादीनां सहजमुत्तमानां कृतकं भयं भयानकः। उत्तमा हि भयाभावेऽपि गुरुराजादिभ्यो भयं दर्शयन्तः सुतरामुत्तमाः स्युः । प्रभुभक्तिश्च सचिवादीनाम् । यथा स्वेच्छाचारी भीत एवास्मीति । ननु राजादयः किमिति गुर्वादिभ्यो भयं कृतकं दर्शयन्तो मृदून्करकम्पादीन्दर्शयन्ति । किमिति च भय एव कृतकत्वम् । सर्वस्य हि कृतकत्वं संभवति । यथा वेश्याऽर्थार्थिनी कृतकां रतिं स्पष्टयति । उच्यते । भये हि दर्शिते गुरुर्विनीतं मन्यते । मृदुचेष्टया च नाधमप्रकृतिमेनं गणयति । कृतकरत्यादेश्चोपदिष्टान्न किंचित्फलम् । यत्र तु राजा परानुग्रहाय क्रोधविस्मयादीन्दर्शयति तत्र व्यभिचारितैव तेषां न स्थायितेति । वमनव्रणपूतिविष्ठाकृमिकीटादिदर्शनश्रवणादिविभावा गात्रसंकोचहृल्लासनासाविकूणनपिधानथूत्काराद्यनुभावा मोहापस्मारौग्र्यादिव्यभिचारिणी जुगुप्सा बीभत्सः । दिव्यविमानमायेन्द्रजालावदातकर्मेप्सितावाप्तिप्रभृतिविभावो निर्निमेषाक्षिविकासरोमाञ्चप्रीत्यश्रुसाधुवादप्रसाददानाद्यनुभावो हर्षावेगजाड्यादिव्यभिचारी विस्मयोऽद्भुतः । भावयन्ति व्याप्नुवन्ति सभ्यानां मन इति भावाः । यद्वा लोकोत्तरवाचिकाद्यभिनयैश्चित्तवृत्तय एव भावयन्ति लोकदशायामनास्वाद्यमथाऽऽ-

स्पष्टम् ।

व्यभिचारिणो ब्रूते—

निर्वेदग्लानिशङ्काख्यास्तथाऽसूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ ३१ ॥

---

स्वार्थं स्वीकुर्वन्तीति भावाः स्थायिनो व्यभिचारिणश्च । जात एव हि जन्तुरष्टाभिः संविद्भिर्युज्यते । तथा हि । दुःखद्वेषी सुखलुब्धः सर्वो रिरंसते हसति च शङ्कया शोचति परस्मै कुप्यति हितायोत्सहते बिभेति परं जुगुप्सते तत्तत्स्वपरकर्तव्यवैचित्र्यदर्शनाद्विस्मयते च । केवलं कस्यचित्काचिदधिका चित्तवृत्तिः काचिदूना । कस्यचिदुचित-विषयनियन्त्रिता कस्याप्यन्यथा । तत्काचिदेवोपयोगिनीत्युपदेश्या । तद्विभागकृतश्चोत्तमादिव्यवहारः । के त्वमी व्यभिचारिणस्ते रसायनमुप-युक्तवतो ग्लान्यालस्यश्रमप्रभृतयो जन्ममध्ये न भवन्त्येव । यस्यापि वा विभावबलाद्भवन्ति तस्यापि हेतुक्षये क्षीयमाणाः संस्कारशेषतां नावश्यमनुबध्नन्ति । रत्यादयस्तु कृतस्वकर्तव्यतया प्रलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते । वस्त्वन्तरविषयस्य रत्यादेरनुच्छेदात् । तस्मात्स्थायिभावरूपचित्तवृत्तिसूत्रस्यूना एवामी स्वमुदयास्तमयवैचित्र्य-शतसहस्रधर्माणं लभमानाः स्थायिनं विचित्रयन्तो भवन्तीति व्यभिचा रिणः । ग्लानोऽयमित्युक्ते कुत इति हेतुप्रश्नेनास्थायिताऽस्य सूच्यते । न तु राम उत्साहशक्तिमानित्यत्र च हेतुप्रश्नमाहुः । अत एव विभावा-स्तत्रोद्बोधकाः सन्तः स्वरूपोपरञ्जकत्वं कुर्वाणा रत्युत्साहादेरुचितानु-चितत्वमावहन्ति । न तु ते तदभावे स्थायिनः सर्वथैव निरुपाख्याः । वासनात्मतया तेषां स्थितत्वात् । व्यभिचारिणां स्वविभावाभावे नामापि नास्ति । तथैषां विभावबहुत्वे स्थायित्वम् । तदल्पत्वे तु व्यभिचारि-त्वम् । यथा रावणादौ मिथः प्रीत्यभावाद्रतिर्व्यभिचारिणी । तथा गुर्वादिषु च वीरशृङ्गारादौ रोषो व्यभिचार्येव । एवं विभावान्तरेषु वाच्यम् ।

निर्वेदेत्यादि । निर्वेदः स्वावज्ञा । ग्लानिर्बलापचयः । शङ्काऽनि-ष्टोत्प्रेक्षा । असूयाऽक्षमा । प्रीतिसंमोहसंभेदो मदः । खेदः श्रमः । कार्ये-

व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ ३२ ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ॥
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताभिधानार्थम् । तेन

---

त्वनादर आलस्यम् । दैन्यमनौजस्यम् । चिन्ता ध्यानम् । मोहो मूढता । स्मृतिः स्मरणम् । धृतिः संतोषः । व्रीडा मनःसंकोचः । चपलता चेतोनवस्था । हर्षश्चित्तप्रसत्तिः । आवेगः संभ्रमः । जडताऽप्रतिपत्तिः । गर्वः परावज्ञा । विषादश्चित्तपीडा । औत्सुक्यं विलम्बाक्षमत्वम् । निद्रा मनःसंमीलनम् । अपस्मार आवेशः । सुप्तं निद्रागाढावस्था । विबोधो विनिद्रता । अमर्षः प्रतिकर्तुमिच्छा । अवहित्थमाकारगोपनम् । उग्रता चण्डत्वम् । मतिरर्थनिर्णयः । व्याधिर्मनस्तापः । उन्मादो मनोविप्लवः । मरणं म्रियमाणता । त्रासश्चित्तचमत्कारः । वितर्कः संभावनम् । त्रयस्त्रिंशदिति नियमार्थम् । तेनान्येऽत्रैवान्तर्भवन्ति । तथा हि । दम्भोऽवहित्थे । उद्वेगो निर्वेदे । क्षुत्तृष्णादि ग्लानाविति । अन्ये त्वेवमाहुः— त्रयस्त्रिंशतैव स्थायी चर्वणायोग्यः सामाजिके त्रयस्त्रिंशदुक्ताः । एषां विभावानुभावाः स्वयमूह्याः । न तु व्यभिचारिणः । अत्र तदास्वादे रसान्तरमपि स्यात् । यत्रापि व्यभिचारिणि व्यभिचार्यन्तरं स्याद्यथा पुरूरवस उन्मादे वितर्कचिन्तादि तत्रापि रतिभावस्यैव व्यभिचार्यन्तरयोगः स वितर्कादिः केवलमुन्मादेन कृतोपराग इति । एते च मिथः क्वापि विभावानुभावा भवन्ति । तथा हि गर्व आवेगजो-सूयाकृदित्यादि ।

निर्वेदस्येति । आदौ न्यासः स्थायिनामन्ते नैकट्येन सामीप्यार्थम् । तेनेति । वैराग्यतत्त्वज्ञानसर्वज्ञानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रेक्षणाद्यनुभावो धृतिस्मृत्यादिव्यभिचारी निर्वेदस्थायिभावः

शान्तः । न चायं विषयजुगुप्सारूपत्वाद्बीभत्सः । जुगुप्सा ह्यस्य व्यभिचारिणी न तु स्थायितामेति । तस्या निर्वाहे मूलोच्छेदात् । न च धर्मवीरः । अहमेवंविध इत्येवं प्राणोत्साहरूपतया तस्य गर्वमयत्वेन व्यवस्थानात् । अस्य च गर्वप्रशमैकरूपत्वात् । ईहामयत्वनिरीहत्वाभ्यां विरुद्धयोरपि तयोरैक्यक्रमेण कामार्थधर्मार्जनोपयोगेन तुल्यरूपत्वादविरुद्धयो रौद्रवीरयोरप्यैक्यप्रसङ्गः । धर्मवीरादीनां चित्तवृत्तीनां सर्वथा निरहंकारत्वे शान्तरसत्वमितरथा तु वीररसत्वमिति व्यवस्थायां न कश्चिद्दोषः । तस्माद्यथा धर्मार्थकामेषु योग्या रत्यादिचित्तवृत्तयः कविनटव्यापारेणाऽऽस्वाद्यतां नीतास्तादृग्हृदयसंवादवतः सभ्यान् प्रति रसत्वं यान्ति तथा मोक्षाख्यपरार्थोचिताऽपि निर्वेदरूपा चित्तवृत्ती रसतां यातीति । तथा ह्यस्य निर्वेदस्थायिनो लौकिकरत्यादिलोकोत्तरशृङ्गारादिरूपा चित्तवृत्तिः सर्वाऽपि व्यभिचारिणी । तदनुभावा एव च यमनियमाद्युपकृता अनुभावा विभावा अपि सर्वज्ञानुग्रहादयः । प्रत्यङ्मुखाश्च रत्यादयोऽत्राऽऽस्वाद्यन्ते । परं यथा विप्रलम्भ औत्सुक्यं संभोगेऽपि वा प्रेमासमाप्तोत्सवमिति । यथा च रौद्रवीरभयानकाद्भुतेषु क्रमेणौग्र्यधृतित्रासहर्षव्यभिचारिणोऽपि प्राधान्येन भान्ति तथा शान्ते जुगुप्सा । सर्वथा रागविपक्षत्वात् । स्वात्मनि च कृतकृत्यस्य परार्थ एवोद्यम इत्युत्साहोऽस्य परोपचिकीर्षाप्रयत्नरूपो दयापरपर्यायोऽभ्यधिकोऽन्तरङ्गः । अत एवान्ये दयाधर्मवीरत्वाभ्यामेनमूचुः । ननूत्साहो गर्वप्राणः । शान्तस्तु गर्वशैथिल्यात्मा । ननु किमतः । व्यभिचारित्वं हि विरुद्धस्यापि नायोग्यम् । रताविव निर्वेदादेः । परोपकारक्रियायामुत्साहस्यैव प्रकर्षः । न चोत्साहशून्या काऽप्यवस्था । इच्छाप्रयत्नव्यतिरेकेण पाषाणतापत्तेः । यत एव शान्तात्मा तत्त्वज्ञतया स्वात्मोद्देशेन कार्यविमुखोऽत एव परोपकाराय शरीरादि त्यजति । चिन्तयति चैवं यथा कथंचित्त्याज्यं शरीरं यदि परार्थे तत्त्यज्यते तत्किमिव नार्जितं स्यात् । तदिदं तत्त्वज्ञतया शान्तात्मा परार्थे निराकाङ्क्षतया शरीरादि त्यजति । अत एव युद्धे वीरः स्वदेहत्यागं पराजयोद्देशेन कुर्वाणो न शान्तात्मा । भृग्वादिपात्यपि शुभान्यदेहसाकाङ्क्षः पूर्वदेहत्यागेऽपि न तथा । तदत्र दयारूपोऽभ्युत्साहः प्रधानम् । अन्येऽपि व्यभिचारिणो यथायोगं स्युः । ननु नायं सर्वस्य श्लाघास्पदम् ।

निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।

यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः॥ ४५॥

रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः॥३५॥
भावः प्रोक्तः।

---

तत्कथं रसः। तर्हि मुनीनां शृङ्गारोऽपि न श्लाघ्य इति सोऽपि रसत्वा-च्च्यवताम्। यैरपि तृष्णाक्षयरूपस्थाय्यसावुक्तस्तन्मते तृष्णाक्षयो भाव इत्यायातम्। तदभावेऽपि तु रत्यादिचित्तवृत्तीनामप्यभावः। तृष्णाधि-कारत्वात्तासाम्। एतच्चित्तवृत्त्यभाव एव यदि शमस्तदा शमस्य चित्त-वृत्तित्वाभावः। अभावस्यावस्तुत्वात्। अथाधर्म इत्यत्र धर्मविरोधि पापं लभ्यते न धर्माभावो यथा तथाऽत्र तृष्णारत्याद्यभावो रत्यादिचित्तवृत्ति-विरोधी चित्तवृत्तिविशेषः, तदाऽस्मन्मते तस्य निर्वेद इति नाम त्वन्मते तु शम इति। अधिकत्वेन तु शान्तो रसो न निबध्यत इति चन्द्रिका। तदेवं नवैव रसाः। पुमर्थोपयोगेन रञ्जनाधिक्येन चोपदेश्यत्वात्। तेनाऽऽर्द्रतास्थायी स्नेहो रसः, गर्धस्थायि लौल्यं रस इत्यसत्। तयोः क्रमेण रत्यादौ हास्यरत्यादौ चान्तर्भावात्। तथा हि। तरुणस्य मित्रे स्नेहो रतौ। लक्ष्मणादेर्भ्रातरि स्नेहो धर्मवीरे। बालस्य मित्रादिषु वृद्धस्य पुत्रादिषु स्नेहो भये विश्रान्तः। तदिदमत्र तात्पर्यम्—स्नेहो भक्तिर्वात्सल्यं मैत्र्याबन्ध इति रतेरेव विशेषाः। तुल्ययोर्या मिथो रतिः स स्नेहः। प्रेमेति यावत्। तथा तयोरेव निष्कामतया मिथो रतिः सा मैत्री। अवरस्य वरे रतिर्भक्तिः। सैव विपरीता वात्सल्यम्। सचेतना-नामचेतने रतिराबन्ध इत्यादि स्वयमूह्यम्। विस्तरविचारस्तु कोहललो-चनादिग्रन्थादिषु ज्ञेयः।

कान्ताविषया रतिः शृङ्गारो देवादिविषया व्यक्ता सती भावो व्य-भिचारी चेत्याह—रतिरिति।

आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया । कान्ताविषया तु व्यक्ता शृङ्गारः । उदाहरणम्—

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥ ४६ ॥
हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥४७॥

एवमन्यदप्युदाहार्यम् । अञ्जितव्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुर. ।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रिया
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ४८ ॥

अत्र विधिं प्रत्यसूया ।

तदाभासा अनौचित्यप्रवर्तिताः ।

तदाभासा रसाभासा भावाभासाश्च । तत्र रसाभासो यथा—

स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ॥
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बला-
त्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ ४९ ॥

अत्रानेककामुकविषयमभिलाषं तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति । भावाभासो यथा—

---

जाने इति । अत्र गन्तुं प्रवृत्तेत्यर्थौचित्यादाश्वासयामीत्यत्राऽऽश्विति भिन्नं व्याख्येयम् । गच्छन्त्या हि प्रागासनं पश्चादाश्वासनं युक्तम् । शठेनेत्यर्थसाहाय्यादन्यपदार्थानां व्यञ्जकत्वम् ।

स्तुम इति । विलेभे व्ययितवानिति । अत्रानेकेति । स्तुमः कमित्याद्यनुगतमेव स्त्रीविषयं रमणमृगणालिङ्गनध्यानरूपं बहुव्यापारग्रहणं कर्तृ बहुकामिविषयं प्रेम व्यनक्ति । तच्च प्रेमानुचितम् । अन्योन्यास्थाबन्धात्मिकाया रतेः शृङ्गारत्वप्रतिपादनात् ।

राकासुधाकरमुखी तरलायताक्षी
सस्मेरयौवनतरङ्गितविभ्रमास्या ।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥ ५० ॥

अत्र चिन्ता, अनौचित्यप्रवर्तिता । एवमन्येऽप्युदाहार्याः ।

**भावस्य शान्तिरुदयः संधिः शबलता तथा ॥ ३६ ॥**

क्रमेणोदाहरणानि—

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
संश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥ ५१ ॥

अत्र कोपस्य ।

---

राकेति । अत्र स्मेरयौवनेन तरङ्गितविभ्रमा आस्यावस्थानं यस्याः सा तथा । न तु तरङ्गितविभ्रममास्यम् । पौनरुक्त्यात् । त्यदो वा स्येति रूपम् । अत्र चिन्तेति । अत्र नार्याः परपत्नीत्वाच्चिन्ताऽनौचित्यप्रवृत्ता । नन्वेकपाक्षिक्या रतेः सद्भावाद्रसाभासत्वं वक्तुं युक्तं न भावाभासत्वम् । न । चिन्ताविभावानां प्राधान्येन तस्या एव चमत्कारकारित्वात् । प्रधानेन च व्यपदेशो भवतीति भावाभासत्वम् । अयं भावः—यद्यपि रसेनैव काव्यं जीवति तथाऽपि तस्य रसयनानाद्रव्यजपानकस्येवैकघनास्वादात्मनोऽपि कुतश्चिदंशाद्भावादिरूपादुद्रिक्तावस्थामापन्नाच्चमत्कारातिशयो भवति यदा तदा भावादिध्वनिरेव । यदा तु विभावाभासाद्रत्याद्याभासस्तदा विभावानुभावाभासाच्चर्वणाभास इति रसाभासः । एवं भावाभासोऽपि । रसध्वनेरेवामी रसभावाभासभावध्वनिप्रभृतयो निष्पन्दा आस्वादप्रधानं प्रयोजकमंशं विभज्य पृथग्व्यवस्थाप्यन्ते । यथा पानकयुक्तिज्ञैरेकसंमूर्छितरसोपभोगेऽपि सुपरिशुद्धद्राक्षादिप्रयुक्तोऽयं रस इति तथा निरिन्द्रियलतातरुनदीशैलादेः सेन्द्रियपश्वादेश्च यः काव्ये कामादिव्यवहारस्तत्र रसभावाभासतैव । एवमन्येऽपीति । रसाभासा भावाभासाश्चेत्यर्थः ।

तस्या इति । स्तनतटस्य प्रश्लेषेण या मुद्रा प्रतिबिम्बं तयाऽङ्कितम् ।

एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ५२ ॥

अत्रौत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ॥
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥ ५३ ॥

अत्राऽऽवेगहर्षयोः संधिः ।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ॥
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥ ५४ ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।

---

अन्यदपि यद्वस्तु मुद्राङ्कितं तत्केनापि व्याजेन रक्ष्यत इत्युक्तिलेशः । अत्र स्त्रीकोपस्य शान्तिः ।

एकस्मिन्निति । अत्र कोपेन पराङ्मुखी चासौ ग्लपिता च । सुप्त इव प्रार्थनाविमुखः । अत्र स्त्रीगतौत्सुक्यस्योदयः ।

उत्सिक्तेति । गर्वात्तपोविक्रमयोरुत्कर्षसंभावना । सत्सङ्गप्रियता तपोनिधित्वात् । वीररभसोल्लासश्च पौरुषनिधित्वात् । पूर्वस्मिन्नर्धे आवेगः । अपरस्मिन्हर्षः । तयोः संधिः । द्वयोर्विरुद्धयोः स्पर्धिभावेनोपनिबन्धः । तुल्यतया मिथो न बाध्यतयाऽवस्थितिः । अत एव च प्रियता चोत्फालश्चेति चकारद्वयम् ।

क्वाकार्यमिति । अत्र किंशब्दः कुत्सार्थः प्रश्नार्थश्चाऽऽवृत्त्या व्याख्येयः । यथाऽत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने मिथो बाध्यबाधकतया तिष्ठन्ती चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानं शबलता-

भावस्थितिस्तूक्ता । उदाहृता च जाने कोपपराङ्मुखीत्यादिना ।

मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदाचन ।

ते भावशान्त्यादयः । अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत् ।

अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ॥ ३७ ॥

शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूप—व्यङ्ग्य उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः । तत्र—

अलंकारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥

प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ।

वस्त्वेवेत्यनलंकारं वस्तुमात्रम् । आद्यो यथा—

उल्लास्य कालकरवालमहाम्बुवाहं देवेन येन जरठोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥५५॥

---

दीनां शबलतेति योगः । भावस्थितिरिति । रतिर्देवादीत्यत्र भावस्य स्थितिरेव केवलोक्ता न शान्त्यादिविशेषणविशिष्टा ।

ननु मुख्यस्य रसस्यैवाङ्गित्वं वक्तुं युक्तम् । तत्कथं भावप्रशान्त्यादीनां तदुक्तमित्याह—मुख्ये रसेऽपीति ।

अलक्ष्यक्रममुक्त्वा संलक्ष्यक्रमं त्रिधा ध्वनिमाह—अनुस्वानाभेति । वाच्योऽर्थो घण्टास्वानायते व्यङ्ग्यस्त्वनुरणनायत इति स्थितया व्यङ्ग्यमनुरणनरूपम् ।

तत्रेति । तेषु मध्ये शब्दमूलमाह—अलंकार इति । प्रधानत्वेनेति । शब्दस्य मुख्यतया व्यञ्जकत्वमर्थस्य तु सहकारितयेति भावः । वस्त्वेवेति । रसस्यालक्ष्यक्रमत्वेन पूर्वमुक्तत्वाद् वस्तुनश्च लक्ष्यक्रमत्वेनात्राभिधीयमानत्वादलंकार एव व्यवच्छेद्यतयाऽवशिष्यते । अतोऽनलंकारमित्युक्तम् । उल्लास्येति । शत्रुविषये संतापकृत् प्रसिद्धिः प्रतापः । अत्र राजवर्णनप्रस्तावान्नियमिताभिधाः कालादिशब्दा एकमेवार्थमुक्त्वा सार्थकाः । अनन्तरं त्वर्थान्तरप्रतीतिः शब्दोत्थध्वननादेवेति मेघवृत्तान्तरूपवस्तुध्वनित्वम् । यदा तु ध्वन्यवाच्यार्थयोर्वाक्यस्यासंबद्धार्थाभिधायकत्वमित्यादिनयेन मिथः संगतिः स्यात्तदाऽलं-

अत्र वाक्यस्यासंबद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो मधुरलीलः।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान्॥ ५६॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः।

---

कारध्वनित्वमपि। अयं भावः—सादृश्यरूपेणार्थसामर्थ्येन द्वितीयाभिधैव प्रतिप्रसूयते। ततश्च द्वितीयोऽर्थ उच्यत एव न ध्वन्यते। तदनन्तरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्रकृतेन साकं या रूपणा सा तावद्ध्वनात्येव[1]। न चान्यतः सा शब्दादिति ध्वननव्यापारात्तत्राभिधानशक्तेः कस्याश्चिदनाशङ्क्यत्वादिति। प्रकृताप्रकृतवाक्यार्थयोः साम्यम्। देवो देव इवेति रूपं ध्वन्यते। अत्र पक्षे पदैः प्रस्तावनियमितैर्मेघवृत्तान्तोचिताः पदार्था उच्यन्ते। ततः प्रस्तावस्य शब्दशक्त्या वाक्योपपत्तिसहायया न्यक्कृतिर्जायते। ततो मेघवृत्तान्तोचितवाक्यार्थद्वयस्य साम्यं व्यञ्जनव्यापारात्। यदा तु पदसमूह एव शब्दशक्त्या मेघवृत्तान्तं व्यनक्तीति वाक्यार्थस्तदा वस्तुध्वनिरेव। अलंकारध्वनिपक्षे श्लेषार्थाक्षिप्तो न शब्दोपारूढ इति साम्यध्वनिरेवेति न श्लेषविषयता। यदा तु प्रस्तावादिनियमो न स्यात्तदा द्वयोरप्यर्थयोर्वाच्यत्वे श्लेषालंकार एव न शब्दोत्थवस्त्वलंकारध्वनित्वम्। देवेनेति एकत्र प्रस्तावात्त्वया। अन्यत्रेन्द्रेण। इन्द्रो वै वर्षतीति। एवं भद्रात्मन इत्यादिष्वपि।

तिग्मरुचिरिति। अत्र समासे सत्यैकपद्यं विरोधत्यागश्च। असमासे तु द्विपदत्वं विरोधश्च। तथाहि—यस्तिग्मरुचिः सूर्यः स कथमप्रतापः। यो विधुश्चन्द्रः स कथमनिशाकृत्। यश्च मधुश्चैत्रः स कथमलीलः। यश्च मतिमान्स कथमतत्त्ववृत्तिः। यश्च प्रतिपत्स कथमपक्षाग्रणीः पक्षस्यानादिः। जनं विधुरयन्तीति विधुरा रिपवः। तेषां निशाकृन्मृत्युकृत्। मतौ माने तत्त्वे च तानि वा मतिमानं तात्त्विका वा वृत्तिर्यस्य। प्रतिपदं प्रतिप्रयोजनं पक्षस्य निजस्य।

---

[1] क. ॰वद्ध्वनत्य॰।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितः सहितः साधुयशोभिरसतामसि ॥ ५७ ॥

अत्रापि विरोधाभासः ।

निरुपादानसंभारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ५८ ॥

अत्र व्यतिरेकः । अलंकार्यस्यापि ब्राह्मणश्रमणन्यायेनालंकारता ।

वस्तुमात्रं यथा—

पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५९ ॥

अत्र यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति व्यज्यते ।

---

अमित इति । समितः संग्रामात्प्राप्तैरुत्कर्षैररहितानां हर्षदः प्रीतिच्छेदी । अत्र दृष्टान्तद्वयेऽपि द्योतकस्यापिशब्दादेरभानाद्विरोधो व्यङ्ग्यः । अत्र भिन्नयोरेव पदार्थयोर्विरोध इति पूर्वोदाहरणाद्भेदः ।

निरुपादानेति । उपादानं वर्णकादि । अभित्तौ निराश्रयत्वाच्चित्रं विचित्रमालेख्यम् । कला शिल्पं चान्द्री च । अत्र तु शब्दादेर्द्योतकस्याभावाद्व्यतिरेको व्यङ्ग्यः । अलङ्कार्यस्यापीति । अन्यत्रालंकारतया दृष्टत्वाद्व्यङ्ग्यत्वेऽलंकार्याणामप्यलंकाराणामलंकारव्यपदेशः । पूर्वप्रत्यभिज्ञानबलात् ।

पन्थि अ इति । तृणादिशय्या स्रस्तरः । मणं मनागपि उन्नतं पयोधरं मेघं प्रेक्ष्य स्रस्तराद्यभावेऽपि यदि वससि तद्वस । अत्र स्रस्तरनिषेधप्रस्तरोन्नतपयोधरादिशब्दशक्तिजं प्रहरचतुष्टयोपभोगान्नात्र निद्रातुं लभ्यत इति सर्वे ह्यत्राविदग्धा इति तदुन्नतपयोधरां मामालोक्योपभोक्तुं यदि वससि तदाऽऽस्स्वेति च वाक्यव्यङ्ग्यम् । व्यङ्ग्यमुपभोगक्षमोऽसीत्यनेन क्रोडीकृत्य दर्शयति—अत्र यद्युपभोगेति । वाच्यबाधेन च व्यङ्ग्यस्य स्थितत्वात्तयोर्मिथोऽसंगतया नोपमानोपमेयभाव इति नालंकारो व्यङ्ग्यः । किं तु वस्त्वेव । 'पन्थिअ ण एत्थ सत्थरअमथि मणं पत्थरत्थले गामे' इति पाठे तु सत्थरअं शस्त्ररतम् । यदि वा शास्त्रोक्तं च तद्रतं च शास्त्ररतं नास्ति । ग्राम्याणामविदग्धत्वादिति पाठे चायं

---

१—पथिक नास्ति स्रस्तरमत्र मनाक्प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं दृष्ट्वा यदि वससि तदा वस ॥

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ६० ॥

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुत इति व्यत्ययेन ध्वन्यते ।

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥ ३९ ॥
प्रौढोक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा ।
वस्तु वाऽलंकृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥
वस्त्वलंकारमथवा तेनायं द्वादशात्मकः ।

इदंप्रथमकल्पितः स्वतः संभवी चेति द्विविधोऽर्थः । तत्र स्वतः संभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः । कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः कविनिबद्धेन वा वक्त्रेति द्विविधोऽपर इति त्रिविधः । वस्तु वाऽलंकारो वाऽसाविति षोढा व्यञ्जकः । तस्य वस्तु वाऽलंकारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः । क्रमेणोदाहरणानि—

---

गुणः । श्लिष्टशब्दानां बहुत्वाद्वाक्यत्वे वाक्यप्रकाश्यत्वम् । पत्थरत्थल इत्युक्त्या एकान्तसूचनाऽपि ।

व्यत्ययेनेति । शनिरशनिरित्यादिरूपेण शब्दद्वारकेणैव कार्यं निहननभानात्मकं त्वदनुवर्तनार्थमिवेत्युत्प्रेक्षाऽनुगृहीतं वस्तुस्वभावं कुरुत इति व्यज्यते । अशनिर्वज्रम् । अनुदारोऽनुगतदारोऽपि । चकारश्चात्र विरोधवाचीति विरोधो वाच्य एव न तु व्यङ्ग्य इत्याकूतेन वस्तुध्वनौ द्वितीयमुदाहरणम् ।

तेनोम्भितस्य वेति । तेन कविनोम्भितस्य निबद्धस्य वक्तुः । इदंप्रथमकल्पित इति । अयं प्रथमः स चासौ कल्पित इति इदंप्रथमकल्पितः कविब्रह्मसृष्ट इत्यर्थः । तत्र स्वत इति । ज्ञापकत्वात्प्रागनुक्तोऽपि स्वतःसंभवी पूर्वं व्याख्यातः । सूत्रक्रमापेक्षया वा प्रथमं व्याख्यातः । अपर इति । इदंप्रथमकल्पितः । इह प्रौढोक्तिनिर्मितत्वमात्रेणैव साध्यसिद्धेरन्त्यभेदद्वयकथनं प्रपञ्चार्थम् । यतः स्वतःसंभव्यप्यर्थः कविप्रौढोक्त्यैव जीवति कविप्रौढोक्तिरेव च तन्निबद्धप्रौढोक्तिरिति ।

अरसिरोमणिधुत्ताणमग्गिमो पुत्ति धणसमिद्धिमओ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ॥ ६१॥

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि॥ ६२॥

अत्र त्वमधन्याऽहं तु धन्येति व्यतिरेकालंकारः।

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः॥ ६३॥

अत्रोपमालंकारेण सकलरिपुबलक्षयः क्षणात्करिष्यत इति वस्तु।

---

अरसेति। समृद्धिमयः समृद्धिमदो वा। अन्यासामप्रौढस्त्रीणां नीरसोऽपि मम चातुर्याद्वशीभूत इत्यभिप्रायः। अत्र गाथावस्तुना ममैव भोग्य इति वस्तु व्यज्यते।

धन्याऽसीति। हे सख्यः शपामि शपेऽहम्। अत्र शपामीति शप इवाऽऽचरामीति व्युत्पत्तिः। यद्वा स्वमित्यध्याहारेणाऽऽक्रोशामीत्यर्थः। अन्यथा परस्मैपदं चिन्त्यम्। रतान्तराणि रतविशेषाः। सख्य इति धन्याऽसि येत्यत्रार्थासंगत्यालोचने सख्याः शपामीति युक्तः पाठः। सख्या इति षष्ठ्यन्तम्। यदि वा सखि आ इति भिन्नं व्याख्येयम्।

दर्पान्धेति। कुम्भ एव कपटानां कूटः समूहः कूटानि चोन्नतप्रदेशाः। तेषु संक्रान्तेन संक्रमणेन यन्निघ्नं खड्गस्य परवशं घनशोणितं तेन शोणशोचिः। उपमालङ्कारेणेति। विशेषणबलसमुत्थेनेति शेषः। तेन वाक्यवाच्यत्वं लभ्यते।

---

१—अलसशिरोमणिर्धूर्तानामग्रिम· पुत्रि धनसमृद्धिमयः।
इति जल्पितेन नताङ्गी प्रफुल्लविलोचना जाता॥

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ६४ ॥

अत्र विरोधालंकारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्तताम् इति तद्बुद्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा चेति । एषूदाहरणेषु स्वतःसंभवी व्यञ्जकः ।

कैलासस्य प्रथमशिखरे वेणुसंमूर्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ६५ ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिजननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ।

---

गाढेति । अत्र यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति विरोधः । परं विरोधद्योतकाभावादस्य वाच्यता चिन्त्या । केचित्तु निजाधरमित्यत्रापिशब्दगर्भितत्वेन विग्रहं कुर्वाणा विरोधस्य वाच्यतामाहुः । परमयं समासः स्यान्न वेति स्वयमूह्यम् । व्याख्यान्तरमप्यस्ति । अत्राधरमोचनोक्तिभङ्ग्या शत्रवो व्यापादिता इति पर्यायोक्तालंकारो वाच्यः । विरोधस्तु व्यङ्ग्यः । मम क्षत्याऽपीति । अत्रापिशब्दः प्रश्नार्थे युक्तमेतदित्यर्थे वा लेशार्थे वा व्याख्येयः । निवर्ततामित्यादावेक इति शब्दः स्वरूपे द्वितीयः प्रकारे तृतीयः समाप्तौ ।

कैलासस्येति । प्रथमे प्रधाने । स्रस्तापाङ्गा वक्रीकृतनेत्रोपान्ताः । एवमादिबुद्धीति । न हि गजाः कीर्तिं बिसिनीत्वेन शङ्कन्ते । पशुत्वात् । तथाऽपि कविना प्रौढोक्त्या त्वत्कीर्तिं ते तथाऽऽशङ्कन्त इत्युक्तम् । त्वत्कीर्तिरित्यत्र त्वच्छब्दो न युक्तः पश्चात् । आन्तरागपूर्वं राज्ञोऽस्तूयमानत्वात् । अयं चार्थो यदीयामिति पदेन प्रतिष्ठितः । तत्कीर्तिरिति युक्तः पाठः ।

केसेसु[1] बलामोडिअ तेणअसमरम्मि जअसिरी गहिआ ।
जह कन्दराहिँ विहुरा तस्सदढं कण्ठअस्मि संठविआ ॥ ६६ ॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान्कण्ठे गृह्णन्तीत्युत्प्रेक्षा, एकत्र सङ्ग्रामे विजयदर्शनात्तस्यारयः प्रपलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलंकारो, न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान्कन्दरा न त्यजन्तीत्यपह्नुतिश्च ।

गाढालिङ्गणरहसुज्जुअम्मि[2] दइए लहुं समोसरइ ।
माणंसिणीण माणो पीलणभीरु व्व हिअआहिं ॥ ६७ ॥

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि तत्र विजृम्भत इति वस्तु ।

जा[3] ठेरं व हसन्ती कइवअणम्बुरुहबद्धविणिवेसा ।
दावेइभुअणमण्डलमण्णं विअ जअइ सा वाणी ॥ ६८ ॥

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगदजडासनस्था निर्मिमीत इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

---

केसेसु इति । बलामोडी बलात्कारः। विधुरा रिपवः । काव्यहेतुरिति । काव्यलिङ्गं नामालंकारः । अत्र ह्येकत्र रणे तद्विजयदर्शनं रिपूणां गुहावस्थाने वाक्यार्थतया हेतुः । तत इति । राज्ञः सकाशात् । कन्दरा इति । गुहाभिस्तेऽङ्गीकृता न तु नष्टाः । अत्र वस्तुनोत्प्रेक्षाकाव्यहेत्वपह्नुतिरूपालंकारत्रयं ध्वन्यत इति योगः ।

अत्रोत्प्रेक्षयेति । हृदयात्पीडनभीत इवेति रूपया । अयं भावः—यदि कामिनी प्रत्यालिङ्गनादि न कुरुते तदा कथं पीडनम् । तदभावे च न भीतत्वोत्प्रेक्षणम् । प्रत्यालिङ्गनादेश्च तस्या मानोऽपसृतः । मानापसरणकार्यत्वात्तस्य । तत्र तावदेतौ मत्तत्वान्मिथः स्वं पीडयतस्ततोऽहं किमित्यन्तराय इति भावः ।

व्यतिरेक इति । ब्रह्मा हि जडे जलजे स्थितः सद्मचमत्कारि पुराण

---

१—केशेषु बलामोडिअ तेन समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे स्थापिताः ॥

२—गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विनीनां मानः पीडनभीत इव हृदयात् ॥

३—या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।
दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

[1]जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई
फारुप्फुल्लफणावलीकवलणे पत्ता दरिद्दत्तणम् ।
ते एण्हिं मलआणिला विरहिणीणांसाससंम्पक्किणो
जादा झत्ति सिसुत्तणे विबहला तारुण्णपुण्णा विअ ॥ ६९ ॥

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

[2]सहि विरइऊण माणस्समज्झ धीरत्तणेण आसासम् ।
पिअदंसणविहलंङ्खलखणम्मि सहसत्ति तेण ओसरिअम् ॥ ७० ॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षा वा ।

[3]ओल्लोल्लकरअरअणक्खएहिँ तुह लोअणेसु मह दिण्णम् ।
रत्तंसुअं पसाओ कोवेण पुणो इमे ण अक्कमिआ ॥ ७१ ॥

---

जगन्निर्मिमीते । वाणी तु कविसचेतनवक्त्राब्जस्थिता पूर्वोक्तविपरीतं तद्दर्शयतीति भावः ।

किं किं न कुर्वत इति । वस्तु वस्तुना वृत्तोक्तेन व्यज्यते ।

सहीति । धैर्येण कर्त्रा मानविषयमाश्वासं मे कृत्वा कम्पादिना विशृङ्खलयति विशृङ्खले प्रियदर्शनक्षणे तेन विश्वासघातिनाऽपसृतम् । अकृतेऽपीति । प्रसन्नत्वस्य हेतौ प्रार्थनेऽकृतेऽपि तदुत्पत्तिरिति विभावना ।

ओल्लोल्लेति । आर्द्रार्द्रैः करजादिक्षतैः सपत्नीदत्तैः । अक्कमिआ । प्राकृतत्वात्पुंस्त्वम् । वहसीत्येवंरूपस्य प्रश्नस्य स्वयंगम्यस्य यद्गाथोक्तं वस्तु तदुत्तरतयोक्तमित्युत्तरालंकारः ।

---

१—ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-
स्फारोत्फुल्लफणावलीकवलने प्राप्ता दारिद्र्यत्वम् ।
त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव ॥

२—सखि विरचय्य मानस्य मम धीरत्वेनाऽऽश्वासम् ।
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ॥

३—आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम् ।
रक्तांशुक प्रसादः कोपेन पुनरिमे नाऽऽक्रान्ते ॥

---

१ क. °लेऽपि प्रि°

अत्र किमिति लोचने कुपिते वहसि, इत्युत्तरालंकारेण न केवलमार्द्रनखक्षतानि गोपयसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु ।

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अनुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥ ७२ ॥

अत्र हेत्वलंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो व्यञ्जकः । एवं द्वादश भेदाः ।

**शब्दार्थोभयभूरेकः ।**

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥ ७३ ॥

अत्रोपमा व्यङ्ग्या ।

**भेदा अष्टादशास्य तत् ॥ ४१ ॥**

अस्येति ध्वनेः ।

---

विशेषोक्तिरिति । अत्र मानहेतुभूते तनोस्तनूकरणेऽपि सा यत्तव हृदये न वर्तते न माति तत्कारणे सत्यपि कार्यानुत्पत्तिरिति विशेषोक्तिर्व्यङ्ग्या ।

अतन्द्रेति । चन्द्रौ स्वर्णकर्पूरावपि । समुत्सहर्षा । तारका कनीनिकाऽपि । श्यामे रात्रिस्त्रियौ । सानन्दं समुद कं पुरुषं सा श्यामा कमनिर्वचनीयमानन्दम् । अत्र यदि स्त्री प्रस्तुता रात्रिर्वा तदा द्वितीयोऽर्थो वस्तुरूपो व्यङ्ग्यः । ध्वन्यवाच्ययोश्च मिथःसंगत्योपमानोपमेयभाव उपमाऽपि । द्वयोर्वाच्यत्वे श्लेष एव न किंचिद्व्यङ्ग्यम् । अत्र चातन्द्रादिचन्द्रादिशब्दानामेकानेकार्थानां परावृत्तिसहासहत्वेन क्रमेणार्थशब्दप्राधान्यम् । तेनोभयमूलत्वम् । तथा चाऽत्र यद्यप्यर्थोऽपि व्यञ्जकस्तथाऽपि श्लिष्टशब्दशक्तिरेव व्यङ्ग्यमुन्मीलयति नार्थशक्तिरिति शब्दोत्थध्वनिरेव न द्व्युत्थ इति तत्त्वम् ।

भेदा इति । अविवक्षितवाच्यस्यार्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ

---

१—महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अनुदिवसमनन्यकर्मा अङ्गं तन्वपि तनयति ॥

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—

**रसादीनामनन्तत्वाद्भेद एको हि गण्यते ।**

अनन्तत्वादिति । तथाहि । नव रसाः । तत्र शृङ्गारस्य द्वौ भेदौ । संभोगो विप्रलम्भश्च । संभोगस्यापि परस्परावलोकनालिङ्गनपरिचुम्बनादिकुसुमोच्चयजलकेलिसूर्यास्तमयचन्द्रोदयषड्ऋतुवर्णनादयो बहवो भेदाः । विप्रलम्भस्याभिलाषादय उक्ताः । तयोरपि विभावानुभावव्यभिचारिवैचित्र्यम् । तत्रापि नायकयोरुत्तममध्यमाधमप्रकृतित्वम् । तत्रापि देशकालावस्थादिभेदा इत्येकस्यैव रसस्याऽऽनन्त्यम् । का गणना त्वन्येषाम् । असंलक्ष्यक्रमत्वं तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते ।

**वाक्ये द्व्युत्थः ।**

द्व्युत्थ इति । शब्दार्थोभयशक्तिमूलः ।

**पदेऽप्यन्ये ।**

अपिशब्दाद्वाक्येऽपि । एकावयवस्थितेन भूषणेन कामिनीव

---

द्वौ भेदौ । विवक्षितवाच्यस्यालक्ष्यक्रम एकः । तथाऽस्य[1] लक्ष्यक्रमस्य शब्दोत्थौ द्वौ । अर्थोत्था द्वादश । द्व्युत्थ एकः । एवमष्टादश ।

नायकयोरिति । नायकश्च नायिका च तयोस्तथा । अन्येषामिति । हास्यादीनाम् ।

द्व्युत्थ इति । द्वाभ्यामुत्था उत्थानं यस्य स तथा । सर्वं हि सावधारणं वाक्यं स्यादिति नयेन वाक्य एव द्व्युत्थ इत्यवधार्यम् ।

अन्य इति । सप्तदश । ननु भारती काव्यरूपा वाक्याद्व्यङ्ग्यं यस्या इति व्युत्पत्त्या वाक्यव्यङ्ग्या सती क्रियासमाप्त्या वाक्यपूर्णत्वे सति भाति । यतः काव्यविशेषो विशिष्टार्थप्रतीतिहेतुः संदर्भविशेषः । काव्यविशेषता च न पदप्रकाशत्वे घटते । पदानां स्मृतिहेतुत्वेनावाचकत्वादिति भावार्थः । तत्कथं पदद्योत्येन व्यङ्ग्येन भातीत्याह—एकावयवेति । यथा दीप एककोणस्थोऽपि सर्वं गृहं प्रकाशयति तथैवेदमिति । यथा श्रुतिदुष्टपेलवादिपदानामसभ्यार्थं प्रति न वाचकत्वं किं तु स्मारकत्वम् । तद्वशाच्च चारुरूपं काव्यं श्रुतिदुष्टमन्वयव्यतिरेकाभ्यां भागेषु

---

१ ख. नत्र ह्यत्र ।

रति = happiness.

पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते । तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणानि—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ ७४ ॥ ( १ )

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वादिभिरर्थान्तरसंक्रमितवाच्याः ।

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअअवअस्सबहुमआ णहु ववसाआ विमुज्झन्ति ॥ ७५ ॥ ( २ )

अत्र विमुह्यन्तीति ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरोपमम् ॥ ७६ ॥

---

व्यवस्थाप्यते । तथा प्रकृतेऽपि पदानां व्यञ्जकत्वमुखेन ध्वनिव्यवहारः । न च ध्वनिव्यवहारे व्यञ्जकत्वं प्रयोजकम् । व्यञ्जकत्वेन व्यवस्थानादिति भावः ।

यस्येति । अत्र द्वितीयमित्रशब्दोऽनुपयुज्यमानत्वाद्बाधितस्वार्थः स्वाभिधेयभूतार्थगामित्वरूपसंबन्धाद्विश्वसनीयतां लक्षयन्सर्वस्वरहस्यार्पणाख्यानादि ध्वनति । इयं शुद्धा सारोपा साध्यवसाना वा लक्षणा । तद्युक्तिश्च पूर्वोक्तमेघनादशब्दवत् । एवं द्वितीयशत्रुशब्दोऽपि नितरां यन्त्रणीयत्वं लक्षयन्निरुच्छ्वासतादि ध्वनति । एवमनुकम्प्यशब्दोऽपि स्नेहपात्रत्वं लक्षयन्सपत्प्रसादसंपादनादि ध्वनति । अत्रापि लक्षणा पूर्ववत् । एषोऽर्थान्तरसंक्रमितभेदः ।

हिअअ इति । हृदयमेव वयस्यस्तस्य बहुमताः । अत्र विमोहनं चेतनधर्मत्वाद्बाधितस्वार्थं चेतनगतास्खलितत्वादिसादृश्याद्व्यवसायांल्लक्षयदारब्धकार्यनिर्वहणादि ध्वनति । इयं गौणी लक्षणा, अत्यन्ततिरस्कृतभेदश्च ।

अलक्ष्यक्रमं भेदं वृत्तद्वयेनाऽऽह । लावण्यमिति । अत्रानुभवैकगोचरास्तदादिस्मारिता विभ्रमरूपा अर्था रसं व्यञ्जन्ति । स्मरणोल्लिखितं तल्ला-

---

१—खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते । यथा वा—

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७७॥ (३)

अत्र भीताननेति । एतेन हि नीचैःशंसनविधानस्य युक्तता गम्यते । भावादीनां पदप्रकाश्यत्वेऽधिकं न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृपभीम ॥७८॥ (४)

अत्र भीषणीयस्य भीमसेन उपमानम् ।

भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नाऽऽनन्दनिस्यन्दं विदधाति सदागमः ॥ ७९ ॥ ( ५ )

---

वर्ण्यादि सातिशयं रसस्य विभावना यातीति भावः । तदेति संभोगे । अधुना तु विरहे ज्वरोपमम् । संतापहेतुत्वात् । ज्वरो महानिति वा पाठः ।

मुग्ध इति । धृतिर्धरणम् । संवरणमिति यावत् । प्रतिबोधिता प्रातिकूलं मानादिकारणं ज्ञापिता । भीतानना ससंभ्रमं भ्रमितानना । भयकार्यस्य नेत्रभ्रमसंकोचशोषाधोभावसंभ्रमवैवर्ण्यादेर्मुखे दर्शनात्तदेव भीतमुक्तम् । नीचैः शंस । न तु मानं कुर्वित्युक्तम् । इत्युक्ते सखी मनसि दूयतेऽहं किमिति निषिद्धेति तां प्रति तस्याः प्रीत्यभावश्चक्रः स्यात् । प्रियश्च शङ्कते यदेषा निषिद्धा त्वाभ्यां मन्ये मयि विरुद्धं किमपि पर्यालोच्यते । एतेन हीति । भयस्याकृत्रिमत्वदर्शनेन । एतद्दृष्टान्तद्वये रसस्य पदप्रकाश्यत्वमुक्तम् । एकत्र तदादीति शब्दैक्ये पदत्वमुक्तम् । अन्यत्र तु भीताननेति शब्दद्वये पदत्वम् । अत एव यथा वेत्युक्तम् । भावादयस्तु वाक्यप्रकाशकत्व एव वैचित्र्यभाज इत्याह— भावादीनामिति ।

द्विधा शब्दोत्थध्वनौ पदप्रकाशत्वमाह—उपमानमिति । प्रकृताप्रकृतयोर्भीमशब्दार्थयोरसंबद्धत्वं मा प्रसाङ्क्षीदिति न्यायेन तयोरुपमानोपमेयभाव इत्युपमा व्यङ्ग्या ।

भुक्तीति । मुक्तिरुद्वेगव्यापारादपि । भुक्तिः कान्तोपभोगोऽपि । एकान्तं संकेतस्थानं निश्चयश्च । सन्, शोभन आगमः सिद्धान्तः सतः

काचित्संकेतदायिनमेव मुख्यया वृत्त्या शंसति ।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमत्राऽऽगतिः ।
आश्चर्यं तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वंद्वममीलनव्यतिकरं शक्नोति ते नाऽऽसितुम् ॥ ८० ॥ ( ६ )

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्त्वधुना-पदद्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥ ८१ ॥

चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ ८२ ॥ (७)

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोग-दुःखचिन्ताह्लादाभ्यामनुभूतानीत्युक्तम् । एवं चाशेषचयशब्द-द्योत्ये अतिशयोक्ती ।

Night ... sad

क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥८३॥ (८)

---

शुभस्याऽऽगमनं च । मुख्ययेति । प्रकृतेनार्थेन संकेतदं काचिदाशंसतीति वस्तु सदागममुखेन व्यज्यते । अत्रार्थयोर्वैसादृश्याश्चोपमा ।

अथार्थोत्थं द्वादशधा ध्वनिं पदप्रकाश्यमाह—सायमिति । स्नानवि-लेपनाकास्तमन्दागमनैरत्र क्लमहेत्वभाव उक्तः । एवं कारणाभावे क्लमस्त-वेति वस्तुना पुरुषसङ्गं कृत्वा स्नाताऽसीति वस्त्वधुनापदेन व्यज्यते । अन्यदाऽप्यागमने क्लमाभावात् ।

तदप्राप्तीति । एतौ श्लोकौ विष्णुपुराणे । तस्य विष्णोरप्राप्तिः । निरुच्छ्वासतयेति । एकत्र ध्यानेनान्यत्र चिन्तया तद्गतया । मुक्तिः प्राणवियोगोऽपि । अशेषचयशब्देति । अत्र शब्दशब्देनानेकार्थत्वात्पदमु-च्यते । अन्यथा शब्दद्योत्ये इत्युक्त्या शब्दमूलत्वप्राप्त्याऽर्थमूलध्वनिप्र-स्तावो न संगच्छते । अतिशयोक्ती । असंबन्धे संबन्धरूपे ।

क्षणदेति । यथा घृतकार्यत्वादायुरपि घृतं तथा क्षणकार्यत्वात्सुख-

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनुवर्तत इति सर्वपदद्योत्यं वस्तु ।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इअ णववहुआ सोऊण कुणइ वअणं महीसँमुहम् ॥ ८४ ॥ (९)

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु च स्वतःसंभवी व्यञ्जकः ।

राईसु चन्दधवलासु ललिअमप्फालिऊण जो चावम् ।
एक्कछत्तं विअ कुणइ भुअणरज्जं विजम्भन्तो ॥ ८५ ॥ ( १० )

अत्र वस्तुना येषां कामिनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽति-

---

मपि क्षणम् । वनं शून्योद्देशः । व्यसनं सप्ताङ्गानामन्यतमस्य परस्मादुपजापः । द्यूतादि वा । ननु यदि रात्रिररात्रिर्वनमवनमित्यादिरूपतया व्याख्या तदा रात्र्यभावो दिनमित्यादि लभ्यते । ततः पराङ्मुखत्वेन न द्विषां किंचिद्विरूपम् । ततो विरोध एषां पदानां वैपरीत्येन व्याख्येयः । विरोधपरिहारस्तु या ह्यक्षणदा दिनं मा क्षणदा दिनेऽपि नष्टत्वात्तेषाम् । अवनं रक्षकं वनमत्रीनामसनं खेटनं व्यसनम् । प्रथमव्याख्याने तु विरोधपरिहारौ सुगमौ । शब्देति । अत्रार्थान्तरन्यासः शब्दोत्थविरोधाङ्गभूतस्तत्सहायसर्वपदद्योत्यं वस्तु व्यनक्ति ।

तुहेति । गोसंमि प्रभाते । दलो इति पुंस्त्वं प्राकृतत्वात् । क्वचिद्दलमिति पाठः । मिलाणादीति । मिलाणकमलदलो इतिरूपं यत्पदम् । अयं भावः—मिलाणकमलदलो इति रूपकेण म्लानत्वान्यथानुपपत्तेर्मुहुश्चुम्बनं विहितवतीत्यर्थः ।

अत्र वस्तुनेति । गाथोक्तेन । तदादेशेति । जाग्रद्भिर्भोगपरैर्निशाऽतिवाह्येति हि स्मरादेशः ।

---

१—तव वल्लभस्य प्रभात आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

२—रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति त्रिभुवनराज्यं विजृम्भमाणः ॥

वारित इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ।

निशितशरधियाऽर्पयत्यनङ्गो
दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र
व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥ ८६ ॥ ( ११ )

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति व्यतिकरपदद्योत्यो विरोधः ।

वारिज्जन्तो वि पुणो सन्दावकदत्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाई ण चलइ से हारो ॥८७॥ (१२)

अत्र विशुद्धजातित्वलक्षणहेत्वलंकारेण हारोऽनवरत कम्पमान एवाऽऽस्त इति णचलइपदद्योत्यं वस्तु ।

सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।
तीए खन्धाहि बलं गहिअ सरो सुरअसंगरे जअइ ॥८८॥ (१३)

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः

---

निशितेति । अराले वक्रे वयसि । तारुण्य इत्यर्थः । व्यतिकरं मिश्रीभावम् । अवस्था अभिलाषचिन्तादयः । अयं भावः—अवस्थानां यौगपद्येनोत्पत्तौ मिथो विरोधः ।

वारिज्जन्तो इति । विरहे हारस्यासुखायमानत्वाद्वार्यमाणत्वम् । स्तनभर एव वयस्यो यस्य सोऽपि विषमोन्नतत्वाद्यतश्चलयत्येनमत एव मित्रीभूतः स्तनभरः । मित्रं हि स्वमित्रानिष्टं वारयति । परं हारो न चलति न त्रुट्यति किं तु कम्पमान एवाऽऽस्ते । हृदयं संतप्तं सत्, हार त्वं मां तापयसीति तं निवारयति ।मम तु स्तनभर एव वयस्यः संतापभागित्वादिति । स एव मया सार्धं तापमनुभवतु त्वमपि किमित्यत्रेति वार्यमाणोऽपि विशुद्धजातित्वाद्धेतोर्न चलति । किं तु किमत्र भावीति कम्पते ।

अत्र रूपकेणेति । स स्मर इवेति रूपकम् । स्मरो हि किलाभिलाषमुत्पादयति ।

---

१—वार्यमाणोऽपि पुनः संतापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥

२—स मुग्धश्यामलाङ्गो धम्मिल्लः कलितललितनिजदेहः । केशपाश
तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसंगरे जयति ॥

प्राप्तो यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खन्यपदद्योत्या विभावना। एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीरः।

णवपुण्णिमामिअङ्कस्स सुहअ को तं सि भणसु मह सच्चम्।
का सोहग्गसमग्गा पओसरअणिव्व तुह अज्ज ॥ ८९ ॥ (१४)

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न नन इति णवेत्यादि—पओसेत्यादिपदद्योत्यं वस्तु व्यज्यत।

सहि णवणिहुवणसमरम्मि अङ्कवाली सहिएँ णिविडाए।
हारो णिवारिओ व्विअ उच्छेरन्तो तदो कहं रमिअम्॥९०॥(१५)

अत्र वस्तुना हारच्छेदादनन्तरमन्यदेव रतमवश्यमभूत्तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः।

पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहम्।
खन्धे घेत्तूण घडं हाहा णट्ठोत्ति रुअसि सहि किं ति ॥ ९१ ॥

---

नवेति । पूर्वेऽनुराग[illegible] । तथा प्रदोषरजन्यापि का तेऽस्ति । केन स्वाजन्येन संबद्धो भवसीत्यर्थः ।

सहीति । अङ्कपाली आश्लेषः सैव सखी । निविडा घना, अन्तरङ्गा च । अङ्कपालीसख्या हार उच्छलन्द्वयोस्तु[illegible] स्पर्शहेतुतया बाधकीभवन्निवारित एव त्रोटित एव । सखी सुरते मानुषान्तरमुत्सारयति यतः । हारच्छेदादनन्तरमिति । हारच्छेदं यावन्मयाऽप्याश्लेषादि दृष्टम् । तदनन्तरं किं जातमिति न जाने । व्यतिरेक इति । उपमाभूतेभ्यो रतान्तरेभ्यस्तस्य रतस्याधिकत्वादिति व्यतिरेकः ।

स्कन्ध इति । स्कन्धान्निक्षिप्य । अत्र रोदने नष्टत्वं हेतुः ।

---

१—नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

२—सखि नवनिधुवनसमरेऽङ्कपालीसख्या निबिडया ।
हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितम् ॥

३—प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम् ।
स्कन्धे घटं गृहीत्वा हा हा नष्ट इति रोदिषि किमिति ॥

अत्र हेत्वलंकारेण संकेतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपद-द्योत्यम् ।

यथा वा—

विहलङ्खलं[1] तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम् ।
वारप्फंसमिसेणअ अप्पा गुरुओत्ति पाडिअ विहिण्णो ॥९२॥ (१६)

अत्र नदीकूले लतागहने कृतसंकेतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वकं व्याकुलया त्वया घटः स्फोटित इति मया चेतितं तत्किमिति नाऽऽश्वसिषि तत्समीहितसिद्धये व्रजाहं ते श्वश्रूनिकटे सर्वं समर्थयिष्य इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

जोह्णाइ[2] महुरसेण अ विइण्णतारुण्णउसुअमणा सा ।
वुड्ढावि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥९३॥

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहुपदप्रकाश्यः । एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः । वाक्यप्रकाश्ये तु पूर्वमुदाहृतम् । शब्दार्थोभयशक्त्युद्भववस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः ।

---

विहलखलमिति । विहलंखलमुच्छृङ्खलम् । सात्त्विकभावात् । कुटेन घटेन । तरलतरदृष्टिरनुरागवशात् । अयं भावः—यो हि गुरुः स्यात्स किंचिदुच्छृङ्खलं चपलप्रकृतिं च दृष्ट्वाऽऽत्मानं ततः पृथक्करोति येन केनापि मिषेणेत्युक्तिलेशः । चेतितम् । ज्ञातम् । समर्थयिष्यइत्यन्तं वस्तु अपह्नुत्या व्यज्यत इति योगः ।

जोह्णाइ इति । अत्र ज्योत्स्नामधुरसौ वाक्यार्थतयोपनिबद्धौ हेतू । विस्तीर्णतारुण्यादिसाध्यमेकं तावत्परवधूरन्यच्च वृद्धा साऽपि त्वयाऽभिलष्यत इत्यहो कामान्धत्वेनाविवेकित्वमिति व्यङ्ग्यम् । भेदा इति ।

---

१—विशृङ्खला त्वा सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेणाऽऽत्मा गुरुक इति पातयित्वा विभिन्नः ॥

२—ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥

प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४२ ॥

यथा गृध्रगोमायुसंवादादौ । तथा च—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ॥ ९४ ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ॥ ९५ ॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ९६ ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं बाला अत्यक्ष्यध्वमशङ्किताः ॥ ९७ ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं चेति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः । स्वयं तु लक्षणतोऽनुसर्तव्याः । अपिशब्दात्पदवाक्ययोः ।

पदैकदेशरचनावर्णेष्वपि रसादयः ।

---

पूर्वाष्टादशमेलने सप्तदशैते भेदाः पञ्चत्रिंशद्भवन्तीति ।

अलं स्थित्वेति । अत्रोपयोगित्वेनार्धद्वयेनैक एव श्लोक उदाहृतः । भारते तु श्लोकद्वयम् । अत्रालं स्थित्वा, इत्यस्यैतदुत्तरार्धं यथा—

कंकालबहले घोरे सर्वप्राणिभयंकर इति ।

न चेह जीवित इत्यस्य तु—

प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी । इति

स्थित इति । नाद्याप्यस्तमितः । कनकवर्णाभमिति । कनकवर्णवदाभातीति । यदि वा कनकवर्णयोर्हेमकुङ्कुमयोरिवाऽऽभा यस्येति तत्तथा । न पुनः कनकवर्णस्येवाऽऽभा यस्य । अनुपपद्यमानत्वात् । बाला मूर्खाः । अत्यक्ष्यध्वमित्यात्मनेपदक्रियातिपत्ती आर्षत्वात् । निष्ठं चेति । वचनमिति योगः । प्रबन्ध एवेति । भारतोक्तगृध्रगोमायुसंवादनामप्रबन्धे संप्रतिपाद्येनार्थेन गृध्रगोमायोर्भक्षणाभिप्रायो व्यज्यते । स चाभिप्रायः शान्तरसनिष्ठः ।

वर्णेष्वपीति । निमित्तसप्तमीयम् । तेन रसादयः पदैकदेशादिनिमित्तेन व्यङ्ग्या भवन्तीत्यर्थः । यदा विशिष्टेन पदांशादिना केनाप्युपकृता विभावादयो रसास्वादातिशयं कुर्वन्ति तदा पदांशादेरेव

तत्र प्रकृत्या यथा—

[१]रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वईपरिचुंबिअं जअइ ॥ ९८ ॥

अत्र जयतीति न तु शोभत इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य पिधानमिति तदेवोत्कृष्टम् ।

यथा वा—

प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटलसन्नीवीनिबन्धं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ९९ ॥

---

हेतुत्वम् । रसास्वादमात्रे तु विभावादीनाम् । तथा वर्णा अपि मृदुपुरुषात्मना श्रुतिकालोपलभ्यमानेनार्थानपेक्षश्रोत्रग्राह्येण स्वभावेन रसास्वादे निमित्तमेव । विभावादिसंयोगाद्धि रसनिष्पत्तौ सत्यां तदास्वादे वर्णानां निमित्तमात्रत्वात् । एवं पदेऽप्यन्ये प्रबन्धेऽप्यर्थेत्यत्र निमित्तसप्तमी । पदैकदेशो वक्ष्यमाणप्रकृतिप्रत्ययाद्यंशभेदादनेकः । दीर्घादीर्घसमासासमासभेदात्त्रिधा रचना ।

रइकेलीति । रतिकेलौ हृतं निवसनं येन । स चासौ करकिसलयरुद्धनयनयुगुलश्च । यदि वा रतिकेलौ हृतं निवसनं यकाभ्यां कराभ्यां तौ तथा । तौ हि गौर्या निवसनरक्षणाय यामिकौ कृतौ स्तः । ततः प्रहरके विनष्टे ताभ्यां रुद्धं नयनयुगुलं यस्य । यदि वा रतिकेलौ हृते निवसने सति करकिसलयाभ्यां रुद्धं नयनयुगुलं यस्येति । तदेवोत्कृष्टमिति । व्यज्यते जयतीत्यत्र जिधात्वंशेन ।

प्रेयानिति । सशपथमित्यपाकृतः पादानत इति द्वयेऽपि योज्यम् । पाणीति । करपुटधृतमण्डलीकृतनीव्यन्तरे कृत्वा बद्धः करसंपुटे लसन्नीव्या निबन्धः संरोधो यत्रेत्यर्थः । प्रत्युतेति । या किलानुनीता न प्रसन्ना साऽपि प्रिये याति सति सपत्नीसंगमाशङ्किनी स्वयमेव प्रार्थिकाऽभूदिति व्यज्यते । प्रेम्ण इति । यावत्पदत्रयमपि न याति तावद्धृत इति स्नेहातिशयो व्यङ्ग्यः ।

---

१—रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगुलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

अत्र पटानीति न तु द्वाराणीति । तिङ्सुपोर्यथा—

पथि पथि शुकचञ्चूचारुराभाऽङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक्सायकान्पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनीमानचर्चा ॥ १०० ॥

अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च । तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यते । यथा वा—

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १०१ ॥

अत्र लिखन्निति न तु लिखतीति, तथाऽऽस्त इति नत्वासित इति अपि तु प्रसादपर्यन्तमास्त इति भूमिमिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किंचिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् । संबन्धस्य यथा—

गामारुहम्मि गामे वसामि णअरट्ठिइं ण आणामि ।
णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥ १०२ ॥

अत्र नागरिकाणामिति षष्ठ्याः ।

---

पटानीति । अत्र कारणपूर्वापरत्वविपर्ययरूपाऽतिशयोक्तिः ।

न त्वासित इति । न लिखित्वा गतोऽद्यापि लिखन्वर्तते । प्रसादपर्यन्तमिति । लिखतीत्युक्ते प्रसादपर्यन्तमिति न लभ्यते तेन लिखन्नित्युक्तम् । सर्वत्र सुबादीनामाकूतविशेषव्यञ्जकत्वम् । स त्वाकूतो व्यक्तः सन्यथायोग्यं विभावादिरूपद्वारेण रसादिकं व्यनक्ति । भूमाविति । आधारत्वे हि चित्रलेखनस्यैव प्राधान्यं न तु तस्याः प्रसादस्यातो भूमिमित्युक्तम् ।

गामेति । ग्रामरुहा ग्रामीणा । नागरिका विदग्धाः । षष्ठ्या इति ।

---

१—ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।
नागरिकाणां पतीन्हरामि या भवामि सा भवामि ॥

रमणीयः क्षत्रियकुमार आसीदिति कालस्य । एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः । वचनस्य यथा—

तॉणॅ गुणग्गहणाणं ताणुक्कंठाणॅ तस्स पेम्मस्स ।
ताणॅ भणिआणॅ सुन्दर एरिसअं जाअमवसाणम् ॥ १०३ ॥

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते । पुरुषव्यत्ययस्य यथा—

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥ १०४ ॥

अत्र प्रहासः । पूर्वनिपातनस्य यथा—

---

व्यञ्जकत्वमिति योगः । समासे हि संबन्धमूढत्वे सति नागरिकाणामभावो लभ्यते । असमासे तु साक्षात्षष्ठीत्वान्नागरिकाणां सद्भावः । तदयमर्थः—या नागरिकाः सौभाग्यादिना सत्त्वेन जीवन्त्यस्तासु प्रसक्तानपि पतीनपहरामीति । आसीदिति । अतीतनिर्देशाद्दाशरथेः कथाशेषत्वं व्यज्यते ।

बहुत्वमिति । अनेकशो गुणग्रहणादि कृतवानित्यर्थः । स्मर्यमाणं हि वस्तु रतिमुद्दीपयतीति भावः । एकत्वमिति । अद्वितीयत्वम् । एरिसअमित्यत्र कप्रत्ययोऽतीव निन्द्यं वैराग्यं वक्ति ।

रे रे इति । अत्र चञ्चलयोर्लोचनयोराञ्चिताऽपचिता रुचिरभिलाषो यस्य । यद्वा चञ्चले लोचनेऽञ्चिता गमिता रुचिर्येन चेतसा तस्याऽऽमन्त्रणम् । किं मन्य इति । त्वमेवं मन्यसे यदहं तया सह क्रीडिष्यामीत्यन्तर्मध्ये या आशा तां मुञ्च । अत्र मन्य इत्यत्र मध्यमपुरुषप्राप्तावुत्तमस्य विधानाद्व्यत्ययः । तेन प्रहासो व्यज्यते ।

---

१—तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तासां भणितीनां सुन्दरेदृशं जातमवसानम् ॥

येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि
प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमा-
स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ १०५ ॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते । विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीर धनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥१०६॥

अत्र दिवसेनेत्यपवर्गे तृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं य-
द्गाढोत्कण्ठाललितलुलितैरङ्गकैस्ताम्यतीति ॥ १०७ ॥

अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

---

दोर्बलमेवेति । न तु नीतिबलम् । अत्रेति । अल्पस्वरतरत्वान्नयशब्दस्य पूर्वनिपाते प्राप्तेऽपि विक्रमस्यार्चितत्वेन पूर्वनिपातस्तस्यार्चितत्वं व्यनक्ति ।

प्रधनेति । प्रधनं युद्धम् । दिवसमिति । कालाध्वनोरत्यन्तसंयोग इत्याधारे द्वितीया । दिनान्तः क्षणमपि युद्धशून्यं न तैः स्थितम् । फलप्राप्तिस्तु तवैवाभूदित्याशयः । अत्रेति । अपवर्गः फलप्राप्तौ सत्यां क्रियानिष्पत्तिः । तथा च युद्धफलं जयरूपं तवैव जातमिति भावः । अत एव साधुवादपदमित्युक्तम् ।

भूय इति । सविधे समीपे या नगरीरथ्या तया । नवमिव पुनर्जीवितमिव । ललितलुलितैर्बाष्पमयाऽतीव रम्यैः । यदि वा ललितानि चारूणि ललितानि विलासा येषामिति । क्वचिल्लुलितेति पाठः । तदा च लुलितानि तन्मयीभूतानि ललितानि विलासा येषां न कदाचिन्निर्विलासानीत्यर्थः । इतिरशुभप्रकारे । तद्धितस्येति । अभिलाषरसस्य सौकुमार्यस्य वाऽत्र व्यञ्जकस्तद्धितः कप्रत्ययः ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ १०८ ॥

अत्र प्रशब्दस्योपसर्गस्य ।

कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमा-
न्न यावदायात्युदयाद्रिमौलिताम् ॥ १०९ ॥

अत्र तुल्ययोगिताद्योतकस्य 'च' इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
बन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ ११० ॥

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां न त्वदिति न मदित्यपि त्वस्मदित्यस्य सर्वाक्षेपिणो व्यञ्जकत्वं भाग्यविपर्ययादित्यन्यथासंपत्तिमुखेन, नत्वभावमुखेनाभिधानस्य ।

---

पुनर्जन्मनीत्यत्र द्वितीयवारमात्रे पुन शब्दः । प्रशब्देति । प्रकर्षेण ध्वंसान्निमूलकाषं कषितो विवेक इति ध्वन्यते ।

च इति । अत्र चकारस्तुल्ययोगितां जल्पन्वीररसं विश्रान्तिप्रधानतया व्यनक्ति । पदसंबद्धा एव चादयः स्युरित्येषां पदैकदेशता ।

रामोऽसाविति । राघवानन्दे कुम्भकर्णोक्तौ । अत्र प्रस्तावाद्देवस्त्वमित्यर्थे । एकबाणाहत्या श्रेणीभूतविशालतालानां यद्विवरं तेनोद्गीर्णैः । सर्वनामेति । सामान्येन यन्नाम तत्प्रातिपदिकम् । यत्तु विशिष्टं सर्वादिगणोक्तं तत्सर्वनाम । वचनानामेकद्वित्र्यादिरूपाणां व्यञ्जकत्वमिति योगः । तेनासौ प्रसिद्धोऽद्वितीयः । भुवनेषु न त्वेकस्मिन् भुवने गुणैरनेकैर्न त्वेकेनेति ध्वन्यते । न त्वदिति न मदिति । त्वदित्युक्ते हि रावणस्यैव मदित्युक्ते वक्तुरेव भाग्यव्यत्ययो ध्वन्यते । अस्मच्छब्दे तु बहुवचनान्ततयोक्ते तव च मम च कुलस्य चेति सर्वेषामाक्षेपः । अन्यथेति ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना ॥ १११ ॥

अत्रेमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य, तरुणत्व इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्येऽ येषां वाचकत्वेऽस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति । एवमन्येषामपि बोद्धव्यम् ।

वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनिरूपण उदाहरिष्यते । अपिशब्दात्प्रबन्धेषु नाटकादिषु । एवं रसादीनां पूर्वगणितभेदाभ्यां सह षड्भेदाः ।

भेदास्तदेकपञ्चाशत् ।

व्याख्याताः ।

तेषां चान्योन्ययोजने ॥ ४३ ॥
संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदै-

---

भाग्यानामभावादिति नोक्तं किं तु विपर्ययादिति । यान्येव भाग्यान्यस्माकं प्रभुत्वायाभूवंस्तान्येवान्यथा संपन्नानि सन्ति । क्षयहेतुत्वाद्व्यत्ययरूपाणि जातानि । पुण्याभावे हि प्रभुत्वमेव न स्यान्न पुनः प्रत्युत क्षयः स्यात् । अयं भावः—पुण्यान्येवापुण्यतया परिणतान्यस्मत्कुलं क्षयं नेष्यन्तीति व्यज्यते ।

तरुणीति । मदनश्च प्रस्तावात्तस्य धनुश्च ते तथा तयोः समीपे । अयं भावः—यत्तारुण्यं कलां कलयति तत्तस्य स्पर्धयेव भ्रुवोरग्रमग्रभागः कलां पठति । एतेनोपाध्यायवक्तृत्वे शिष्यस्यातीव वक्तृत्वं ध्वन्यते । यस्या भ्रूतारुण्यात्मकान्यङ्गान्यपि परस्परस्पर्धया सन्निभ्रमाणि सा तदाधारः सकलानां चतुराणां समस्तानां वा ललनानां कथं न मौलिमधिवसति । चकितेति विशेषणपदम् । एतेन नेत्रविभ्रम उक्तः । स एवेति । स एव विशेषो व्यञ्जकत्वं व्यञ्जकस्येमनिजादीनां स्वरूपस्य विभावादिद्वारतया पारम्पर्येणेत्यर्थः । अन्येषामपीति । पदैकदेशानाम् ।

वर्णेति । आसां साक्षान्माधुर्यादिगुणव्यञ्जकत्वमेव । तद्द्वारेण तु रसेषूपयोगः । भेदाभ्यामिति । पूर्वोक्ताभ्यां वाक्यपदप्रकाश्याभ्याम् ।

तेषामिति । प्रत्येकमिति शेषः । स्वप्रभेदैरिति । स्वस्य प्रभेदैः स्वेन च

रेकपश्चाशता संशयास्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन संकरेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने।

वेदखाब्धिवियच्चन्द्राः ( १०४०४ )

शुद्धभेदैः सह।

शरेषुयुगखेन्दवः ( १०४५५ ) ॥ ४४॥

तत्र दिङ्मात्रमुदाह्रियते—

छणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई॥ ११२॥

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमित. किमनुरणन-

---

प्रभेदैश्चेति वाऽर्थः। अयं भावः—शुद्धभेदानां मध्यादेकस्य कस्यापीष्टभेदस्य शेषैः पञ्चाशद्भेदैः स्वेन च यदा योगस्तदा मौलिक्यभेदाद्भिन्ना एकपञ्चाशद्भेदाः स्युः। परमेकयोगे कल्पनेयम्। न द्विकादियोगे। क्वचिद्व्यभिचाराच्च। एवमितरभेदेष्वपि ज्ञेयम्। तत्सिद्धमेतदेकपञ्चाशन्मूलभेदानां प्रत्येकं स्वव्यतिरिक्ता एकपञ्चाशद्भेदाः स्युः।

छणेति पडोहरं पश्चाद्दोकस्तटम्। तत्र यद्वलभीयुक्तं गृहम्। पलहीभरेति पाठे पलही कार्पासस्तस्य भरः। कर्पासतरुवन इत्यर्थः। यद्वा वलहीशब्दोऽपि कार्पासार्थः। पुडोहरमिति वा पाठः। पुडोहरं पच्छोकडमिति सातवाहनः। विषममित्यन्ये। अन्ये तु पहलियामिति यस्य प्रसिद्धिस्तदर्थमाहुः। अत्रेति। अत्र विदितप्राघुणिकासक्तपतिवृत्तान्तपत्नीगिरा रोदनात्प्रस्तावादेवानुनये लब्धेऽनुनीयतामित्यनुपयुज्यमानत्वाद्बाधितार्थमसत्यनुनयस्यानौचित्याद्वा बाधितार्थे स्वविषयभूतार्थविंपयत्वे योगे सत्युपभोगरूपमर्थान्तरं लक्षयदीर्ष्योत्पादनादिकं ध्वनति। इयं शुद्धा साध्यवसाना लक्षणा। किमनुरणनेति। किमनुनयः स्ववाच्यं वदन्नेव सुभगशब्दाल्लब्धावकाशमुपभोगं व्यनक्ति। अयं पदप्रकाश्योऽर्थशक्तिमूलो ध्वनिः। अत्र द्वयोरपि व्यङ्ग्यभेदयोः संभवादेकस्य कस्याप्यनिश्चितत्वे संशयास्पदत्वेन सकरः।

---

१—क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयता वराकी॥

न्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति संदेहः। तथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहाहा देवि धीरा भव॥ ११३॥

अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः

---

स्निग्धेति। स्निग्धा जलसंबन्धात्सरसा। कान्तिश्चाकचक्यम्। घना इति भणनान्निबिडत्वमपि व्यङ्ग्यम्। वेल्लन्त्यः कामापरभागवशात्प्रहर्षाच्च। एतेन घनैराकाशस्य दुष्प्रेक्ष्यत्वं संभोगस्मारकत्वं चोक्तम्। वाता इति बहुवचनेन तेषां सर्वगतत्वमप्रतीकार्यत्वं चोक्तम्। शीकरिण इति तेषामेव मन्दमन्दत्वमब्दस्मारकत्वं चोक्तम्। तर्हि गुहासु प्रविश्याऽऽस्यतामित्याह—पयोदेति। पयोदानां सुहृदः। मेघभावे तेषां शोभनचित्तता स्यात्। केकाभिर्गुहामध्येऽपि वर्षास्मरणादित्यर्थः। ताश्च कला इति भणनात्। खड्ग विवादात्स्वयमपि दुःसहा इति सर्वत्रोद्दीपनविभावानां विद्यमानत्वम्। एवमुद्दीपनविभावबाधितविप्रलम्भोऽन्योन्याश्रयत्वाद्रतेर्विभावानां साम्यं मन्वान इत एव प्रभृति प्रिया हृदि न्यस्यैव स्वं वृत्तान्तं रामस्तावदाह—कामं सन्त्विति। कामं विभावाः सन्तु। अहं तु कठोरहृदयोऽस्मि। रामशब्दार्थव्यङ्ग्यविशेषावकाशदानाय कठोरहृदयपदम्। अन्यथा रामपदं दशरथकुलोत्पत्तिकौशल्यस्नेहपात्रत्वबाल्यचरिततत्ताडकावधादिधर्मान्तरपरिणमितमर्थं कथं नु ध्वनेत्। अस्मि स एवाहं भवामीति सर्वं सहे। न तु सर्वंसहः। कृद्वृत्तौ हि सहने कर्त्रंशस्यैव मुख्यता स्यात्। न सर्वार्थस्य कर्मणः। ततोऽविमृष्टविधेयांशदोषः स्यात्। सर्वं सहे इत्युक्ते तु यद्यन्निपतति तत्तत्सहे इति भावः। भविष्यतीति क्रियासामान्यम्। तेन किं करिष्यतीत्यर्थः। अथ वा भवनमेवासंभाव्यमिति। उक्तप्रकारेण चित्तन्यस्तां प्रियां विभावादीनां साधारण्यादिना स्मरणेन वैदेहीति शब्देन कथं भविष्यतीति विकल्पपङ्क्त्या च प्रत्यक्षीकृतां हृदयस्फोटोन्मुखीं ससंभ्रममाह—हहाहेति। देवीति तव युक्तं धैर्यम्। देव्या हि कृताभिषेकत्वेन राजतुल्यत्वादिति भावः। अत्रेति। लिप्तशब्दः कान्तेः कुङ्कुमादिवल्लेपहेतुत्वाभावाद्बाधितार्थः

संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकरः । एवमन्यदप्युदाहार्यम् ।

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थ
उल्लासः समाप्तः ।

---

सन्नीषत्तिरोधीयमानत्वादिसादृश्यात्कान्तियुक्तमर्थं लक्षयन्व्यनक्ति । अत्र लिप्तमारोप्यमारोपविषयश्च नभ इति द्वयोरुक्तत्वाद्गौणी सारोपलक्षणा । तथा सुहृच्छब्दोऽपि घनानामचेतनत्वेन मैत्रीयोगाभावाद्बाधितस्वार्थः सुहृद्गतसांमुख्यादिधर्मसादृश्यात्पयोदाभिमुखान्मयूराँल्लक्षयन्मित्ररूपताप्रतिपत्तिद्वारेण तद्दर्शनानन्यसामान्यप्रमोदमेदुरत्वादि ध्वनति । पयोदसुहृच्छब्देनाऽऽरोप्येणाऽऽरोपविषयाणां शिखिनां निगीर्णत्वादियं साध्यवसाना । उभयत्रापि स्वार्थोपमितवस्तुपरत्वेनात्यन्ततिरस्कृतवाच्ययोर्लिप्तसुहृच्छब्दयोः सक्तस्य व्यङ्ग्यद्वयस्य मिथो निरपेक्षत्वात्स्वपदप्रधानयोः संसृष्टिः ।रामोऽस्मीति। अत्र प्रस्तावादभिधेयप्रतिपत्तौ रामशब्देनानुपयुज्यमानत्वाद्बाधितस्वार्थेन स्वाभिधेयभूतार्थगामित्वरूपात्संबन्धाद्राज्यभ्रंशप्रवासदारुणसीताहरणादिदुःखपात्रत्वं लक्ष्यते । अनन्यसाधारणनिर्वेदादिव्यञ्जनं च प्रयोजनम् । इयं च सादृश्यव्यतिरिक्तसंबन्धान्तरनिमित्ता च्छुद्धा सारोपा । आरोप्यस्य रामशब्दस्याऽऽरोपविषयस्यास्मिशब्दाभिधेयस्य चोक्तत्वात् । अत्र वाच्यं दाशरथिरूपं व्यङ्ग्यधर्मान्तरपरिणतत्वात्स्वपरत्वेन नोपपन्नमित्यविवक्षितमेव न पुनरत्यन्ततिरस्कृतम् । व्यङ्ग्यधर्माधारद्वारेण तस्यापि परिणतत्वात् । अत्र लिप्तपयोदसुहृच्छब्दव्यङ्ग्यावर्थावनुग्राहकौ । रामशब्दव्यङ्ग्यस्त्वनुग्राह्यः । उद्दीपनवशेनैवासाधारणनिर्वेदादीनां परिस्फुरणादित्यनुग्राह्यानुग्राहकत्वेन संकरः । रामपदेति । यथा रामशब्दस्य निर्वेदादयोऽर्थान्तरसंक्रमितवाच्यरूपा व्यङ्ग्यास्तथा विप्रलम्भरसोऽपि व्यङ्ग्य इत्युभयसाधारण्येन व्यञ्जकव्यङ्ग्यत्वेन द्वयोर्व्यङ्ग्ययोरेकव्यञ्जकानुप्रवेशेन संकरः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते
चतुर्थोल्लासः ॥ ४ ॥

अथ पञ्चमोल्लासः ।

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यस्य प्रभेदानाह—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
संदिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तमसुन्दरम् ॥ ४५ ॥
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

कामिनीकुचकलशवद्गूढं चमत्करोति । अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव । अगूढं यथा—

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न संप्रति भवामि किमावहामि ॥ ११४ ॥

अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥ ११५ ॥

---

संकेतगमने दत्तां मनः सुमनसां जनः ।
ध्वनिर्यत्र गुणीभूतः श्रोत्रानन्दी निरूपितः ॥

अथ मध्यमकाव्यभेदानाह—अगूढमिति । अगूढमतिस्फुटम् । स्फुटं तु ध्वनेर्मार्गः । अस्फुटस्य गुणीभूतता वक्ष्यते । संदिग्धतुल्यप्राधान्य इति । वाच्यव्यङ्ग्ययोः प्रत्येकं चमत्कारकारित्वात्संदिग्धे तुल्ये च प्राधान्ये संदिग्धप्राधान्यतुल्यप्राधान्यरूपभेदद्वयं स्यात् ।

यस्येति । यस्य मम । काञ्चीति स्त्रीभावः । अत्र जीवन्निति जीवतैव वक्त्रा जीवामीति भणनाज्जीवन्निति पदमनुपयुज्यमानतया बाधितार्थं सत्प्राणधारणयोग्यात्किंचित्करत्वसदविद्यमानत्वजीवत्कार्यकारित्वाद्यर्थान्तरसंक्रमितवाच्यम् । अन्ये तु जीवन्न भवामीति वाक्यस्य जीवतो वक्तुः शक्तौ सत्याद्यनुपपद्यमानतयाऽत्यन्ततिरस्कृतवाच्यतामाहुः । अत्र विक्रमरहितत्वस्य व्यङ्ग्यस्य झगिति प्रतीयमानतयाऽतिस्फुटत्वादगूढता । तेन व्यङ्ग्यस्याप्राधान्यम् । गूढस्यैव चमत्कारकारित्वात् ।

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्राऽऽसीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राऽऽहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥ ११६ ॥

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य । 'तस्याप्यत्र' इति युक्तपाठः ।

अपरस्य रसादेर्वाच्यस्य वा ( वाक्यार्थीभूतस्य ) अङ्गं रसादि, अनुरणनरूपं वा ।

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११७ ॥

अत्र शृङ्गारः करुणस्य ।

---

चुम्बनस्येति । चुम्बीति पदं वक्त्रसंयोगस्यानुपपद्यमानतयाऽत्यन्ततिरस्कृतवाच्यं सत्संयोगसाम्याद्धि एवं लक्षयच्चारुत्वशोभावहत्वादिकं स्फुटमेव व्यनक्तीति ध्वनेरगूढता । अन्ये तु चुम्बिशब्दः पादस्पर्शसंभावनां लक्षयतीत्याहुः ।

अत्राऽऽसीदिति । द्रोणाद्रौ संरोहिण्य ओषधयः सन्ति । अत्र केनापीत्युक्ते मयेति व्यङ्ग्यस्य झगिति प्रतीयमानत्वादगूढता । तस्याप्यत्रेति तु पाठे मयेति व्यङ्ग्यं गूढं स्यात् ।

रसादेरिति । रसादेर्वाक्यार्थीभूतस्य प्रधानभूतस्य रसाद्यङ्गम् । वाच्यस्य तु वस्त्वलङ्काररूपस्यालङ्कारवस्तुरूपं व्यङ्ग्यं गुणीभूतमेवापराङ्गत्वात् । अयमिति । रतकाले रसनामूर्ध्वं कर्षतीति रसनोत्कर्षी । अयं स रसनोत्कर्षी नीवीविस्रंसनः करः । नाभ्यूरुजघनस्पर्शी पीनेत्यादिपाठो युक्तः । संभोगक्रमभणनात् । परं शोकार्ततया व्यत्ययो न दुष्टः । शृङ्गार इति । रणभुवि भूरिश्रवसः स्रस्तहस्तप्रेक्षणेन पूर्वरतवृत्तान्तः स्मर्यमाणः संप्रति ध्वस्ततया यतः शोकविभावतां यात्यतः करुणस्याङ्गिनोऽङ्गं विप्रलम्भः ।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयो-
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ ११८ ॥

अत्र भावस्य रसः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ ११९ ॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥ १२० ॥

अत्र भावस्य रसाभासभावाभासौ प्रथमद्वितीयार्धद्योत्यौ ।

---

कैलासेति । कैलासालयः शंभुर्यत्र प्रसादनार्थं गौरीपादयोः पतितस्तेन नखद्युतिः सालक्तकव्यक्ति सालक्तकरञ्जायेत्यर्थः । नेत्रयोः कान्तिरिति । प्रणते शंभौ कोपजा नेत्रारुणता गतेत्यर्थः । अत्र कवेर्देवीगतरतिभावस्य शृङ्गारोऽङ्गम् । अत्र पूर्वत्र च रसवदलंकारः । यथा पद्मादिना वस्तुनोपमितं मुखादि वस्तु चारुतया भाति तथा रसादिनाऽपि रसाद्युपस्कृतं भातीति वस्तुन इव रसादेरप्यलङ्कारत्वम् । नन्वत्रोदाहरणद्वयेऽपि क्रमेण करुणरसभावौ व्यङ्ग्यौ । तयोश्च मुख्यतेति कथं गुणीभूतव्यङ्ग्यत्वेनेति चेत् । सत्यम् । मुख्यत्वेऽपि न तथा चमत्कृतौ यथाऽत्र गौणोऽपि शृङ्गार इति तेनैव व्यपदेशः । एवमन्यत्रापि भाव्यम् ।

अत्रेति । भूगतायाः कविरतेर्भूविषया रतिरङ्गम् । अन्योन्यास्थाबन्धरूपरतेरत्राभावान्न शृङ्गारः । ततः प्रेयस्वदलङ्कारः ।

बन्दीति । अत्र पश्यतामित्यनादरे षष्ठी । पश्यतः प्रियाननादरत्वेत्यर्थः । भावस्येति । रिपुस्त्रीणां रत्यभावे सैनिकानां इत्यनवकृत्या रसाभासः ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१२१॥

अत्र भावस्य भावप्रशमः ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम् ॥ १२२ ॥

अत्र त्रासस्योदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १२३ ॥

अत्राऽऽवेगधैर्ययोः संधिः ।

पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हह हा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाऽभिधत्ते ॥ १२४ ॥

---

शत्रूणां च रत्यभावे दैन्याद्यनुचितमित्युत्तरार्धे भावाभासः । तौ च राजविषयरतेरङ्गम् । अत्रोर्जस्व्यलंकारः ।

अविरलेति । अत्र तवेक्षणे क्षणादिति भिन्नं व्याख्येयमभिन्नं वा । तथा तच्छब्दः पूर्ववस्तुवाची निर्दिष्टः । तेन यदं नापेक्षते । अत्रापि राजविषयरतेर्मदभावप्रशमोऽङ्गम् । प्रशमसमाहितयोरैक्यार्थादत्र समाहितालंकारः ।

अत्र त्रासस्येति । भावस्य । रतेरङ्गमिति शेषः । अत्र भावोदयालंकारः ।

असोढेति । तपो मुञ्चत्वेषेति भगवतोऽपेक्षितमित्यक्षमा । विस्रब्धजल्पितश्रवणे रसिकः स्मरेणोपलक्षितो हरः स्मरहर इत्युचितं न तु स्मरं हरतीति । अत्र शिवविषयरतेः संधिरङ्गम् ।

पश्येदिति । कमै काचित्कन्या रतार्थिनं पान्थं मत्वाह । पश्येत्कश्चि-

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।
एते च रसवदाद्यलंकाराः । यद्यपि भावोदयभावसंधिभावश-
बलत्वानि नालंकारतयोक्तानि तथाऽपि कश्चिद्ब्रूयादित्येवमु
क्तम् । यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्य-
ङ्ग्ययोः स्वप्रभेदादिभिः सह संकरः संसृष्टिर्वा नास्ति तथाऽपि
प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहारः ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृताऽलंकाभर्तुर्वदनपरिपाटीषु घटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ १२५ ॥

---

दित्याशङ्का । चञ्चल चल गच्छेत्यसूया । का त्वरेति धृतिः । कुमार-
स्मीति स्मृतिः । हस्तालम्बं वितरेत्यौत्सुक्यम् । हहेति श्रमः । हेति
दैन्यम् । व्युत्क्रम इति विबोधः । क्वासि यासीत्यौत्सुक्यम् । एषां
पूर्वपूर्वोपमर्देन बन्धः शबलता नृपविषयरतेरङ्गम् ।

एते चेति । एतेनान्यत्र तु वाक्यार्थेऽङ्गिनि यत्राङ्गं रसादिस्तत्र रस-
वदादयोऽलंकाराः । रसः शृङ्गारादिः । प्रेयः प्रियतराख्यानम् । ऊर्जो
बलम् । तानि विद्यन्ते येषु निबन्धनेषु तानि रसवदादीनि । कश्चिदिति ।
प्राश्चिकाधुनिकः । एवमिति । अलंकारतया । उक्तमिति । अस्माभिरिति
शेषः । यद्यपीति । अयं भावः—यद्यपि रसतात्पर्यालोचनेन मध्यम-
काव्येऽपि पुनर्ध्वनावेव विश्रान्तिरिति ध्वनिगुणीभूतव्यन्योः सर्वत्र
संकरः ससृष्टिर्वा तथाऽपि यत्र यस्माच्चारुताप्रतिपत्तिस्तत्र तेन व्यपदेशः
कार्यः । ततोऽत्र गुणीभूतमेव प्रधानं न ध्वनिरित्यर्थः । स्वप्रभेदादिभिरिति ।
आदिशब्दादलंकारा ग्राह्याः ।

जनस्थान इति । जनस्थानं दण्डकारण्यं जनानां स्थानं च । कनक-
मृगे तृष्णा भ्रान्तिः । कनके च मृगतृष्णा लिप्सा । वैदेहीति पदद्वयं
सीता च । लङ्काभर्तुर्वदनेषु मुखेषु दशसु इषुघटना बाणयोगः । अल-
मतिशयेन कुत्सितस्य भर्तुर्वदनपङ्क्तिषु वचनश्रेणीषु घटनाऽऽश्लेषकारि-
तेत्यर्थः । कुशलवौ सुतौ यस्याः सा तथा सीतेत्यर्थः । कुशलवसुनो
भावस्तत्ता शुभधनतेत्यर्थः । अनुरणनरूप, । अनुस्वानेन तुल्यो व्यङ्ग्य

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्यतां नीतः ।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥ १२६ ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः । वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२७॥

---

इत्यर्थः । वाच्यतामिति । व्यङ्ग्योपमयैव रामत्वे लब्धे यद्रामत्वमुक्तं तदन्यपरवाच्यस्य व्यङ्ग्योपमाङ्गतां नीतेत्यर्थः ।

आगत्येति । अत्र विसंस्थुलाङ्गीव विसंस्थुलाङ्गी तां तथेति विग्रहः । बहुव्रीहौ तु ङीप्प्रत्ययाप्राप्तिः । क्वचिदपि द्वीपे क्षपिता त्रियामा दिनं कृतमित्यर्थः । पादपतनेन दीप्तियोगेन प्रसादयति । लक्षणया विकासयतीत्यर्थः । अत्र समासोक्तौ वस्तुरूपनायकवृत्तान्तस्य सामर्थ्यादागतत्वादङ्गत्वम् । निरपेक्षेति । न हि रविपद्मिन्यौ नायकवृत्तान्तमाकाङ्क्षतः । नायकश्च नायिका च तौ नायकौ । तद्वृत्तान्तोऽर्थादापतितः । अध्यारोपेणेति । न ह्यत्र नायकवृत्तान्तो रविपद्मिनीवृत्तान्तवत्प्राधान्यं लभते । कुतः । रविपद्मिनीवृत्तान्तस्य प्रभातप्रस्तावाद्वाच्यस्य सतोऽङ्गितां नीतत्वात् । रविपद्मिन्योर्नायकवृत्तान्त आरोपित इति भावः ।

भ्रमिमिति । भ्रमिश्चित्तस्यानवस्थत्वम् । अरतिर्बाह्यार्थेषु । प्रलय इन्द्रियाणामल्पा शक्तिः । तेषां चित्तस्य च शक्तिरोधो मूर्छा । सत्येव चेतसीन्द्रियाणामशक्तिस्तमः । विषं प्रस्तावाज्जलम् । तस्य भ्रमिप्रभृतिकार्यविशेषोत्थापनेन कालकूटमिवेति व्याख्या । अन्यथा मेघानां भुजङ्गत्वं न सिध्यति । अयं शब्दशक्तिमूलः पदप्रकाश्यो ध्वनिः । मेघानां कामत्वेन भुजङ्गत्वसिद्ध्या विषस्य जलस्य गरलरूपता सिध्यतीति व्याख्याने तूत्तमत्वमेव ।

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् ।

यथा वा —

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥१२८॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य ।
एतच्चैकत्रैकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।

अस्फुटं यथा —

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ १२९ ॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम् । संदिग्धप्राधान्यं यथा—

हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १३० ॥

---

अच्युतेति । हे अच्युत हे अक्षरणशील । दर्शनेन संभोगविकलेन । विजनस्थयोरेकान्तस्थयोः । संभावयति मन्यते । भवांस्तावदच्युत उदासीनः । तत्किमित्यात्मानं वञ्चयावः । आमन्त्रणम् । हे अच्युतेति रूपम् । वाच्यस्येति । सिद्धाङ्गमिति योगः । अत्र वाच्यं स्वोपस्कारकाद्व्यङ्ग्यात्स्वात्मोपपत्तिं लभमानं वैदग्ध्यं प्रतिपादयद्व्यङ्ग्यमर्थं गौणयति । एतच्चेति । व्यङ्ग्यम् । एकत्रेति । भ्रमीत्यत्रैको वक्ता कविः । अपरत्रेति । गच्छामीत्यत्र पूर्वार्धे गोपी, उत्तरार्धे तु कविर्वक्ता ।

तथा कुर्या इति । एवंरूपं यद्व्यङ्ग्यं तस्य स्फुटत्वेन न प्रतीतिः । ततोऽनवमं करोतीति क्लिष्टम् ।

उमेति । बिम्बफलमधरयतो बिम्बफलाधरौ । तादृशावोष्ठौ यत्र मुखे तत्तथा । त्रयाणां नेत्राणां मुखेऽधरे ओष्ठे चेति स्थानत्रये व्यापारणं स चमत्कारः । अत एव विलोचनानीति बहुवचनोक्तिर्युक्तिमेति । यद्वाऽधरश्चासावोष्ठश्च तथा बिम्बफलाकारोऽधरोष्ठो यत्र तत्तथा । सर्वैर्नेत्रै-

अत्राधरं परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति संदेहः । तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥ १२१ ॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात्क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् । काक्वाऽऽक्षिप्तं यथा—

मथ्नामि कौरवशतं समरे न कोपाद्-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवता नृपतिः पणेन ॥ १२२ ॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम् ।

असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणि कोलाहलं सुणन्तीए ।
घरकम्मवावडाए बहुएसीअन्ति अङ्गाइं ॥ १२३ ॥

---

मुखावलोकने मुखस्य सौन्दर्यातिशयः प्रतीयते । संदेह इति । द्वयोरपि चमत्कारकारित्वादेकस्यापि निर्धारणं कर्तुं न पार्यते ।

ब्राह्मणेति । द्विजावज्ञात्यागे भवतां भूतिरहं च मित्रमित्येकोपक्रमे कार्यद्वयं सिध्यतीति महाचमत्कारकारीत्यर्थः । इयं रावणपुरुषं प्रति भार्गवोक्तिः । वाच्यस्येति । दौर्मनस्यरूपस्य ।

व्यङ्ग्यमिति । काक्वाक्षिप्तमिति संबन्धः । वाच्येति । वाच्यश्चासौ निषेधश्च तत्सहभावेन । अयं भावः—पूर्वं निषेधस्य प्रतीतिस्ततः प्राधान्येन व्यङ्ग्यस्येति नास्ति । किंतु द्वयस्यापि समं प्रतीतिः । न चात्र विपरीतलक्षणा । यत उच्चारणकाल एव न कोपादिति दीप्ततारगद्गदसाकाङ्क्षकाकुबलान्निषेधस्य निषेध्यमानतयैव युधिष्ठिरेष्टसंधेरक्षमारूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात् ।

वाणीरेति । गृहकर्मव्यापृतायाः । अन्यकर्मरतताया अपि वध्वाः सात-

---

१—वानीरनिकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात्सीदन्त्यङ्गानीति वाच्यं सचमत्कारम् ।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ ४६ ॥**

यथायोगमिति ।

व्यज्यन्ते वस्तुमात्रेण यदाऽलंकृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालंकारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ।

**सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

सालंकारैरिति तैरिवालंकारैरलंकारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।
संकरसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ इति ।

---

शयलज्जापरवशाया अपि अङ्गानीति बहुवचनेनैकमपि न तादृशमङ्गं यदात्मानं संवरीतुं शक्नोति । सीदन्ति । आस्तां गृहकर्म स्वमपि नालं धर्तुं गृहकर्म च । तथा स्फुटमलक्ष्यमाणेनान्यस्माद्वाच्यादेव समरपारवश्यप्रतीतेश्चमत्कारः । वाच्यं स्वात्मानमुन्मुच्य व्यङ्ग्यं निमज्जयतीत्यर्थः ।

एषां भेदा इति । यावन्तो भेदाः शुद्धध्वनेस्तावन्तो गुणीभूतव्यङ्ग्यस्यापि भवन्तीत्यर्थः । ध्वन्यङ्गतेति । व्यञ्जकत्वेन व्यङ्ग्यत्वेन च द्विधा ध्वन्यङ्गता । तत्रेह प्रस्तावाद् ध्वन्यङ्गता व्यङ्ग्यत्वेन ग्राह्या । ध्वनिरूपतेत्यर्थः । तदाश्रयादिति । यतोऽलंकारेषु काव्यवृत्तिर्विश्राम्यति । तेषां च गुणीभूततायां काव्यं वाक्यमात्रं भवेत् । न च वाक्ये वस्तुमात्रे काव्यव्यवहारः ।

तैरिवेति । गुणीभूतैस्तैरिव । अयं भावः—अत्र पक्षत्रयी । शुद्धध्वनेः केवलालंकारयोग इत्येकः पक्षः । द्वितीयः केवलगुणीभूतव्यङ्ग्ययोगः । तृतीयस्त्वलंकारयुक्तगुणीभूतव्यङ्ग्ययोगश्चेति । तैरिति । गुणीभूतव्यङ्ग्यैः । स गुणीभूतव्यङ्ग्यैरिति । स ध्वनिः स्वैः प्रभेदैः संकरसंसृष्टिभ्यां कृत्वा बहुधा स्यात् । एकस्मिन्नेव वृत्ते ध्वनिर्गुणीभूतव्यङ्ग्यं चालंकारश्च स्यादिति भावः । ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टिर्यथा—

अनुमत्र चेष्टिता — अनुभावैः

अन्योन्ययोगादेवं स्याद्भेदसंख्याऽतिभूयसी ॥ ४७ ॥

एवमनेन प्रकारेणावान्तरभेदगणनेऽतिप्रभूततरा गणना । तथा हि । शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यं का गणना तु सर्वेषाम् । संकलनेन पुनरस्य ध्वनेस्त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । तथा हि । किंचिद्वाच्यतां सहते किंचित्त्वन्यथा । तत्र वाच्यतासहमविचित्रं विचित्रं चेति । अविचित्रं वस्तुमात्रम् ।

---

षट्तर्कीललनाललामानि गते यस्मिन्मुनिस्वामिनि
स्वर्गे वाग्जननी शुचां परवशा कश्मीरमाशिश्रयत् ।
तत्रापि स्फुरितारतिर्भगवती जाने हिमाद्रिं गता
तापं तादृशपुत्ररत्नविरहे सोढुं न शक्ताऽन्यथा ॥

एवमेतत् । अत्र ललनाललामनीत्यविवक्षितवाच्यो ध्वनिः । जाने तादृशेति पदे गुणीभूतव्यङ्ग्ये । जाने इति पदेनोत्प्रेक्ष्यमाणानन्तधर्मिव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपं वाक्यार्थीक्रियते । तादृश इति पदेनासामान्यगुणौघो व्यक्तोऽपि गौणः । स्मृतिरूपस्य वाच्यस्य प्राधान्येन चारुत्वहेतुत्वात् । तयोः संकरो यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः । इति ।

अत्र रौद्ररसध्वनिर्वाक्यार्थीभूतः । तस्य व्यङ्ग्यविशिष्टवाच्यवाचिभिः पदैः संकरः । विभावादिरूपतायामरय इत्यादिकं रौद्रमेव पुष्णाति । वाच्यस्यैव क्रोधोद्दीपकत्वाद्गुणीभूतव्यङ्ग्यता । ध्वनेर्वाच्यालंकारसंसृष्टिसंकरविषयदृष्टान्ताः सुलभत्वान्नोक्ताः । सरसालंकारकाव्ये स्वयमूह्याः ।

अन्योन्येति । न केवलं ध्वनेः स्वभेदादिभि. संकरसंसृष्टी यावत्तेषामपि मिथो योगात्ते स्याताम् । किंचिदिति । व्यङ्ग्यम् । अयं भावः—वस्त्वलंकाररसादितया त्रिधा व्यङ्ग्यम् । तत्र वस्त्वलंकाररूपस्य वाच्यतायोग्यताऽस्ति । न तु यदैव व्यङ्ग्यता तदैव वाच्यतेति । अन्यथेति । रसादि कदाचनापि वाच्यतां न सहत इत्यर्थः । वस्तुमात्रमिति । मात्रशब्दादेतदुच्यते यद्विधिनिषेधतदुभयात्मतारूपेण वस्तुनो ध्वनिः

---

१ ख. °धर्मव्य° ।

विचित्रं त्वलंकाररूपम्। यद्यपि प्राधान्येन तदलंकार्यं तथाऽपि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्ते-स्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेका-भ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक्प्रतिपादितम्। शब्दशक्तिमूले त्वभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादे-रलंकारस्य च निर्विवादं व्यङ्ग्यत्वम्। अर्थशक्तिमूलेऽपि, विशेषे संकेतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकाङ्क्षा-संनिधियोग्यतावशात्परस्परसंसर्गे यत्रापदार्थोऽपि विशेषरूपो

---

संक्षिप्तः। न त्वलंकाराणाम्। बहुत्वात्। तथेति। ध्वनिरप्यलंकार-तया निर्दिश्यत इत्यर्थः। लक्षणस्त्विति। रसादेर्वाच्यतायोग्यताऽपि ने-त्यर्थः। केवलं व्यञ्जनव्यापारेणाऽऽस्वाद्यमानजीवतया भाति न व्यापारा-न्तरेणेत्याह—स हीति। तत्प्रयोगेऽपीति। रसादिशृङ्गारादिशब्दप्रयोगेऽ-पि। तदप्रयोगेऽपीति। रसादिशृङ्गारादिशब्दाप्रयोगेऽपि। प्रतीयत इति। प्रतीतिविषयः। मुख्यार्थेति। न हि विभावादौ मुख्यार्थे बाधाऽस्ति येन लक्षणा स्यात्।

वस्तुमात्रेति। आस्तां रसरूपं व्यङ्ग्यं दूरे तावदित्यर्थः। प्रागिति। सहिता तु प्रयोजन इत्यत्र। एतेन लक्षणाऽपि व्यङ्ग्यं विना न स्यादित्यर्थः। ततो यदा लक्षणायां वस्तुरूपमपि व्यङ्ग्यं न लक्ष्यत्व-मागतं तदा कथं रसादेर्लक्ष्यता। अर्थान्तरस्येति। अप्राकरणिकस्य। तेनेति। अर्थान्तरेण सहोपमादेरलंकारस्य। न युज्यत इति। संकेतो हि न नियते विशेषांशे। आनन्त्याद्व्यभिचाराच्च। संसर्ग इति। विशे-षणविशेष्यभावरूपेऽन्वये। अपदार्थोऽपीति। अपिशब्दोऽत्र व्यवहित-क्रमः। तेन यदा वाक्यार्थोऽप्यपदार्थोऽनभिधेयस्तदोक्तानां पदाना-मुत्तरकालमन्वयमन्योन्यानुकूल्यरूपं वदतां मते व्यङ्ग्योऽर्थोऽपदार्थ एव नाभिधेय इत्यर्थः। विशेषरूप इति।

वाक्यार्थस्तत्राभिहितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम् ।

येऽप्याहुः ।

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥
अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम् ।
अर्थापत्त्याऽवबुध्यन्ते संबन्धं त्रिप्रमाणकम् ॥

इति प्रतिपादितदिशा देवदत्त गामानयेत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सत्यनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्न इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणसंबन्धमवधार्य बालस्तत्र व्युत्पद्यते । परतश्चैत्र गामानय देवदत्ताश्वमानय

---

सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ।

इति न्यायात् ।

येऽपीति । अन्विताभिधानवादिमतमेतत् । शब्देति । शब्दः श्रोत्रेण प्रत्यक्षः । वृद्धघटादिरूपाभिधेयौ तु चक्षुषा । प्रतिपन्नत्वमिति । अनेनायमर्थो ज्ञात इति प्रतिपत्तिः पदार्थानयननयनादिरूपचेष्टाहेतुकानुमानेन पश्यति परिच्छिनत्तीत्यर्थः । द्वयात्मिकामिति । वृद्धज्ञानान्यथानुपपत्त्या शब्दे वाचिकां पदार्थे वाच्यां शक्तिमिति । क्वचिद् द्वयाश्रितामिति पाठः । द्वयं शब्दार्थस्वभावम् । एवं त्रिप्रमाणं संबन्धमर्थापत्त्यैव जानते । साक्षाच्छक्तिविषयतया हि व्यापारादर्थापत्तेः कारणता । पूर्वयोस्त्वितिकर्तव्यतारूपतेति भावः । किं चापरं व्याख्यानम्— ज्ञानान्यथानुपपत्त्याऽर्थापत्तिप्रमाणेन द्वयाश्रितां शक्तिं पश्यति बालः । इत्थं त्रिप्रमाणं संबन्धमवबुध्यन्ते बुधा. प्रतिपादयन्तीति भावः । तच्चेष्टयेति । मध्यमवृद्धचेष्टया । तत्रेति । वाक्याद्वाक्यार्थविषये । अखण्डेति वाक्यवाक्यार्थविशेषणं लोकरूढ्योक्तम् । यावता त्वन्वितवादिनां मतेऽखण्डौ वाक्यवाक्यार्थौ न स्तः।व्यवहर्तृगतशब्दप्रयोगार्थप्रतीत्योरविभक्तया, उद्देशवाक्यवाक्यार्थनष्टतया पूर्वं हेतुमद्भावावगतौ सत्यामखण्डत्वप्रतीतिः स्यादित्यर्थः । परत इति । तदनन्तरं चैत्र गामानयेत्या-

देवदत्त गां नयेत्यादि वाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीत्यन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव संकेतो गृह्यत इति विशिष्टा एव पदार्था वाक्यार्थो न तु पदार्थानां वैशिष्ट्यम् । यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययनेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः संकेतगोचरस्तथाऽपि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः । तेषामपि मते सामान्यविशेषरूपः पदार्थः संकेतविषय

---

दिवाक्येषु कदाचित्कस्यापि शब्दस्योद्वापः परावृत्तिरिति यावत् । व्यतिरेकाभ्यामिति । पदानां संकेतो गृह्यत इति योगः । निवृत्तिकारीति । प्रवृत्तिनिवृत्तिरूपो वृद्धव्यवहारः । प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे । अतो विशिष्ट एवार्थे पदानां संबन्धावगतिः । वाक्यमेवेति । अनन्वितार्थपदप्रयोगे काऽपि प्रवृत्तिर्न संभवति । पदानामिति । अन्वितानामिति शेषः । अन्वितैरिति । पदान्तरैः पदानामर्थान्तरैरर्थानामन्वय इति भावः । विशिष्टा एवेति । विशिष्टा एवान्विता पदार्था पदानामभिधेया न तु पदार्था एव केवला । अयमाशय —वाक्यार्थस्तावत्क्रियाकारकयोगात्मा । कारकक्रियाश्च संबन्धाभिमुख्येन मिथो विरहासहिष्णुत्वेनान्विता एव स्वशक्तैरुच्यन्त इत्यर्थ. । न त्विति । सामान्यत्वेनोक्तानां पदार्थानां न पश्चाद्वैशिष्ट्यं स्यादिति । यद्यपीति । संकेतगोचर इति योग । अयं भावः—यदि पदार्थाः पदार्थान्तरविशेषैरन्विता संकेतविषया. स्युस्तदा मैत्रमैत्रीस्तत्रयेत्यादिवाक्येष्वेषां पदानामत्रैव वाक्येऽर्थप्रतिपादकता स्यात् । नान्यवाक्यस्थानां विशेषान्वितानाम् । संकेताविषयत्वात् । तथा सति स एवायमिति प्रत्यभिज्ञाप्रत्ययोऽपि न स्यादिति । तानीति । यानि वाक्यान्तरे प्रयुक्तदृष्टानि । सामान्यावच्छादितं इति । न्यग्भूतसामान्यः । असाविति । पदार्थः । व्यतिषक्तानामिति । वाक्यमेव प्रयोगार्हमित्याशयतः पदार्थान्तरैर्युक्तानामेव । तथाभूतत्वादिति । सामान्यावच्छादितविशेषरूपत्वात । विशेषरूप इति ।

इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा। अनन्वितोऽर्थोऽभिहितान्वये। पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने। अन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः।

यदप्युच्यते नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्त इति, तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा। शब्दस्य प्रकाशत्वान्न कारकत्वम्। ज्ञापकत्व त्वज्ञातस्य कथम्। ज्ञातत्वं च संकेतेनैव। स चान्वितमात्रे। एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथम्। इति नैमित्तिकानु-

---

सामान्यप्रतीतिनान्तरीयका विशेषाः।

निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।

इति न्यायात्। ततः सामान्यावच्छादितो विशेष एव संकेतस्य विषयः। सामान्यं त्वनुक्तमपि ज्ञायत इत्याह। अतिविशेष इति। विशेषमतिक्रान्तो यः स्वभावः सोऽतिविशेषः। तं भूतः प्राप्तोऽतिविशेषभूतः सामान्योऽर्थः। केवलपदार्थरूप इति यावत्। यद्वा विशेषमतिक्रान्तोऽतिविशेषः। स चासौ भूतश्च स तथा सामान्योऽर्थः। यत्रेति। वाक्ये यदाऽन्विताभिधानवादे सामान्योऽप्यर्थो न वाच्यस्तदा का वार्ता व्यङ्ग्यस्य वाच्यतायाः। अनन्वित इति। अविशिष्टः सामान्यरूपः पदानामर्थः संकेतस्य विषय इति शेषः। अन्वितेति। वाक्यर्थस्त्वपदार्थ एवेति योगः। अन्वितविशेषः। सर्वाङ्गसंपूर्णः केवलविशेषरूपः। एतद्वाक्यार्थविशेषणमिति पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः।

यदपीति। अन्विताभिधानवादिभिः प्राभाकरैः। नैमित्तिकार्थेति। वाक्यार्थतात्पर्यं नैमित्तिकार्थः। निमित्तानीति। प्रस्तावाच्छब्दाः। ततस्तात्पर्यानुसारेण यदा शब्दाः कल्प्यन्ते तदा व्यङ्ग्यं वाच्यमेवेति भावस्तेषाम्। अन्वितमात्र इति। सामान्यावच्छादितविशेषरूपे। निश्चितमिति। निमित्तेषु संकेतो न नैमित्तिकेऽर्थे। तत्कथं नैमित्तिकस्य साक्षात्प्रतीतिः। तदप्रतीतौ कथं पदार्थान्तरगतिर्नियतनिमित्ता स्यादिति।

सारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति, यत्परः शब्दः स शब्दार्थ इति च विधिरेवात्र वाच्य इति । तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानांप्रियाः। तथा हि । भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात्साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते । यथा—ऋत्विक्प्रचरणे प्रमाणान्तरात्सिद्धे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयम् । हवनस्यान्यतः सिद्धेर्दध्ना जुहोतीत्यादौ दध्यादेः कारणत्वमात्रं विधेयम् । क्वचिदुभयविधिः । क्वचित्त्रिविधिरपि । यथा रक्तं पटं वयेत्यादावेकविधिर्द्विविधिस्त्रिविधिर्वा । ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे

---

इषोरिवेति । यथा शरो वर्मोरसी भित्त्वा जीवितमादत्ते प्रवृत्तिभेदाभावेऽपि तथा वाक्यमप्याभिधयैव वाच्यव्यङ्ग्ये वक्तीति भावः । अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वं तत्पर्यन्तता च प्रधाने ध्वनावेव । एतेन वाच्यव्यङ्ग्ययोरभिधैव व्यापारः । विधिरेवेति । विधिरेव वाच्यो न पुनर्निषेधोऽपि । अवान्तरत्वाद्विधेस्तु निर्वाहत्वाद्वाच्यतेति भावः । अत्रेति । निःशेषच्युतेत्यादौ । अतात्पर्यज्ञा इति । यत्परशब्दः स शब्दार्थ इत्येतन्न जानन्तीत्यर्थः। भूतमिति । प्रमाणान्तरेण सिद्धं भूतम् । असिद्धं भव्यम् । भवतीति व्युत्पत्तेः । साध्यं भव्यमिति यावत् । कारकेति । यथा चैत्रः काष्ठैः स्थाल्यामन्नं पचतीत्यादावन्नपाकश्चेदन्यतः सिद्धस्तदा स्थाल्याधारत्वमेव विधेयम्। तस्यैव साध्यत्वात् । प्रधानेति । प्रचरणरूपा क्रिया । स्वक्रियेति । लोहितोष्णीषत्वविधानाद्याः क्रियाः । साध्यायमानताम् । साध्यरूपताम् । यावदप्राप्तमिति । यावन्मात्रं साध्यं तावन्मात्रं विधेयमिति भावः । लोहितोष्णीषत्वमात्रमिति । यत्तस्यैव सर्वैः कारकैः साध्यत्वात् । अस्मिन्दृष्टान्तद्वये वस्त्वेकमेव विधेयमिति मात्रशब्दाल्लभ्यते । रक्तं पटमिति । अत्र रक्तत्ववानपटभवनानां क्रमयौगपद्याभ्यां साध्यत्व एकद्वित्र्यादिविधिः । उपात्तस्यैवेति । उपात्तस्यैव शब्दस्य संबन्धिन्यर्थेऽभि-

तात्पर्यं न तु प्रतीतमात्रे । एवं हि पूर्वो धावतीत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यात् । यत्तु विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था इत्यत्रैतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इति । उच्यते—तत्र चकार एकवाक्यतासूचनार्थः । न चाऽऽख्यात-वाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वे-नाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा माऽस्य गृहे भुङ्क्था इत्युपात्तशब्दार्थ एव तात्पर्यम् ।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्द-स्याभिधैव व्यापारस्ततः कथं ब्राह्मण पुत्रस्ते जातो ब्राह्मण कन्या ते गर्भिणीत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् । कस्माल्लक्षणा । लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव

---

धेये तात्पर्यं न हेत्वन्तरेण ज्ञातमात्रे व्यङ्ग्येऽप्यर्थे तात्पर्यप्रसङ्गः । एवमिति । ज्ञातमात्रे तात्पर्यप्रसङ्गेऽङ्गीक्रियमाणे पूर्वशब्दस्य सापेक्षत्वा-दपराद्यर्थोऽपि ज्ञायत इति तत्रापि किं तात्पर्यम् । क्वचित्प्रतीतमात्रेऽपि तात्पर्यं स्यादित्याशङ्क्याह—यत्त्विति । भुङ्क्था इत्यत्र । अत्रेति वाक्यद्वये । न भोक्तव्यमित्यत्र । अत्रेत्यर्थे । उच्यत इति । आचार्योत्तरम् । तत्रेति । भवदुक्ते विषं भक्षयेत्यादिवाक्यद्वये । न चैतद्वाक्यद्वयमित्याह—चकार इति । तथाऽऽह जैमिनिः—अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ( जै० सू० २।१।४६ ) । अत एव—

न दूये नः पूर्वं नृपतिमनरण्यं यदवधीः

इत्यादौ द्विवाक्यत्वेऽपि साकाङ्क्षत्वेनैकवाक्यतायां च यच्छब्दातिश्च साकाङ्क्षताहेतुः, यदि तु विभागे निराकाङ्क्षौ तदा द्वे वाक्ये । अर्थद्वयव-त्त्वात् । उपात्तेति । न हि मित्रादेः कोऽपि भोजनं निषेधन्विषमनुमन्यते ज्ञानवक्त्रादिस्वभावस्तद्गृहे भोजनमतिदुष्टं तात्पर्येण जानातीत्यत्राप्युपात्त एव तात्पर्यम् ।

हर्षेति । हर्षादिकं हि पुत्रस्ते जात इत्यादिवाक्यार्थप्रतीत्या जन्यते । न च शब्दस्य प्रकाशकत्वाज्जनकत्वं किं तु ज्ञापकत्वमिति जननाद्भिन्नं व्यञ्जनम् । अयं भावः—संकेतापेक्षी शब्दः । तस्मात्तस्य यत्रार्थे संकेत-

प्रतीतिसिद्धेः । कस्माच्च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा-

---

स्तत्रैवाभिधा नार्थान्तरे । तत्र संकेताभावात् । मीमांसकं प्रत्याह— कस्माच्चेति । श्रुतीति । यस्याभिधेयेनार्थेन सह नैकट्यं स बलीयान् । यस्य च व्यवहितत्वं स दुर्बलः । व्यवहिताव्यवहितत्वे च नाभिधागम्ये । किं तु व्यङ्ग्ये । एतच्च त्वया नेष्यते । तत्कथमेकस्य बलीयस्त्वम् । श्रुत्यादीनामभिधाव्यापारस्य समानत्वात् । प्रकृतिप्रत्ययश्रुत्योः स्वार्थाभिधायकत्वेन पदस्य कारकविभक्तीनां च विनियोजकत्वेन लिङ्गादीनां विधिसामर्थ्येन चेति क्रमेणाभिधात्रीविनियोक्त्रीविधात्रीसंज्ञास्तिस्रः श्रुतयः । यदर्थस्याभिधानं शब्दश्रवणमात्रादेवावगम्यते सा श्रुतिः । अङ्गत्वापादनं प्रधाने श्रुत्यादीनामर्थः । क्रमेणोदाहरणानि—बर्हिर्देवसदनं दामीति । अत्र दामीति लवनलिङ्गादेवाऽऽश्रयो दर्भोऽनेन मन्त्रेण लूयत इति प्रतीयते । श्वेतं छागमालभेत । अत्रैकवाक्योपादानाच्छ्वेतगुणस्य च्छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते । यथा वाऽरुणया, एकहायन्या पिङ्गाक्ष्या सोमं विक्रीणाति । अत्रारुणादीनां क्रयेण संबन्धः श्रौतः । अरुणैकहायन्यादीनां मिथः पुनर्वाक्यीयः । दर्शपौर्णमासप्रकरणे—समिधो जयति तनूनपातं यजति, इडा यजति बर्हिर्यजति स्वाहाकारं यजतीति पञ्च प्रयाजा उक्ताः । ते च दर्शपौर्णमासयोरेव क्रियन्ते । तदङ्गत्वमवगम्यत इत्यादि । अग्निरन्नस्यान्नपतिस्तस्याहं देवयज्यायाऽन्नस्यान्नपतिर्भूयासम् १ दब्धिरस्यदब्धो भूयास तममुं दभेयम् २ अग्नीषोमौ वृत्रहणौ तयोर्देवयज्यया वृत्रहा भूयासमिति मन्त्रत्रयादाग्नेययाग उपांशुयागः, अग्नीषोमीययागश्चेति यागत्रय क्रमेण स्थितम् । तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणाल्लिङ्गादाद्यन्तौ यागावाक्षिप्येते । द्वितीयेन मन्त्रेण द्वितीययागस्तु, उपांशुयागः स्फुरदोष्ठमुद्रस्वरस्थानवशात् । उद्गाताऽध्वर्युर्होतेति । उद्गायतीत्यादिसमाख्ययाऽन्वर्थसंज्ञाबलात्सामयजुरादिषु वेदेष्वधिकृत इति निश्चीयते तेष्वङ्गभाव इत्यर्थः । ऐन्द्येत्यत्रैन्द्या ऋचेन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थानविनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते । तेनैन्द्याऽप्येतया गार्हपत्यस्यैवोपस्थानं भवति ।

अथवेत्थमपि श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वम् । यथा—भोः सैन्धवमानयेत्यत्र समाख्यया नाम्ना सैन्धवशब्दो लवणार्थः सन् स्थानेन रस-

ख्यानां पूर्वपूर्वबलीयस्त्वम् । इत्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् । किं च कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम् । न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेत्येवमाद्यपरित्याज्यं स्यात् ।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामानित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नम् । सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्यवाचकभावव्यतिरेकेण

---

त्वया समाख्यां बाधित्वा लवणयुक्तार्थः कृतः । अतः स्थानं बलीयः । स्थानेऽपि यदाऽश्ववार्ताप्रस्तावस्तदा स्थानोचितलवणबाधेनाश्वार्थः कृतः । अतः प्रस्तावो बली । प्रस्तावार्पितमप्यश्वसामान्यं त्यक्त्वा कर्मरूपे विशेषे वर्तत इति प्रस्तावाद्वाक्यं बलीयः । वाक्यार्पितमपि सामान्यं कर्मत्वं त्यक्त्वा चित्तलादिना स्त्रीपुंस्त्वादिना वा लिङ्गेन विशिष्टेऽश्वे वर्तत इति वाक्याल्लिङ्गं बलीयः । लिङ्गाल्लब्धेऽप्यश्वविशेषे यदाऽऽनयेत्यत्रोदात्तश्रुतिस्तदाऽऽनयेति विधेयम् । सर्वमप्यनुवाद्यमिति सर्वेभ्यः श्रुतिरधिका । श्रुतिर्निरन्तरार्थनिष्ठः शब्दव्यापारः । यद्वाऽयमेवार्थः प्रकारान्तरेण कथ्यते । यथा जितोच्चैःश्रवसा तेजसा भान्तं वल्गोपेतं श्वेतं कटकयोग्यं मन्दुरायाः सैन्धवमानय । अत्र पूर्वपूर्वबलीयस्त्वं स्फुटम् । विधेरपीति । निःशेषच्युतचन्दनेत्यत्र यो विधिः सर्वसंमतस्तस्यापीत्यर्थः । वैपरीत्य इति । कृते सतीत्यध्याहार्यम् । रुचिं कुरु इति रूपं वैपरीत्ये । काव्यान्तर्वर्तिनीति । अस्याभिप्रायो यत्काव्यमध्यस्थापिते वैपरीत्ये दोषोऽन्यत्र तु का दोषचर्चा । असभ्यार्थ इति । चिक्कुरितिरूपः । योन्यन्तर्वर्ती मणिश्चिक्कुः । एवमादीति । रुचिं कुर्वित्यादि । अन्विताभिधायिनां दूषणमेतत् ।

विभागकरणमिति । अयं भावः—असाधुत्वादयो लक्षणवैकल्यादयो दोषा दोषा एव । कष्टत्वादयस्तु श्रुतिदुष्टादिरूपाः स्वार्थवाचकत्वे समानत्वेऽपि शृङ्गारादौ दोषाः । रौद्रादौ तु गुणा न तु दोषाः ।

व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात्कचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् । अपि च वाच्योऽर्थः सर्वान्प्रतिपत्तॄन्प्रत्येकरूप एवेति नियतोऽसौ । न हि गतोऽस्तमर्क इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते । तथा च गतोऽस्तमर्क इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामह इति, सांध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, संतापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नाऽऽगतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति ।

वाच्यव्यङ्ग्ययोः, निःशेषेत्यादौ निषेधविध्यात्मना,
मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥१३४॥
इत्यादौ संशयशान्तशृङ्गार्यन्यतरनिश्चयरूपेण,

कथमवनिप दर्पो यन्निशातासिधारा—
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३५ ॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य, पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाऽऽश्रयस्य, शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेश्ययोः प्रतीतिमात्रचमत्कृत्योश्च करणात्कार्यस्य, गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः,

---

किमितीति । यदि व्यङ्ग्यव्यञ्जकभावो नेष्यत इति ।

[1]कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिं ॥ १३६ ॥

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्कचिदपि नीलपीतादौ भेदो न स्यात् । उक्तं हि–अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति । वाचकानामर्थापेक्षा व्यञ्जकानां तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् ।

किं च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन्कस्य व्यापारस्य विषयतामवलम्बतामिति ।

ननु रामोऽस्मि सर्वंसह इति, रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितमिति, रामोऽसौ भवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परामित्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते । विशेषव्यपदेशहेतुश्च भवति । तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम । उच्यते । लक्षणीयस्यार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवन्नियतत्वमेव । न खलु मुख्येनार्थेनानियतसंबन्धो लक्षयितुं शक्यते । प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियतसंबन्धोऽनियतसंबन्धः संबद्धसंबन्धश्च द्योत्यते । न च

[2]अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं लोएहि ।
मा पहिअ रत्तिअंधअ सेज्जाए मह णिमज्जहिसि ॥ १३७ ॥

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ न मुख्यार्थबाधः । तत्कथमत्र लक्षणा । लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्य-

---

१–कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ।

२–श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय ।
मा पथिक राज्यन्ध शय्यायामावयोर्निमङ्क्ष्यसि ॥

मिति प्रतिपादितम् । यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा । अत एवाभिधापुच्छभूता सेत्याहुः ।

न च लक्षणात्मकमेव ध्वननम् । तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव । अभिधावलम्बनेनापि तस्य भावात् । न चोभयानुसार्येव । अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव । अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरित्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव ।

तत्राता एत्थेत्यादौ नियतसंबद्धः । कस्स व ण होइ रोसो इत्यादावनियतसंबद्धः ।

[1]विपरीअरए लच्छी वह्मं दट्ठूण णाहिकमलट्ठम् ।
हरिणो दाहिणणअणं रसाउला झत्ति ढकेइ ॥ १३८ ॥

इत्यादौ संबद्धसंबद्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते । तन्निमीलनेन सूर्यास्तमयः । तेन पद्मस्य

---

तस्येति । ध्वननस्य । भावादिति । न हि व्यङ्ग्ये प्रतीयमाने वाच्याद्बुद्धिर्दूरी भवति । न चोभयेति । अभिधालक्षणारूपमुभयम् । अवाचकेति । अर्थानुपयोगेऽपि कोमलादिवर्णानां रसव्यञ्जकत्वदर्शनात् । अशब्देति । अभिधाव्यापारास्पृष्ट इत्यर्थः । अवलोकनादीति । आदिशब्दाद्बाष्पावेशकुचकम्पादि । तस्येति । ध्वननस्य । अनपह्नवनीय एवेति । तत्र नाभिधा । संकेताभावात् । अन्वयप्रतीतावेव क्षीणशक्तिकत्वान्न तात्पर्यम् । अस्खलद्गतित्वान्न लक्षणा ।

तत्र । तेषु अत्तेत्यत्रैव शेष्वेतिविधिनियतसंबन्धः । नियतेन नियतत्वेन, इयत्तया संबद्धो नियन्त्रितः । कस्सवेत्यादौ पुनरनियतसंबद्धः । संबद्धसंबद्ध इति । संबद्धस्य व्यङ्ग्यस्य यस्य संबद्धोऽन्यो व्यङ्ग्योऽर्थः ।

---

१—विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥

संकोचः । ततो ब्रह्मणः स्थगनम् । तत्र सति गोप्याङ्गस्याद्‌र्शनेनानिर्यन्त्रणं निधुवनविलसितमिति ।

अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यो वाक्यमेव च वाचकमिति येऽप्याहुस्तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

ननु वाच्यादसंबद्धं तावन्न प्रतीयते । यतः कुतश्चिद्यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवं च संबन्धाद्व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत्तद्रूपः पर्यवस्यति । तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥ १३९ ॥

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपल-

---

येऽपीति । वैयाकरणाः शब्दब्रह्मवादिनः । वाक्यार्थ एवार्थ इत्यर्थः । वाक्यमेवेति । न पदमित्यर्थ । तैरपीति । वैयाकरणैरपि देशकालावच्छेदेन सर्वव्यवहर्तृनिष्ठतया कल्पितपदाश्रयणेन वाच्यवाचककल्पना क्रियत एवेति तन्मतेऽप्यर्थान्तरप्रतीतौ व्यञ्जकत्वं न वाचकत्वम् । एतेन पदार्थवाक्यार्थन्यायो न तात्पर्यशक्तिसाधक इति ज्ञापितम् । उक्तोदाहरणेति । निःशेषच्युतेत्यादौ ।

वाच्यादिति । व्यञ्जकत्वं शब्दानां गमकत्वम् । तच्च लिङ्गमेव । अतो व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति । तथासति लिङ्गलिङ्गितैव व्यङ्ग्यव्यञ्जकतेत्यर्थः । संबन्धादिति । गम्यगमकतारूपात् । अप्रतीति । अविनाभावाभावे । एतेनान्वयव्यतिरेकात्मसपक्षसत्त्वविपक्षासत्त्वरूपा व्याप्तिर्दर्शिता । नियतधर्मीति । एतेन पक्षधर्मतोक्ता । पक्षधर्मेरापक्षसत्त्वविपक्षव्यावृत्तयो रूपत्रयी । लिङ्गीति । अनुमेयः । तद्रूप इति । एवं निर्वाहेऽनुमेय एव व्यङ्ग्योऽर्थ इत्यर्थः । भमेति । अत्र सिंहस्योत्तमत्वेन श्वबाधोऽनुचित इति दरी अरिच्छेणेत्यन्ये पठन्ति । गृह इति । यत्र

---

१–भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

ध्येरभ्रमणमनुमापयति । यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम् । गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेणान्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः । शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः । अपि तु वचनात् । न च वचनस्य प्रामाण्यमस्ति । अर्थेनाप्रतिबन्धात् । इत्यसिद्धश्च । तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः । तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति । आतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि ।

---

सा दुःशीलाऽस्ति । अत्र विधिर्वाच्यो निषेधस्त्वनुमेयः । कच्छकुडङ्गस्य धर्मित्वनिर्देशः सिंहसद्भावस्य हेतुत्वम् । वासिणेति विशेषणेन धर्मिणि सिंहस्य सद्भावो दर्शितः । भीरुभ्रमणं व्याप्यम् । भयहेतुनिवृत्तिर्व्यापिका । सिंहास्तित्वं व्यापकविरुद्धोपलब्धिनामा हेतुः ।

अनैकान्तिक इति । व्यभिचारी । बिभ्यदिति । अधमत्वादिति हेतुः । अप्रतिबन्धादिति । अयं भावः—वचनार्थयोस्तादात्म्यतदुत्पत्तिलक्षणौ संबन्धौ न घटेते । तथा हि । तयोस्तादात्म्ये मोदकादिवचनोच्चारे मुखादेः पूरणादिप्रसङ्गः । तदुत्पत्तौ हि किं वचनादर्थस्योत्पत्तिः किं वाऽर्थाद्वचनस्य । उभयमपि न घटते । वचनस्य ताल्वादिभ्य उत्पत्तेः । अर्थस्य तु मृत्पिण्डादिस्वकारणात् । किं च वचनादर्थोत्पत्तिस्वीकारे राज्यादि मे भूयादित्युक्त्यैव तत्स्यात् । अर्थाच्च वचनोत्पत्तिस्वीकारेऽर्थे दृष्टे शब्दैर्भाव्यमेवेति स्यात् । एवंविधादिति । अनैकान्तिकविरुद्धासिद्धरूपाद्धेतोः साध्यस्य व्यङ्ग्यस्य सिद्धिः । स्नानकार्येति । स्नानं कारणान्तरम् । न परं चन्दनच्यवनादिकं संभोगाद्भवति किं तु स्नानरूपात्कारणान्तरादपि स्यादित्यर्थः । आतश्चेति । अत एवेत्यर्थः । अत्रैवेति । अत्रापीत्यर्थः ।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशत इति व्यक्तिवादिनः पुनस्तददूषणम् ।

इति श्रीकाव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥

---

व्यक्तिवादिनेति । व्यक्तिविवेककारेण । एषामिति । चन्दनच्यवनादीनाम् । अधमपदसाहित्येनाव्यभिचारीणि चन्दनच्यवनादीन्यनुमापकानि भविष्यन्तीत्याशङ्क्याऽऽह–न चात्रेति । एवंविधादिति । निःशेषच्युतेत्यादिप्रोक्तात् । एवंविध इति । उपभोगादिरूपः । उपपत्त्यनपेक्षत्वेऽपीति । अनुमानादिरूपा ह्युपपत्तिः । प्रत्यक्षादिप्रमाणान्तरप्रतीतोऽर्थोऽनुमानाङ्गम् । यतो धूमवत्साहित्ये इह अर्थप्रतीतीनां लोकोत्तरचमत्काररूपप्रतिविश्रान्तिरेव साध्या न सत्त्वासत्त्वनिरूपणेति तदुपपत्त्यनपेक्षत्वम् । अदूषणम् । न दुष्टमित्यर्थः ॥

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते पञ्चमोल्लासः समाप्तः ।

अथ षष्ठ उल्लासः ।

शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥ ४८ ॥

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् । अर्थचित्रे वा शब्दस्य ।
तथा चोक्तम्—

रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलंकारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥ इति ।

---

संकेतरीतिरेषैव ज्ञानश्रीभुक्तयेऽधुना ।
वर्णनाविषयी चक्रे यत्र वाणीगतध्वनिः ॥

अथावरकाव्यभेदानाह—शब्दार्थेति । संनिवेशविशेषेण यथाक्रमं शब्दार्थौ चित्रौ यत्र शब्दार्थाभ्यां वा चित्रं यत्तत्तथा । पूर्वमुदाहृतम् । प्रोक्तमित्यर्थः । न तूदाहृतं दृष्टान्तीकृतमिति । गुणेति । गुणश्च प्रधानं चेति विग्रहे भावप्रत्ययः । क्वचिदुत्तरपदस्यापीति वृद्धिः । यद्वा गुणश्चेत्यलन्ततया गुणीकरणं च प्राधान्यं चेति । तत्रेति । शब्दार्थचित्रकाव्ययोः । अयं भावः । यत्र शब्दचित्रं प्रधानं तत्राप्यर्थचित्रं गौणमस्त्येव । एवमर्थचित्रेऽप्यूह्यम् । न पुनरेकैकचित्रं क्वापि काव्यं स्यात् । तथा चोक्तमिति । भामहेनेति शेषः । तस्येति । काव्यस्य । न कान्तमपीति । यथा सलावण्यमपि मुखं निर्भूषं सन्न भाति तथा शब्दार्थशरीरमपि काव्यं सगुणमपि निरलंकारं न भातीत्यर्थः । अपरे तु काव्यस्वरूपासमवेतत्वेन रूपकाद्यर्थालंकाराणां बहिरङ्गतां मन्वानाः सुप्तिङ्व्युत्पत्तेः काव्यस्वरूपसमवेतत्वेनान्तरङ्गतामाहुरित्याह—रूपकादिमिति । गौडमतमेतत् । तदेतदिति । सुप्तिङात्मकं सौशब्द्यं शब्दवैचित्र्यम् । शब्दालंकारसाधकमेतत् । अर्थव्युत्पत्तिरर्थवैचित्री पुनरर्थालंकारसाधिका । नेदृशी । न सुप्तिङात्मिकेत्यर्थः । अथवाऽर्थव्युत्पत्तिरर्थालंकाररूपा । रूपकाद्यलंकृतिरीदृश्यन्तरङ्गा न । किं तर्हि गौणा । इत्यपि व्याख्या । अथवाऽर्थव्युत्पत्तिरपि काव्ये प्रयोज्यत्वेन मतेत्याह—द्वयं तु न इति । भामहः

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ॥
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १४० ॥

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥ १४१ ॥

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानं तथाऽपि स्फुटस्य रसस्यानुपलम्भाद्व्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालंकारभेदाद्बहवो भेदाः । ते चालंकारनिर्णये निर्णेष्यन्ते ।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम
षष्ठ उल्लासः ॥ ६ ॥

---

शब्दस्यार्थस्य चालंकारानिष्टवान् परं गुणप्रधान्येन ।

प्रथममिति । अत्र क्षणदामुखे प्रदोषे प्रथममरुणच्छायः सन्निन्दुरुदयत्यूर्ध्वं गच्छति । ततः कनकप्रभः सन्नित्यादि योज्यम् । अत्र शब्दालंकारश्छेकानुप्रासः । अरुणादेरिव च्छाया छविर्यस्येति वृत्त्याऽरुणच्छाय इत्यादिषु पुनरर्थालंकार उपमा ।

ते दृष्टीति । अत्रालका इव खला इत्युपमालंकारः शब्दश्लेषप्रतिभोत्पत्तिहेतुरिति मम्मटः । उपमाप्रतिभोत्पत्तिहेतुरर्थश्लेषः

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।

इतिवदिति तूद्भटः । अत्रालीकेति परावृत्त्यसहत्वेन शब्दश्लेषसाधकम् । कुटिलतामिवेति समुच्चितोपमया व्याख्येयम् । कालतां कुटिलतां न त्यजतीति भावः । ततोऽर्थसंगतिः । अनुपलम्भादिति । अनीषदुपलम्भादित्यर्थः । अत्र चेति । शब्दार्थचित्रकाव्ययोः ।

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते
षष्ठोल्लासः समाप्तः ।

अथ सप्तम उल्लासः ।

---

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ ४९ ॥

हतिरपकर्षः । शब्दाद्या—इत्याद्यग्रहणाद्वर्णरचने ।

विशेषलक्षणमाह—

दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥
संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥५१॥

श्रुतिकटु ( परुषवर्णरूपं ) दुष्टं यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥ १४२ ॥

अत्र कार्तार्थ्यमिति ।

---

संकेतवर्त्मनाऽनेन सम्यक्पठनतत्पराः ।
नन्दयन्ति विदग्धानां मनांसि सुमनोगिरः ॥

मुख्यार्थेति । एतेन रसापकर्षहेतुत्वं दोषाणां सामान्यलक्षणमुक्तम् । तदाश्रयादिति । तस्य रसस्याऽऽश्रयभूतत्वाद्वाच्योऽप्यर्थोऽपि मुख्यः । अपिशब्दोऽत्र लुप्तो ज्ञेयः । उभयेति । रसवाच्यौ । तेष्वपीति । न केवलं रसवाच्ययोः । शब्दादिषु स दोषो वाच्यः । शब्दादीनां रसे वाच्ये चोपयोगसद्भावाद्दोषाः स्युरित्यर्थः ।

विशेषेति । दोषाणामिति शेषः । मुख्यतया रसे दोषाः । भक्त्या शब्दार्थयोः । मुखे शब्दमुपलभामह इति नयेन शब्दप्रतीतिः । शब्दश्च पदवाक्यरूप इत्यतः सूत्रक्रममुल्लङ्घ्य प्राक् पददोषानाह—दुष्टमिति । अथेति । क्लिष्टाद्यास्त्रयः समासपदेष्वेव दुष्टाः स्युर्नान्यत्रेत्यर्थः ।

अनङ्गेति । अनङ्गमङ्गलगृहस्यापाङ्गस्य भङ्गस्य विच्छित्त्या तरङ्गितैर्युक्तया । कार्तार्थ्यं कृतार्थता ।

च्युतसंस्कृति ( व्याकरणलक्षणहीनं ) यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ १४३ ॥

अत्रानुनाथत इति । सर्पिषो नाथत इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम्, "आशिषि नाथः" इति । अत्र तु याचनमर्थः । तस्मात् 'अनुनाथति स्तनयुगम्'—इति पठनीयम् ।

अप्रयुक्तं ( तथाऽऽम्नातमपि कविभिर्नाऽऽदृतम् ), यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥ १४४ ॥

अत्र दैवतशब्दो "दैवतानि पुंसि वा" इति पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते ।

असमर्थं ( यत्तदर्थं पठ्यते न च तत्रास्य शक्तिः ), यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥ १४५ ॥

अत्र हन्तीति गमनार्थम् ॥

---

व्याकरणेति । न च्छन्दःप्रभृतिलक्षणहीनम् । तस्य विरत्यादिरूपेणापदविषयत्वात् । एतदिति । तिन्दुकफलं तद्यस्य टिम्बकमिति[1] ख्यातिः । तदिव श्यामोदरमापाण्डुरप्रान्तं च । अयं भावः—यथा स्तनतटीदर्शनात्सरागाः सन्तस्त्वां भजन्तश्च्युतवीर्यतया कुम्भिकुम्भान्न भिन्दन्तिभिल्लाः अत्र क्वाप्यन्यत्र च पदैकदेशोऽपि पदमिति न्यायादनुनाथत इति पददोषत्वम् । यत्त्वपास्य च्युतसंस्कारमसमर्थमित्यत्र च्युतसंस्कारादिवर्जनं चक्रे तद्वाक्यविषयमेव न पदांशविषयम् । पदांशविषयता च प्रपञ्चायोक्ता यावता तु पदविषयतयैव सिध्यति ।

दैवत इति । देवताधिष्ठातेति यावत् ।

असमर्थमिति । अर्थान्तराद्व्याघाताभावेऽप्रयुक्तम् । अर्थान्तरेणेष्टार्थस्य व्याघाते स्वस्य चानुपपत्तावसमर्थम् । तथा हि । हन्तीत्यत्र गत्यर्थं

---

१ ख. टिबरूकमिति ।

निहतार्थं ( यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् ), यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिरभ्य चुम्बिता सहसा ॥ १४६ ॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥ १४७ ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम् । यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ १४८ ॥

अत्र हिशब्दः ।

अवाचकं यथा—

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन च विद्विषादरः ॥ १४९ ॥

अत्र जन्तुपदमदातर्यर्थे विवक्षितम्, तत्र च नाभिधायकम् ।

---

वधार्थो व्याहन्ति स्वयं च न घटते । गङ्गया वधानुपपत्तेः । निहतार्थे त्वर्थान्तरं घटतेऽपि । पादप्रहारे रुधिरसंभवात् ।

शोणितेति । शोणिता वर्णान्तरापादिता अत एवोज्ज्वलाः कान्तिमन्तः कचा यस्य । अन्योऽप्यर्थः—प्रहाराद्यच्छोणितं तद्युक्ताः कचा यस्य । यद्वा काश्मीरभाषयोज्ज्वलशब्दोऽरुणार्थः ।

सत्रिभिरिति । याज्ञिकैः ।

युष्मदिति । गौरीमेकत्वेनाऽऽमन्त्र्य युष्मदिति बहुत्वमसत् ।

अवन्ध्येति । अवन्ध्येति निहन्तुरिति पदाभ्यां सामर्षोदारत्वे लभ्येते । न ह्यसामर्षो भयकारी कृपणश्च विपद्घाती । एतदेव व्यतिरेकेणाऽऽह—अमर्षेति । हार्दं मैत्री ।

यथा वा—

हा धिक्सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥ १५० ॥

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् ।

यच्चोपसर्गसंसर्गादर्थान्तरगतम् , यथा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥१५१॥

अत्र दधदित्यर्थे विदधदिति ।

त्रिधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् । यथा—

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ १५२ ॥

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता ॥१५३॥

---

हा धिगिति । अनेकार्थत्वात्तामसी रात्रिस्तामसी तमोमयी व्यावृत्तिः । यस्यां तामस्यां निशि सेन्दुमुखी दृष्टा सा धात्रा तामसी तमोमयी चक्रे । यत्र तु दिने सा वियुक्ता तद्दिनं प्रकाशमयं चक्र इत्यहो धातुः कुशले कर्तव्ये वैमुख्यमित्यर्थः । दिनशब्दस्त्वनेकार्थत्वाभावे प्रकाशमयत्वेऽवाचकः । आवृत्त्याऽत्र दिनशब्दस्यावाचकता । पूर्वत्र तु नैवम् ।

अर्थान्तरगतामिति । तदप्यवाचकमित्यन्वयः । दण्डेति । नृत्ये झगिति पदोर्ध्वकरणं दण्डपादः । दण्डरूपत्वात् । विदधदिति । विशेषेण बिभ्राणः ।

अरालितामिति । कुटिलाम् ।

लीलेति । अत्रान्यवनिता सपत्नी ।

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही ॥ १५४ ॥

एषु साधन—वायु–विनाशशब्दा व्रीडादिव्यञ्जकाः ।

संदिग्धं यथा–

आलिङ्गितस्तत्रभवान्सपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १५५ ॥

अत्र वन्द्यां किं हठहृतमहिलायाम्, किं वा नमस्यामिति संदेहः ।

अप्रतीतं ( यत्केवले शास्त्रे प्रसिद्धम् ) । यथा–

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धकम् ॥ १५६ ॥

अत्राऽऽशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रसिद्धः ।

ग्राम्यं ( यत्केवले लोके स्थितम् ) । यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १५७ ॥

अत्र कटिरिति ।

---

विनाशादिति । अभावात् । अदर्शनादित्यर्थः । निःसपत्न इति । तदभावाद्धेतोर्घनरुचिरो निःसपत्नो जातः कलाप इत्यर्थः । अस्येति । बर्हिणः । अत्र श्लोके घनरुचिरास्येत्यादिस्थानेऽन्यान्यपि दूषणान्यप्रकृतत्वादनुक्तानि स्वयमूह्यानि । एवमग्रे पश्चादपि ज्ञेयम् ।

वन्द्यामिति । द्वितीयासप्तम्यन्ततया संदेहः ।

अप्रतीतमिति । अस्य योगशास्त्रादेव[1] प्रसिद्धिर्न लक्षणादौ । अप्रयुक्तस्य तु शास्त्रप्रसिद्धावपि कवीनामनादृतिः प्राणाः । सम्यगिति । ज्ञानेन दलितो विघटित आशयो वासना सुखदुःखे यस्य तस्य भावस्तत्ता । वासना हि सुखदुःखे । यद्वा दलितो विकाशी, आशयो यस्य । विशदाशय इत्यर्थः । एतदिति । प्रस्तुतं किंचिन्न कर्म बन्धकम् । यद्वैतत्कर्म पापमस्य न बन्धकमिति ।

---

१ ख. °स्त्रादावेव ।

नेयार्थं

( " निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः " ॥

इति यन्निषिद्धं लाक्षणिकम् ) । यथा—

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ १५८ ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

अथ समासगतमेव दुष्टमिति संबन्धः । अन्यत्तु केवलं समासगतं च । क्लिष्टं ( यतः, अर्थप्रतिपत्तिर्व्यवहिता ) । यथा—

अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः ।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ १५९ ॥

अत्रात्रिलोचनसंभूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः ।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत् । यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगललसद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥१६०॥

अत्र मिथ्यामहिमत्वं नानुवाद्यम् । अपि तु विधेयम् ।

---

काश्चिदिति । लक्षणा लक्षणाशब्दा नैव क्रियन्ते । अत्र प्रत्यायने सामर्थ्याभावादिति कुमारिलः । निर्जितत्वमिति । पराभवः ।

अन्यत्त्विति । शेषं दोषजातं च्युतसंस्कृत्यादि । अत्रीति । अत्रैकपदप्रत्ययोऽप्यर्थः कैरवात्माऽत्रीत्यादिनानापदार्थालोचनाव्यवधानेन श्लिष्यमाणो वाचकस्य क्लिष्टतावहः ।

प्राधान्येनेति । साध्यत्वेन विधेयोंऽश इति वाक्यतात्पर्यम् । अत्रानुवादविधेयांशावेकानेकपदगतत्वेन सार्थैः समासैर्निवेश्याविलाह—मूर्ध्नामिति । उद्वृत्तं कृत्तेभ्योऽविरलगलेभ्यो लसद्रक्तसंसक्ता निरन्तरा या धारेति योगः । प्रयास इति । पुरीत्राणेऽसामर्थ्यम् । विधेयमिति । उपनतजगज्जयान्मिथ्यामहिमा मूर्ध्नामिति प्रकारेणेत्थं नोक्तम् । किं तु

यथा वा—

स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥१६१॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । मौर्वीं द्वितीयामिति युक्तः पाठः ।

यथा वा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥१६२॥

अत्रालक्षिता जनिरिति वाच्यम् ।

यथा वा—

आनन्दसिन्धुरतिचापलशालिचित्त-
संदाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता
तान्तिं तनोति तव संप्रति धिग्धिगस्मान् ॥१६३॥

अत्र 'न मुक्ता'—इति निषेधो विधेयः,

---

समासेन विशेषणतया सिद्धत्वेनोक्तम् ।

उत्प्रेक्ष्यमिति । मौर्वी चापस्य तावत्सिद्धैव । न तु द्वितीयात्वम् । अतो द्वितीयामिवेति पृथग्विशेषणतया वक्तुं युक्तम् । एवं हि द्वितीयात्वस्य प्राधान्यम् । अन्यथा तु गौणता ।

अलक्षितेति । जन्मनो ह्यलक्ष्यत्वं हि वाच्यत्वेन वक्तुमिष्टम् । समासे सत्यलक्षितत्वं न प्रधानी स्यात् । जनिरिति । अस्मादप्यलक्षितम् । जनुरिति पाठे सर्वेषां क्लीबत्वनिर्वाहाद्भग्नप्रक्रममपि त्यक्तं स्यात् ।

सदाननेति । संयमम् । तान्तिमिति । खेदम् । विरक्तत्वात् धिग् धिगिति सखीवचनम् । विधेय इति । या प्राक् त्वया प्रियत्वेन क्षणमपि न मुक्तेति रूपेण विधेयोऽर्थः स्ववृत्त्या गुणीकृतः । किं चामुक्तेत्यत्र प्रसज्यो नञ् । क्रियया सह संबन्धे सति प्रतिषेधप्राधान्यात् । अतो नञ्समासोऽपि न युक्तः । तस्य हि पर्युदास एव विषयः । तथैव विशेषणत्वान्नञः स्यादित्यन्तेनोत्तरपदेन संबन्धोपपत्तेः । न च पर्युदासोऽत्र युक्तः । अर्थस्यासंगतेः । मुक्तत्वनिषेधो ह्यत्रेष्टो नामुक्तविधिः ।

यथा—

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥ १६४ ॥

इत्यत्र )। न त्वमुक्ततानुवादेनान्यदत्र किंचिद्विहितम्,
( यथा—

जुगोपाऽऽत्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ १६५ ॥

इत्यत्रानस्तत्वाद्यनुवादेनाऽऽत्मनो गोपनादि । )
विरुद्धमतिकृद्यथा—

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ १६६ ॥

अत्र कार्यं विना मित्रमिति विवक्षितम् । अकार्येषु मित्रमिति तु प्रतीतिः । यथा वा--

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥ १६७ ॥

अत्र कण्ठग्रहमिति वाच्यम् ।

---

तस्मादस्य विधेयार्थनिष्ठतया प्रधानस्यानूद्यमानार्थपरतया तद्व्यस्तहृत्तिना मुक्तशब्देन समं वृत्तिर्नैवेष्टा । यदाह—

नञर्थस्य विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ॥

अमानोनाः प्रतिषेधवाचका इत्युक्तोऽत्राकार एव नञर्थः पृथग् व्याख्येयः । ततो विधेयत्वे निषेध्यस्य सत्यदुष्टत्वमित्यपि व्याख्या । यथेति । यथा नवजलेत्यत्र वृत्तेर्निषेधो विधेयतया मुख्य ऊचे तथा नामुक्तेत्यत्र । गोपनादीति । विधेयमित्यर्थः ।

विरुद्धमतीति । अस्य च समासासमाहितशब्दप्रत्ययानेकाथाः शब्दा-

यथा वा—

न त्रस्तं यदि नाम भूतकरुणासंतानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ॥१६८॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति । इन्द्रवरुणभवेत्यादिना पुंयोगान्ङीप्प्रत्ययेन भवस्य पत्नी भवानी ।

यथा वा—

गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः ॥ १६९ ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥ १७० ॥

एवमन्यदपि ज्ञेयम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ॥ ५२ ॥**

केचन, न पुनः सर्वे ।

क्रमेणोदाहरणम्—

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥ १७१ ॥

---

दयः प्रयोजकाः । भवानीति । भवस्य पत्नी भवानी । तस्याः पतिरित्युक्ते वरत्यागादन्यो भवेत् । यथा चैत्रपत्नीपतिरित्युक्ते उपपतिर्लभ्यते । विरुद्धामिति । यतोऽम्बिका माताऽपि । रमणो प्रियरासभौ ।

वाक्येऽपीति । सविशेषणमाख्यातं वाक्यम् । अथ वाऽऽकाङ्क्षायोग्यतासंनिधिमतां पदार्थानामन्वये वाक्यमिति वाक्यलक्षणम् । तच्च च्युतसंस्कारादौ मिथो विशेषणविशेष्यभावाकाङ्क्षायोग्यताया अभावान्न स्यादिति । तत्र पददोषता तु स्यादेवेति । विभक्त्यन्तं पदमिति पदलक्षणोपपत्तेः । क्रमेणेति । श्रुतिकट्वादिना ।

षड्वर्गः । कामक्रोधादिः ।

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान् ॥ १७२ ॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः ।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः ॥ १७३ ॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शराद्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि वनस्थास्तव विभो ।
जरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ १७४ ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

प्राभ्रभ्राड्विष्णुधामाऽऽप्य विषमाश्वः करोत्ययम् ।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ १७५ ॥

अत्र प्राभ्रभ्राड्—विष्णुधाम—विषमाश्व—निद्रा—पर्णशब्दाः प्रकृष्टजलद—गगन—सप्ताश्व—संकोच—दलानामवाचकाः ।

---

स रात्विति । भावुकानि मङ्गलानि । अत्राप्रयुक्तम् । पूर्वत्र तु श्रुतिकटु ।

शरादीति । शरस्मरक्षान्तिपङ्कजार्थैः खड्गादयो निहताः ।

कुविन्द इति । कुः पृथिवी । तां विन्दति लभते यः स तथा । पटुं पटं वा करोति । वनस्थौ किंनरधीवरौ । वनमम्भोऽपि । तथाऽपीति । यः किल पटकृत् तत्पत्नी कथं विगताच्छादना स्यात् । कीर्तिपक्षे विगताच्छादनमस्खलितमित्यर्थः । अर्थान्तरमिति । कुविन्दपदात्तन्तुवायत्वम् । वनस्था इति पदात्कौपीनादिदानशीलत्वम् । जरज्ज्योत्स्नेत्यादिपदाज्जीर्णत्वम् । विगतेति पदान्नग्नत्वमित्यादि ।

प्राभ्रेति । प्राभ्रं कृष्णोऽब्दः । तद्वद्भ्राजते यत्खं तत्तथा । प्राभ्रादीनामन्वयेनैतदर्थवाचकत्वेनाप्यवाचकता रूढ्योक्ता ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥ १७६ ॥

अत्रोपसर्पण–प्रहरण–मोहन–शब्दा व्रीडादायित्वादश्लीलाः।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ १७७ ॥

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥१७८॥

अत्र पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७९ ॥

अत्र किं सुरकम्पनामार्गणभूतिशब्दा देवसेनाशरविभूत्यर्थाः, किं मदिराद्यर्थाः ?—इति संदेहः ।

---

कम्पनेति । कम्पना सेना क्व द्विषो मे सन्तीत्थं वामानरीन् लोचते वीक्षते । वामं वा विरुद्धं लोचनं यस्याः सा तथेति वाच्यम् । स्त्री तु व्यङ्ग्या । अत एव कम्पनैव वामलोचनेति न रूपकम् । इत्थं ह्यपरोऽर्थो वाच्यत्वान्नाश्लीलः स्यात् । व्यञ्जकत्वं ह्यश्लीलम् । एवमन्यत्राप्यूह्यम् । स्त्रीपक्षे मां कोऽपि द्रक्ष्यतीति कम्पते । कम्पनेऽपि व्युत्पत्तिः । उपसर्पणं रताय गमनमपि । प्रहणनं प्रहारः । रतगतव्यापारः । मोहने रतमूर्छे ।

वान्तमिति । येषामितरस्य कवेरितराणां वा तुच्छानामर्थानां गृहे प्रवृत्तिः स्यात्तेऽन्यैर्वान्तं चर्वितं त्यक्तं च भुञ्जत इत्येकोऽर्थः । अन्यस्त्वश्लीलः । उत्सर्गो गूथम् । प्रवर्तनमपानवायुः ।

पावकेति । पवित्रैः सहान्वययोगे सति यत्र मे सुखं स्यात् । अन्यत्र तु पावको वह्निः ।

सुरेति । रिपूणां रणे घातान्नाकोल्लासपरः । कम्पनं भयेऽपि । मार्गणोऽर्थिन्यपि । रणस्थभूपवर्णनेयम् ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमि. प्रियप्राप्तौ यत्नः स फलितः सखे ॥ १८० ॥

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८१ ॥

अत्र गल्लादयः शब्दा ग्राम्याः ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं बोधय सांप्रतम् ॥ १८२ ॥

अत्राम्बररत्नपादैः क्षततमा अचला ( भूः ) कृता, नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ १८३ ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ १८४ ॥

---

तस्येति । अत्र मृदुमध्याधिमात्रोपायत्वात्त्रिधा योगी । स चैकैको मृदुमध्यतीव्रसंवेगत्वात्त्रिधा । एवं नवयोगिनः । तत्राधिमात्रोपायस्य तीव्रसंवेगस्याऽऽसन्ने समाधिलाभे फले सतताभ्यस्तो दृढभूमिः । प्रियं मोक्षोऽपि । चेतोवृत्तिनिरोधसाधनं यत्नः । पक्षे तस्याधिकोपायस्य दृढरागस्य प्रियं स्त्रीमयम् ।

वस्त्रेति । अम्बररत्नं रविः । सत्त्वरजःपरं तमः । वस्त्रमम्बरम् । वैदूर्यं रत्नम् । चरणाः पादाः । युद्धं द्वन्द्वम् । बोधयेति । जागृहीत्यर्थः ।

अपूर्वेति । धम्मिल्लविशेषणमिदम् ।

न्यक्कार इति । अरय इति बहुवचनेन बहुशत्रुमत्ता मेऽनुचितेति संबन्धानौचित्यं नाम, क्रोधविभावो व्यक्तः । तत्रापीति निपातसमुदायेन तापस्याविक्रमस्य शत्रुत्वमसंभाव्यमेवेति व्यक्तम् । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता । तस्यां च स कर्ता । सोऽपि

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यम्, न वृथात्वविशेषितम् । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य ।

यथा वा—

अपाङ्गसंसर्गितरङ्गितं दृशो-
भ्रुवोररालान्तविलासिवेल्लनम् ।
विसारिरोमाञ्चनकञ्चुकं तनो-
स्तनोति योऽसौ सुभगे तवाऽऽगतः ॥ १८५ ॥

अत्र योऽसाविति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृत् ।

[ तथा हि, प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते । क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ १८६ ॥

---

नरकीटः । अत्रैवेति । यत्राहं तिष्ठामि । नितरां हन्ति । यथा रक्षःकुलनामापि नश्यति । रावण इति । स्वःपुरीविमर्दनादिकारीत्यर्थः । धिग्धिगितिपदात् शक्रं जितवानिति व्युत्पत्तिः कथेति प्रतीयते । ग्रामटिकेति कप्रत्यये स्त्रीप्रत्ययवता बहुमानाभावो व्यज्यते । विलुण्ठनमित्यत्र विशब्दो निर्दयत्वेन लुण्ठनमाह । वृथाशब्दस्त्वविक्रमनिन्दाव्यञ्जकः । भुजैरिति बहुत्वेन तेषां भारकारित्वं व्यक्तम् । वाच्यमिति । इत्थमुक्तौ हि न्यक्कारस्य विधेयता स्यात् । शब्दस्वाभाव्यात् । न वृथात्वेति । तथात्वस्येत्थं विशेषणतयोक्तौ गौणतैव न विधेयतेति भावः ।

पदद्वयमिति । यच्छब्दोऽनुवाद्यार्थस्यादःशब्दो विधेयार्थस्य विषयः । मात्रेति । मात्रशब्दोऽवधारणे । यथेदं सिध्यति तथा यत्तच्छब्दविचारेण तथा हीत्याद्येवं समासान्तरेष्वप्यूह्यमित्यन्तग्रन्थपूर्वकेण निर्णयति—तथा हीति । सिद्धिमिति । हिमभूसुहृद्भूताम् । स इति ।

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ १८७ ॥
उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि ॥ १८८ ॥

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते । तथा--

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ १८९ ॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथा- अत्रैव श्लोक आद्यपादयोर्व्यत्यासे । द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम् । अनुपादानेऽपि सामर्थ्यात्क्वचिद्द्वयमपि गम्यते ।

यथा--

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १९० ॥

अत्र य उत्पत्स्यते तं प्रतीति ।

---

पूर्वोक्तो नृपः । सेति । प्रसिद्धा । ते इति । प्रदीपने दह्यमाने प्रियावस्थां ध्यायन् विलपति कोऽपि । ते यथानुभूते ।

यच्छब्दं विचारयति--यच्छब्दस्त्विति । पुष्करैरिति । पद्मैरिन्दूदये साधु-कृतं यन्मीलितमिति तदो नापेक्षा । उद्यता उद्गच्छतेन्दुना । प्रसिद्ध-मिति । यथा यः करोति स कर्तेत्यत्र । ये नामेति । नामेत्यसूयायाम् । इहेति प्रबन्धे देशे काले वा । किमपि स्वल्पम् । उपहासे तु लोकोत्त-रम् । एष शास्त्रनिर्माणविषयो यत्नस्तान्प्रति नहीत्याह--उत्पत्स्यत इति । सदसद्व्यक्तिज्ञो भावी कश्चिदिति संभाव्यते ।

एवं च ] तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम् । न चासाविति तच्छब्दार्थमाह—

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवाऽऽगतः ॥ १९१ ॥

अत्र हि न तच्छब्दार्थप्रतीतिः ।

प्रतीतौ वा—

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥१९२॥

अत्र स इत्यस्याऽऽनर्थक्यं स्यात् ।

अथ—

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥ १९३ ॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्त इति ।

उच्यते । तद्यत्रैव वाक्यान्तर उपादानमर्हति न च तत्रैव ।

यच्छब्दस्य हि निकटे स्थितस्तच्छब्दः प्रसिद्धिं परामृशति ।

यथा—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥ १९४ ॥

इत्यत्र तच्छब्दः ।

---

इत्थं यत्तदौ विचार्य योऽसाविति प्रस्तुते निर्वाहयति—एवं चेति । अत्रेति । योऽसावित्यत्र श्लोके यच्छब्दानन्तरं तच्छब्दो नोक्तः । किं त्वदःशब्दः । न चादःशब्द एव तच्छब्दार्थवाचीत्याह—न चेति । असाविति । मरुद्वायुर्मारुतिपिता च । केसरशब्दो बकुलसटार्थः । ताराधिपौ सुग्रीवेन्दू । मण्डले बिम्बराष्ट्रे । रामा नार्यो रामो भरताग्रजः । आनर्थक्यमिति । पुनरुक्तत्वात् ।

योऽविकल्पमिति । वस्तुजातं निःशङ्कं त्वदङ्गात्मतया पश्यति विचारयतीत्यर्थः । स्वात्मपक्षेति । सुष्ठ्वात्मपक्षेणेति च । अस्येति । तस्येत्यर्थः । तद्यत्रेति । यथाऽत्र वृत्ते वाक्यान्तरे प्रयुक्तस्तथाऽन्यत्रापि प्रयोज्यः । न तु यत्र यच्छब्दस्तत्रैव । न चेति । चः पुनरर्थे । प्रसिद्धिमिति । इत्थं हनूमत्त्व-

ननु कथम्—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते !
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ १९५ ॥

अत्र यद्यदित्युक्त्वा तन्म इत्युक्तम् ।

उच्यते । यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तम् । तथाभूतमेव तच्छब्देन परामृश्यते ।

यथा वा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥१९६॥

अत्राऽऽर्यस्येति तातस्येति च वाच्यम् । न त्वनयोः समासे

---

मेव न विधेयत्वम् । क्वचित्तु वाक्यान्तरगतत्वेन यच्छब्दनिकटेऽप्युच्यमानोऽदःशब्दो भिन्नविभक्तितया तच्छब्दार्थप्रतीतिकृत् । यथा—

लीलया जगती जिग्ये येनासौ जयतु स्मरः ॥ इति ।

कल्याणेति । अत्र पूर्वार्धे यत्तदोर्गम्यमानता । तथा हि । यतस्त्वं कल्याणानां पुण्यस्त्रीणां विधाने प्रभुरतो दृग्दानरूपं प्रसादं कुरु । उत्तरार्धे तु प्रसादप्रकारोक्तिः । भद्रमिति । अत्र पूर्वार्धे पुण्यानुबन्धकं पुण्यं देहीत्यर्थः । तन्म इति । अत्र द्वितीयस्तच्छब्दो नोक्त इति भावः । सूर्यस्तुतिरेषा । अतः क्रूरग्रहदृष्टिर्न मङ्गलायेति विरुद्धमतिकृद्दूषणं नास्ति । भक्तिप्रस्तावात् ।

यत्तच्छब्दौ विचार्याविमृष्टविधेयांशं पुनरुदाहरति—किं लोभेनेति । मध्यमा माता कैकेयीत्यर्थः । समास इति । भिन्नविभक्तिनिर्देशे हि तात्पर्ययोर्विधेयत्वे विवक्षितस्य प्रकर्षः प्रतीयते । नन्वसमासे कृतेऽपि गौणत्वमेव । यतो गौणात् षष्ठी स्यादिति स्थितिः । सत्यम् । लक्षणभाषयेदं गौणत्वम् । साहित्यभाषया त्वसमासे विधेयत्वमेव । अयं भावः समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारहेतुत्वेन प्रधानतया विवक्षितो

गुणीभावः कार्यः। एवं समासान्तरेष्वप्युदाहार्यम्।

विरुद्धमतिकृद्यथा —

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥ १९७ ॥

अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हता इति विरुद्धार्थप्रतीतिः।

पदैकदेशे यथासंभवं क्रमेणोदाहरणानि —

अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ १९८ ॥

अत्र त्वादिति।

यथा वा—

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थोत्तरलभ्य एव।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १९९ ॥

अत्र द्ध्यै ब्ध्यै इति कटु।

---

विधेयः स्यादन्यस्त्वनूद्यकल्पतया गौण इव तदाऽसौ वृत्तेर्विषयः स्यात्। तस्यां हि स प्रधानेतरभावस्तयोर्विनश्येत्। विशेषणमवच्छेदकत्वाद्गौणम्। विधेयं च विवक्षितत्वात्प्रधानम्। तदेतयोर्मिथो विरोधे एकत्र योगासंभवात्समास एव न घटत इति न वाच्यम्। विरोधस्योभयवस्तुनिष्ठत्वाच्छीतोष्णादिवत्। न च वस्तुना द्वयोः स्यात्। एकस्यैव वास्तवत्वादन्यस्याविवक्षितत्वेन व्यत्ययात्। मत्तभकलभनासिहयोरिव। न च वस्त्ववस्तुनोर्विरोधः। फलभेदस्तु स्यादेव। तथा ह्येकस्य सर्वगम्यं शाब्दिकैकविषयः पदार्थसंबन्धमात्रमन्यस्य तु सहृदयवेद्यः कवीनामेव गोचरो वाक्यार्थचमत्कारातिशयः। एवमिति। समासान्तरोदाहरणानि विस्तरभयान्नोक्तानि।

श्रितेति। सापगमाः क्ष्मापातनाश्च। रक्ता भूषा रक्तस्य वा भुवः स्थानम्। श्रेयः शिवं शिवा शृगाली। विग्रहौ रणदेहौ। असुखं दुःखम्। असवश्च खानि च।

अर्थोत्तरेति। धर्मार्थेति पाठापेक्षयाऽर्थोत्तरः कामः। कट्विति। ननु

यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ २०० ॥

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ २०१ ॥

अत्र दृशामिति बहुवचनं निरर्थकम् । कुरङ्गेक्षणाया एकस्या एवोपादानात् । न च—

' अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ॥
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ' ॥२०२॥

---

प्रकृतिप्रत्ययसंबन्धवचनपुरुषव्यत्ययपूर्वनिपातनद्धितविभक्तिविशेषोपसर्गनिपातानामसमासादिरूप. पदांशः स्यादिति द्वयं ध्यं इति प्रकृत्येकदेशरूपत्वान्न पदांशः । सत्यम् । परमूहकानामेवात्राधिकार इति ज्ञापनार्थमेवमुक्तम् । अत एव—

भेदाविमौ च साहश्यात्संबन्धान्तरतस्तथा ।

इत्यत्र प्रस्तावे आचार्यमतद्वयं न निषिद्धम् । तन्निषेधक्रमेण यथा गोशब्दप्रवृत्त्या तत्सहचरितानां लक्ष्यमाणत्वं लक्ष्यमाणानां च गोशब्दप्रवृत्तिहेतुत्वमित्यन्योन्याश्रयत्वम् । तस्मात्स्वार्थसहचारिगुणाभेदेनेति गौणलक्षणायां गुणानां निमित्तत्वमेव न पुनर्लक्ष्यत्वं ततः साधारणगुणेति ।

आदाविति । दृशां स्मरभल्लीनामिति रूपके सति

एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रैवाऽऽदिः प्रयोक्तव्य प्रधानादेव नान्यथा ॥

इति न्यायायुक्ता पानकर्मण उत्प्रेक्षा । अन्यथा तु व्याख्यायां भल्लीपानकर्मविषयमुत्प्रेक्षाद्वयमापद्यते । तत एव शब्दद्वयं प्रसज्यते । अत्र त्वेक एवेवशब्दः । किं च भल्ल्युत्प्रेक्षाया तासामसत्यत्वेन पानकर्मक्रियाऽप्यसंगता । अन्यच्च दृशः कामस्य भल्ल्य इवेति न किं तु भल्ल्य एवेति रूपकव्याख्या श्रेष्ठा । अलसेति । अत्र वृत्त ईक्षणैरिति पदमास्ति ।

इत्यादिवद्व्यापारभेदाद्बहुत्वम् । व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते । अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम् । प्रधानक्रियाफलस्य कर्त्रसंबन्धे कर्त्रभिप्रायक्रियाफलाभावात् ।

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ २०३ ॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति षण्ढः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ २०४ ॥

अत्र पेलवशब्दः ।

यः पूयते सुरसरिन्मुखतीर्थसार्थ-
स्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां
सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥ २०५ ॥

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥ २०६ ॥

अत्र प्रेतशब्दः ।

कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ २०७ ॥

अत्र किं पूर्वं साधुरुत साधुषु चरतीति संदेहः ।

---

तस्य च व्यापारभेदाद्बहुत्वं युज्यते । प्रधानेति । कामिनी हि दृशां निषेकफलं न लभते । विरहावस्थायास्तथैवाद्यापि सद्भावात् ।

षण्ढ इति । क्लीब इत्यर्थः ।

य इति । मुखेति प्रभृत्यर्थम् । कीलनं संबन्धः । सौजन्येन मान्या जनिर्जन्म यस्य स तथा ।

विनयेति । अत्र प्रेतपदमिति पदांशः श्मशानार्थः ।

उत साधुष्विति । अयं प्रकृतोऽर्थः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ २०८ ॥

अत्र वचःशब्देन गीःशब्दो लक्ष्यते । अत्र खलु न केवलं पूर्वपदम्, यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते । जलध्यादावुत्तरपदमेव, वडवानलादौ पूर्वपदमेव ।

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदाः, तथाऽप्यन्यैरलंकारकारैर्विभागेन प्रदर्शिता इति, भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः ।

प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५३ ॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ॥ ५४ ॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।

रसानुगुणत्वं वर्णानां वक्ष्यते । तद्विपरीत प्रतिकूलवर्णम् । यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ २०८ ॥

रौद्रे यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ २०९ ॥

---

उत्तरपदमिति । बाणस्थानेऽन्यः कोऽपि शरादिशब्दो न निवेश्य इत्यर्थः । जलेति । परिवर्तनं न क्षमत इति योगः । जलभृदित्युक्ते हि मेघस्य प्रतीतिः । यद्यपीति । अनादृतत्वान्निहतार्थत्वादवाचकत्वात्संदिग्धत्वात्केवलशास्त्रप्रयुक्तत्वात्कल्पितार्थत्वाच्च विवक्षितमर्थं वक्तुमशक्तं च यत्तदसमर्थमिति । ततोऽप्रयुक्तादयो दोषा अत्रान्तर्भवन्ति । एवमन्येऽपि यथासंभवमन्तर्भाव्याः ।

प्रतिकूलेति । वर्णग्रहणस्योपलक्षणत्वात्समासरचने अपि ग्राह्ये ।

देश इति । यत्र देशे जमदग्निः केशेषु गृहीतस्तत्रेत्यर्थः । क्षत्रं प्रस्ता-

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् ।

यथा—

प्रागप्राप्तनिशुम्भशांभवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ २१० ॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः ।

उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् । यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥ २११ ॥

विसंधि संधेर्वैरूप्यम्,—विश्लेषोऽश्लीलत्वं कष्टत्वं च ।

तत्राऽऽद्यं यथा—

राजन्विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसंपदमेत्य भातः ॥ २१२ ॥

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥ २१३ ॥

---

कार्त्तवीर्यः सहस्रार्जुनः । रामः परशुरामः । पाण्डवैः केशाकृष्टे द्रोणेऽश्वत्थामोक्तिरियम् । अहितानां शस्त्राणां घस्मराणि च तानि गुरूणि च तानि तथा । सामान्यमायुधं शस्त्रम् । मन्त्राधिष्ठितमस्त्रम् ।

प्रागिति । निशुम्भो भङ्गः । अपविद्ध उल्लालितः । तथैवेति । येनानेनेत्यादि । तथा क्रोधाभावोचितमृदुवर्णविन्यासदीर्घसमासवर्जनाभ्यां प्रतिकूलवर्णादिन्यासो गुणविन्यासस्य एवेत्यन्ये ।

धीर इति । एवं संदर्भसौष्ठवं न स्यात् । विसर्गस्योत्वप्राप्तिलोपविभ्रमणात्पररूपादिनोपहतत्वे सति बन्धसौष्ठवभावान्न दुष्टत्वम् ।

सधेरिति । संधिः स्वरयोः समवायः संहिताकार्येण क्षीरनीरयोरिवैकीभावः । रूपाद्वयोर्व्यञ्जनानां च नैकद्रव्यमात्ररूपो वा । राजन्निति

संहितां न करोमीति स्वेच्छया सकृदपि दोषः । प्रगृह्यादि-हेतुकत्वे त्वसकृत् ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिं कुरु ॥ २१४ ॥

अत्र संधावश्लीलता ।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्व्यवस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥ २१५ ॥

हतं लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्तगुरुभावान्तलघु रसान-नुगुणं च वृत्तं यत्र तद्धतवृत्तम् ।

क्रमेणोदाहरणानि—

अमृतममृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ २१६ ॥

अत्र यदिहान्यत्स्वादु स्यादित्यश्रव्यम् ।

---

तत इति स्थानद्वये च स्वरयोर्नैकट्यमात्ररूपः संधिः । स्वेच्छ-येति । विवक्षितश्च संधिर्भवतीत्युक्तयाश्रयणे तानि इन्दोरित्यत्र संध्यभावोऽदुष्ट एव । प्रगृह्येति । अ.ादीनां यवलोप इति द्विर्वचनमनावित्यादिसूत्रैर्यत्र प्रकृतिः स्यात्तत्प्रगृह्यं पदम् । आदिपदाद्विसर्गलोपे यत्र न संधिस्तदपि गृह्यते । असकृदिति । प्रकृतिस्थत्वविधाने धीदोर्बले इत्यादाविव यदा पुनः पुनः क्रियते तदा दोषः । सकृत्तु न दोषः । वेगादिति । अत्र चलन्नित्यत्र नस्य 'ड्ढणे'ति सूत्रेण णत्वे लण्डेति । रुचिं कुर्वित्यत्र चिंकुरिति । अत्र व्यञ्जननैकट्यमात्ररूपः संधिः । उत्तपते । भाति । स्वरयोरेकीभावे संधिर्यथा—उर्वीति । अत्र मरोरन्ते तरूणामुर्वी रम्याव-स्थितिश्च पङ्क्तिरस्ति । तत ऋजुः प्राञ्जलमागच्छेत्यर्थः ।

हतमिति । हतं वृत्तं यत्रेति योगः । लक्षणं छन्दसाम् । यदिहेति । हरिणीच्छन्दसि । वदतु यदिहेत्यत्र षष्ठाक्षरविरतौ लक्षणानुसरणेऽप्य-

यथा वा—

जं परिहरिउं तीरइ मणअं–पि ण सुन्दरत्तणगुणेण ।
अह णवर जस्स दोसो पडिवक्खेहिँ पि पडिवण्णो ॥ २१७ ॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकासितसहकारतारहारिपरिमलपुञ्जितगुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥२१८॥

अत्र हारिशब्दः । हारिप्रमुदितसौरभेति पाठो युक्तः ।

यथा वा—

अन्यास्ता गुणरत्नरोहणभुव' कन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्-
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २१९ ॥

अत्र वस्त्राण्यपीति पाठे लघुरपि गुरुतां भजते ।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥२२०॥

---

श्रव्यत्वम् । अन्यत्स्वाद्वित्यत्र तु दूषणान्तरमिति भावः । ज परीति । एवं नाम सुन्दरः स्मरो यत्क्षणमपि त्यक्तुं न शक्यत इतीदृग्दोषो यस्य विपक्षैरपि मुनिभिरपि प्रतिपन्नो गुण इवेत्यर्थः । आनन्दवर्धनीयपञ्च-बाणलीलाकथागाथेयम् । सकारेति । पथ्यायार्यां सतौ निरन्तरौ न कार्यावित्येके । एतेन च्छन्दोलक्षणच्युतात्माऽपि दोषो हतवृत्तेऽन्तर्भूतः । अत एव यथा वेति प्रकारान्तरोक्तिः । यतिभ्रष्टमप्यत्रैवान्तर्भाव्यम् । वृत्तस्य यत्यात्मकत्वात् । अन्ये तु सकारभकारौ न क्वापि च्छन्दसि निषिद्धौ । किं त्वस्मिन्ननिश्रितौ छन्दसि श्रव्यावित्याहुः । कन्येति । कुमारिका मृत् । यया यादृश्या वाऽन्यः कोऽपि पूर्वं न सृष्ट इति यावत् । संभाराः कारणानि मृदन्तःक्षेप्याणि । सृष्टौ हि भूमृत्संभारा हेतवः स्युः । लघुरपीति । ण्यकारस्य महाप्राणस्य संनिधौ पश्चिमत्यो लघुरपि यथा गुरुः स्यात्तथा महाप्राणस्य संनिधावग्रिमोऽपि क्वचि-ल्लघुर्गुरुतां यातीत्यस्याभिप्रायः । सभान्तरेति । मुग्धविदग्धानां मुग्धवि-

---

१–' यत्परिहर्तुं तीर्यते न मनागपि सुन्दरत्वगुणेन ।
अथ केवलं यस्य दोष. प्रतिपक्षैरपि प्रतिपन्न. ' ॥

हास्यरसव्यञ्जकमेतद्वृत्तम् ।

न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्याऽऽवासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २२१ ॥

अत्रास्माभिरिति, खिन्ने—इत्यस्मात्पूर्वमित्थमिति च ।

अधिकं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि ॥ २२२ ॥

अत्राऽऽकृतिशब्दः ।

यथा वा—

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥ २२३ ॥

---

दग्धं वा सभान्तरं सभाविशेषः । न तु सभामध्यम् । अचमत्कारित्वात् । हास्येति । दोधकादिकं छन्दो हास्यरसव्यञ्जकत्वात्करुणादौ नोचितमिति भावः ।

अस्माभिरिति । अस्माभिरित्थमिति च कृते न न्यूनत्वम् । अत्र न्यूनैः पदैर्विना काव्यार्थ एव न घटते । अनभिहितवाच्ये तु विरुद्धार्थस्येष्टार्थसंगतिविघातस्य वा प्रतीतिरित्यनयोर्भेदः ।

अधिकमिति ।

दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम् ।
बाष्पः फुल्लाम्बुजयुजो जाता दृष्टिविष मम ॥

अत्र भजिः सहशब्दो युजिश्चाधिकः । बहुव्रीहिणैवार्थाधिगतिसिद्धौ मत्वर्थीयाधिक्यं यथा—

कोकप्रीतिचकोरपारणपटुज्योतिष्मतीत्यादि । यथा च—

सौवर्णपट्टरुचिरास्तदीयकरिणोऽसिताः ।
तडित्वतीमनुचक्रुः प्रावृषेण्यघनावलीम् ॥

इत्यत्र तद्धिताधिक्यम् । षष्ठीसमासेनैव तदर्थाधिगतेरित्यादि स्वयमूहनीयम् । यदपीति । योषितां कुचपातेऽपि यन्न मृत्युरताभावौ तदप्यनु-

अत्र कृतमिति । कृतं प्रत्युत प्रक्रमभङ्गमावहति ।

तथा च यदपि च न कुरङ्गलोचनानामिति पाठे निराकाङ्क्षैव प्रतीतिः । कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला
परिमिलननिमीलत्पाण्डिमा गण्डपाली ।
सुतन कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ २२४ ॥

अत्र लीलेति । पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ २२५ ॥

समाप्तपुनरात्तं यथा—

क्रेंकारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झंकारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥२२२॥

द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥ २२७ ॥

---

चितप्रक्रमश्चेत्येतावतैव स्वार्थसिद्धेः किं कृतग्रहणेनेति भावः । प्रत्युतेति । पूर्वार्धे कृतपदाभावात्प्रक्रमभङ्ग इत्यर्थः ।

कथितेति । एकस्यैव पदस्य द्विः प्रयोगः कथितत्वम् ।

कः क इति । अत्र क्रमात्क्रमानुप्रासो ध्वनयितव्यः । घुरी भाण्डवाद्यविशेषः । घुर्घुरायिता चासौ सा च । तद्वद्घोरः ।

तनोत्विति । अत्र वाक्ये समाप्ते नववय इत्यादि पुच्छप्रायं पुनरुपात्तम् । पूर्वोत्तरार्धयोर्व्यत्यासे तु न दोषः ।

मसृणेति । यद्भूः सदर्भा तन्मसृणचरणपातं गम्यताम् । यच्च घर्मः

अभवन्मतः ( इष्टः ) योगः ( संबन्धः ) यत्र तत् । यथा--

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥२२८॥

अत्र " गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्—" इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति । क्षपाचारिभिरिति पाठे युज्यते समन्वयः । यथा वा--

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वंद्वं दिष्ट्या तदिति सुभगे संवदति वा-
मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥ २२९ ॥

अत्र यदित्यत्र तदिति, तदानीमित्यत्र यदेति वचनं नास्ति । चेत्स्यादिति युक्तः पाठः ।

---

कठोरस्तन्मूर्ध्नि वस्त्रान्तं कुरु इति शिक्षिताऽश्रुपूर्णैर्नेत्रैर्वीक्षिता चेत्यन्वयः । अत्र पूर्वार्धे सक्तं तच्छब्दरूपं शब्दशेषमेकमुत्तरार्धे न्यस्तम् । व्यत्ययोऽपि दृश्यते । यथा—

किं करोमि क्व गच्छामि कस्य व्याख्यामि नेत्रयोः ।
अनयोर्वल्लभालोके निवृत्तौ न यदीश्वरः ॥

गुणानामिति । विशेषणानां यदर्थानां विशेष्यानुपातित्वेन समत्वे सत्यन्योन्यं न संबन्धः इति बहुभिर्यदर्थैर्नैक एवार्थो निर्दिश्यत इति यैरित्यत्र विशेष्यस्याप्रसिद्धिः । क्षपाचारिणामिति च पदं येषामित्यस्य विशेषणत्वेनोक्तमिति कथं तत्र विशेष्यत्वेन स्यात् । क्षपाचारिभिरिति पाठे त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा तैः क्षपाचारिभिरिति विशेष्येण प्रतिस्वमाञ्जस्येनैव योगं यान्तीत्यर्थः । अङ्गाङ्गिनोरिव यत्तदर्थयोः संबन्धो न त्वङ्गानां यदर्थानामन्योन्यमिति भावः ।

यत्स्यादिति । अतः शेषं यत्तद्यदा स्याज्जितमिह तदानीमिति कृते कविगतोऽन्वयः स्यात् । योगमात्रं त्वप्यग्रेऽस्ति यदा यच्छब्दो यदापदार्थो व्याख्यायते । परं नैष मतो योगः । अत एव न्यूनपदं न दोषः ।

यथा वा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाऽऽकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥ २३० ॥

अत्राऽऽकर्णनक्रियाकर्मत्वे कोदण्ड शरानित्यादि, वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम् । न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि । न च केन केनेत्यादिप्रश्नः ।

यथा वा—

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ २३१ ॥

इत्यादौ भार्गवस्य निन्दायां तात्पर्यम् । कृतवतेति परशौ सा प्रतीयते । कृतवत इति तु पाठे मतयोगो भवति ।

यथा वा—

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ॥ २३२ ॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते ।

---

तत्र हि पदाभावे योगमात्रमपि न स्यात् । तथा हि । वल्कलधरैरिति विशेषणं विशेष्यं विना कथं स्यादित्यादि स्वयमूह्यम् । अथ व्याधैरित्यस्य विशेषणमिदं तर्हि नितरामनुपपत्तिः । अन्ये तु न्यूनपदमिदमित्याहुः । यतः काव्यान्तः पदेषु सत्स्वेवाभवन्मतयोगत्वमिष्टम् ।

वाक्यार्थेति । यथा स्वर्गे देवाः सन्तीति सर्वोऽपि जानाति । येन येनेति यच्छब्दौ न कोदण्डाद्यर्थौ येनैतद्द्वारेण कोदण्डादावेव तद्विभक्तिः स्यात् । तदर्थत्वे वा शरैरिति बहुत्वं कथं स्यात् । नापि येन येनेत्यादि विशेषणं कोदण्डादिप्रश्न इति । येन कोदण्डेनेत्यादौ तृतीया स्यात् ।

चत्वार इति । नरपतिर्युधिष्ठिरः । अत्राध्वरपदात्साक्षात्सप्तमी धर्तुं युक्ता येनाध्वरशब्दार्थः सर्वैर्ऋत्विगादिभिः संबध्यते ।

यथा वा—

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥२३३॥

अत्र दण्डपादगता निजतनुः प्रतीयते । भवान्याः संबन्धिनी तु विवक्षिता ।

अवश्यवक्तव्यमनुक्तं यत्र । यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टै-
रत्यद्भुतैरपहृतस्य तथाऽपि नाऽऽस्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेय-
माहात्म्यसारसमुदायमयः पदार्थः ॥ २३४ ॥

अत्रापहृतोऽस्मीत्यपहृतत्वस्य विधिर्वाच्यः । तथाऽपीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ।

यथा वा—

एषोऽहमद्रितनयामुखपद्मजन्मा
प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूप-
लक्ष्मीफलामसुरराजसुतां विधाय ॥ २३५ ॥

अत्र मनोरथानामपि दूरवर्तीत्यप्यर्थो वाच्यः ।

---

अवश्येति । अनुक्तमनभिहितमवश्यवक्तव्यमिति भावः । अप्राकृतेति । रामदर्शने जामदग्न्योक्तिरियम् । अत्रापहृतोऽस्मीत्युक्ते तथापि नाऽऽस्थेति द्वितीयवाक्यत्वेनार्थोपपत्तिः । अन्यथा . त्वन्यार्थताऽपि तथाऽपि हृतस्य मम चरितैर्नाऽऽस्थेतिरूपा स्यात् ।

एष इति । प्रतिमानिरुद्धे नाटके वृत्तमिदम् । हरगौर्योरुषाख्या सुता केनापि वृत्तान्तेन बाणासुरपुत्रीति ख्याता । तां च स्मरसुतेनानिरुद्धाख्येन स्वप्ने परिणाय्य कोऽपि स्वं प्रशंसन्निदमाह—घटनेति । घटनयाऽधिगताभिरूप्यलक्ष्म्याः फलं ययेति वृत्तिः । अप्यर्थ इति । अपिशब्दभावाभावयोरुपकर्षापकर्षाभ्यां दूरवर्तित्वं स्यादित्यर्थः ।

यथा वा—

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ॥ २३६ ॥

अत्रापराधस्य लवमपीति वाच्यम् ।

अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसंनिधा-
वुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥ २३७ ॥

अत्र काचिन्न विजहाविति वाच्यम् । यथा वा—

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकंधरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ २३८ ॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिलाताम्रेति वाच्यम् ।

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवाऽऽलोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्-
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ २३९ ॥

---

अपराधस्येति । अप्यभावे राशिमिति प्रतीयते ।

न काचिदिति । किं तु सर्वाऽपीत्यर्थः । न विजहावित्युक्ते त्वेकैव काचित्प्रतीयते ।

लग्न इति । जटालम्बेनेति शशिशकलविशेषणम् । पूर्वमिति । कुटिलाताम्रत्वे हि प्रयुक्ते नखलक्ष्मशङ्का स्यात् । कौटिल्यादिधर्मो यतस्तस्या हेतुः । अस्थानस्थपददोषे काव्यमध्यपदेषु सत्स्वेवास्थानस्थायित्वेन विरुद्धार्थस्येष्टार्थसंगतिविघातस्य वा प्रतीतिः प्राणाः । तेनार्थान्तरैकवाचकादिदोषाणां केषांचिद्विवेकः स्यात् ।

अद्यापीति । अत्र पूर्वार्धे क्रुद्धस्योक्तिरग्रे तु कवेः । प्रतिकूलवर्णदोषः पूर्वार्धे । अग्रे तु न दोषो नापि गुण इत्येके ।

अत्र क्रुद्धस्योक्तौ समासो न कृतः । कवेरुक्तौ तु कृतः ।

संकीर्णम्, यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा—

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ २४० ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं मुञ्चेति । एकवाक्यतायां तु क्लिष्टमिति भेदः ।

गर्भितम्, यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति । यथा—

परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २४१ ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥ २४२ ॥

अत्र विदितं तेऽस्त्वित्येतत् । कृतं प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

'मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितभणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥'

इति प्रसिद्धिमतिक्रान्तम् । यथा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकंदरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ २४३ ॥

---

क्लिष्टमिदमित्याशङ्क्याऽऽह—एकेति ।

वाक्यान्तरमिति । पूर्वत्र दोषो वाक्ये वाक्यान्तरपदप्रवेशोऽत्र तु वाक्यान्तरप्रवेशः । परेति । अत्रार्धयोर्व्यत्यासे न दोषः ।

विरुद्धेति । हे जनकाब्धे तवैतज्ज्ञातमास्तामित्युक्ते ततोऽन्यत्र सा यियासतीति लभ्यते ।

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषे सिंहनादे ।

भग्नः प्रक्रमः ( प्रस्तावः ) यत्र । यथा—

नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥ २४४ ॥

अत्र गतेति प्रक्रान्ते यातेति प्रकृतेः । गता निशाऽपीति तु युक्तम् । ननु 'नैकं पदं द्विःप्रयोज्यं प्रायेण'—इत्यन्यत्र, कथितपदं दुष्टमिति चेहैवोक्तम्, तत्कथमेकस्य पदस्य द्विःप्रयोगः । उच्यते । उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदद्विःप्रयोगनिषेधस्य । तद्वति तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः ।

तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २४५ ॥

अत्र, रक्त एवास्तमेतीति यदि क्रियेत, तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति । अत्र तादृगेवेतिपाठे वा न दोषः । सर्वनाम्नः प्रयोगात् ।

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ २४६ ॥

अत्र प्रत्ययस्य । सुखमीहितुं वेति युक्तम् ।

---

भग्न इति । एष हि यथा प्रक्रममेकरसप्रकृतताया बोद्धृप्रतीते रोधेन स्खलनखेददायी रसभङ्गाय जायते । प्रकृतिप्रत्ययादेर्भङ्गं क्रमेणाऽऽह—नाथ इति । गता निशाऽपीति । एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् । यथा ताला जयन्तीति । अन्यत्रेति । वामनादौ । तद्वतीति । उद्देशप्रतिनिर्देशवति । अयथोद्देशं प्रतिनिर्देशस्तु दोषस्यास्य विषयः । ताम्र एवेति । अत्र तादृगेवेति पाठे वा न दोषः ।

प्रत्ययस्येति । भग्नप्रक्रमत्वमिति सर्वत्र योज्यम् । युक्तमिति । एवं च तुल्यकक्षतया विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतम् ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २४७ ॥

अत्र सर्वनाम्नः । अनेन विसृष्टा इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥ २४८ ॥

अत्र पर्यायस्य । महीभृतोऽपत्यवतोऽपीति युक्तम् ।

अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये सस्नेहोऽभूदिति केचित्समर्थयन्ते ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ २४९ ॥

अत्रोपसर्गस्य पर्यायस्य च । तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिः, लघुतावान्न पदं नृपश्रिय इति युक्तम् ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः ॥ २५० ॥

अत्र वचनस्य । काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका इति, कम्पमाना इत्यत्र कम्पमापुरिति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ २५१ ॥

अत्र कारकस्य । विश्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिमित्यदुष्टम् ।

---

महीति । अत्राऽऽदौ पुत्रवतोऽपीत्युक्तेऽपत्य इत्ययुक्तम् । चूत इति । चूतपुष्पे ।

उपसर्गस्येति । आदौ पदेर्विरुपसर्गः पश्चादाङिति प्रक्रमभङ्गः । पर्यायस्येति । आदौ लघुतेत्युक्तं पश्चादगरीयानिति पर्यायभङ्गः ।

मृगकुलमिति । मृगाणां कुलं कुटुम्बं न तु समूहः । कदम्बकेत्य-

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
वविततथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥ २५२ ॥

अत्र क्रमस्य । पादोपसंग्रहणायेति हि पूर्वं वाच्यम् । एवमन्यदप्यनुसर्तव्यम् ।

अविद्यमानः क्रमो यत्र, यथा—

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ २५३ ॥

अत्र त्वंशब्दादनन्तरं चकारो युक्तः ।

---

त्रार्थासंगतेः ।

पूर्वमिति । अकलितेत्यादेः पूर्वोक्तत्वानुसारेण कर्तृप्रक्रमभेदस्तु कर्तृव्यत्यासो नाम गुण एव । प्रक्रमभङ्गदोषभ्रमस्तु भ्रम एव । तत्र यदि परं देवो न जानाति तमित्यत्र देवशब्दस्त्वमित्यर्थस्य व्यत्यासेनोक्तः । तथा चापाचार्य इत्यत्र हि कृतमातृच्छेदनतया बद्धस्पर्धोऽहं लज्जे, इति वाच्ये चारुत्वाय युष्मदस्मदर्थयोः, कर्तृत्वं परशुखड्गविषयत्वेनोक्तम् । एवमन्यदप्यूह्यम् । त्वशब्दादिति । समुच्चयद्योती हि चकारः समुच्चीयमानार्थादनन्तरमेव वाच्य इति क्रमः । एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थादनन्तरमेव प्रयोज्योऽन्यथा त्वक्रमत्वं वाच्यम् । यथा तेन साहसमनुष्ठितं पुनः । अत्र पुनःशब्दस्तेनेत्यनन्तरं वक्तुं योग्यः । द्वयं गतमित्यत्र श्लोके केचिन्न्यूनपददूषणमाहुः । तथा हि—यदि कपालिपदं विशेष्यं तर्हि गर्हितत्वप्रतीतयेऽपरं कपालिपदं वाच्यम् । विशेषणं चेत्तदा तदाश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यं वाच्यं येन तस्येष्टार्थसिद्धावार्थो हेतुभावः स्यात् । तत्र तेनैवोपादाने यथा—कपालीनि । न चेदमुचितम् । पर्यायस्य यथा - शक्रस्य वज्रपाणेः कः प्रतिमल्लः । अत्र शक्रस्येति पर्यायशब्दार्थस्य वज्रपाणित्वं प्रतिमल्लत्वाभाव आर्थो हेतुः । अन्यथा शक्रस्येति वृथा स्यात् । सर्वनाम्ना यथा—दृशा दग्धं मनसिजमित्यादि । अत्रापि ता इति सर्वनाम्नोपात्तस्यार्थस्य वामलोचनात्वं कामदाह-

यथा वा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२५४॥

अत्रेत्थं प्रोच्येवेति न्याय्यम् ।तथा लग्नं रागावृताङ्ग्येत्यादाविति श्रीनियोगादिति वाच्यम् ।

---

जीवनयोर्मिथो विरुद्धयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः। अन्यथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः।न चाहेतुरावृत्तिः कपालिपदस्यापरार्थप्रतिपत्तये कल्पयितुं शक्यत इति न्यूनपदत्वं न। यदि शब्दस्याभिधैव वृत्तिः स्यात्तदैवमपि स्यात्। किं तु व्यञ्जनावृत्तिरप्यस्ति। ततोऽपरार्थो विघटते। अत एव शंभुवाचकसहस्रसत्त्वेऽपि कपालीति तद्वाचकतयोक्तम्। इत्थं च जुगुप्सनीयत्वं लभ्यते। संप्रति द्वयं चेत्यतीव चारु किल। प्रागेका सैवास्थानपातेन शोच्याऽभूत्। इदानीं तु त्वया तस्यास्तथाविधदुरध्यवसायसाहाय्यमिवाऽऽरब्धमित्युपहस्यते। काकतालीयन्यायेन कपाल्यपि यदि स्यादस्तु। न पुनः केनापि प्रकर्षेणाप्यर्थ्यत इति प्रार्थनाऽप्ययुक्ता। कपाल्यर्थे तपस्यादिव्याजेनाजेमनादिकमपि मण्डितामित्यर्थः। सा च त्वं चेति द्वयोरपि लावण्यादिसाम्यप्रतीतये प्रयुक्तम्। कलावतः कान्तिमती च प्रशंसाप्रतीतिकृत्। स्वं यथा वा।

हित्वा श्रीः पुण्डरीकाक्षं यदेन सुभगं श्रिता।
इतीवायं विरूपाक्षो गौरीवपुषि बद्धवान् ॥

शक्तिरिति। निस्त्रिंशौ खड्गनिर्दयौ। दोषाकरश्चन्द्रो दोषाणामाकरश्च। कुट्टिनी महावेश्या महाकुट्टाकी च। सर्वगेति। किमपि गम्यागम्यं न विचारयतीत्यर्थः। वृद्धयेति। एतेन निर्दोषतोक्ता। श्रीनियोगादितीति। तदुक्तम्—

उक्तिः स्वरूपावच्छेदफलो यत्रेतिरिष्यते।
न तत्र तस्मात्प्राक्किंचिदुक्तेरन्यत्पदं वदेत् ॥
उपाधिभावः स्वां शक्तिं स पूर्वत्राऽऽदधाति हि।
न च स्वरूपावच्छेदः पदस्यान्यस्य संमतः ॥

अमतः प्रकृतविरुद्धः परार्थो यत्र, यथा—

रामममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २५५ ॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

अर्थदोषानाह—

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ५५ ॥**
**संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥ ५६ ॥**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥ ५७ ॥**

दुष्ट इति संबध्यते । क्रमेणोदाहरणानि—

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ २५६ ॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न

---

इतिनैवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथेति ॥

केचिच्चाक्रममर्धान्तरैकवाचकं च दोषमस्थानस्थपदेऽन्तर्भावयन्ति । अनभिहितवाच्यं तु न्यूनपदे ।

रामेति । निशाचर्यसत्यपि । निन्दास्तुत्योर्हेतुः—रुधिरगन्धेति । चन्दनं कुङ्कुमेऽपि । जीवितेशौ मृत्युप्रियौ । अत्र प्रकृतः करुण इति ।

अर्थ इति । प्रसिद्धिविद्याभ्यां विरुद्धः स तथा । सह नियमानियमयोर्विशेषाविशेषयोः परिवर्तनेन वर्तन्ते ते तथा । विध्यनुवादाभ्यामयुक्तोऽनुपपन्नः । दुष्ट इतीति । दुष्टं पदमित्यतः पूर्वस्माल्लिङ्गव्यत्ययेन संबध्यते ।

अतीति । अत्र गगनप्रसरणमुक्तविश्रमः कमलाकरहासकृदित्येतावताऽपि स्वार्थसिद्धिः । शेषं त्वचमत्कार्येव नाधिकम् । अधिकपददोषे हि प्रकृतापेक्षया सार्थकत्वे सत्यधिकानां पदार्थानामर्थस्तात्पर्यतया स्वान्तर्भूतः पाश्चात्त्यैः पदैः प्रतिपाद्यते । अत्र तु नैवमिति भावः । यदा तु

बाधन्त इत्यपुष्टाः । न त्वसंगताः पुनरुक्ता वा ।

सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ २५७ ॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति, ता गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु, यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति सक्षेपार्थ इति कष्टम् ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ २५८ ॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

---

विशेषेण ततमिति तदाऽतिशब्दो निरर्थकः पुनरुक्तार्थो वा ज्ञेयः । न त्विति । पराशयेनेदमुक्तम् । रुद्रटो हि, इदमेव काव्यमसंगताख्यदोषतयोचे । तं प्रत्युच्यते । किमत्रासंगतम् । अर्थस्य विशेष्यविशेषणरूपस्यात्र संभवान्नासंगतिः काऽपि । पुनरुक्ता वेति तु स्वेष्टदोषाशयेनोक्तम् । न ह्यत्र किमपि पुनरुक्तमिति ।

सदेति । विस्पन्दो निष्पन्दः । सरस्वती गङ्गा । अत्र महाकाव्यव्योम्नीत्युक्ते । परिमलौ गन्धचमत्कारौ । रुचयः प्रतिभाः कान्तयश्च । इतरेति । अभिनेयकाव्यवत् । अत्रोपमानोपमेयभावे कष्टत्वमर्थस्येत्यर्थः । स एवेति । य एव योषितामनुरक्तः सन् ज्योत्स्नादेः पस्पशतामसारतामूचे स एव चन्द्रिकेति रूपकेण तस्या एवोत्कर्षं भावितवान् । यथा वा कदर्य देहि दानं निःशत्रो जहि शत्रूनित्यादि ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २५९ ॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

यथा वा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥२६०॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ २६१ ॥

अत्र मातङ्गस्य प्राङ्निर्देशो न्याय्यः ।

---

उक्त इति । वेणीसंहारेऽश्वत्थाम्नेति शेषः ।

अस्त्रेति । अस्त्राण्येव ज्वालास्तद्युक्तो यः प्रतिसैन्याब्धिस्तस्यान्तः । ममेति । अश्वत्थामोक्तिः। कृपहार्दिक्यौ भूपौ । समरं सदनं वा । पूर्वत्र भिन्नवाक्यत्वमत्र त्वेकवाक्यत्वमिति यथा वेत्युक्तम् । यथा वा, अश्वीयपङ्क्तयः । जनताः समीयुः । स्थानद्वयेऽप्यत्र क्रमेणाश्वीयेति समूहार्थीयप्रकृतेः पङ्क्तेश्च जनतेत्यत्र तद्धितार्थस्य बहुत्वस्य चार्थस्य पौनरुक्त्यम् । विशेषणाद्विशेष्यावगतौ विशेष्योक्तिः पुनरुक्ता । यथा—इन्दुमौलिः शिवो जीयादित्यत्र शिवोक्तिः । विशेषावगतौ तु न पौनरुक्त्यम् । यथा शक्रस्य वज्रपाणेः पुमानपि हरामि श्रियमित्यत्र शक्रस्य । अथात्र यथा पुमानपीत्यस्माद्विशेष्यं विनाऽप्यर्थद्वयप्रतीतिस्तथाऽत्रास्तु । न । हरामीति निर्देशेनास्मदर्थे विशेष्यमत्रास्त्येव ।

प्रधानस्यार्थस्य पूर्वं निर्देशक्रमः । तस्य दुष्टत्वे दुष्क्रमम् । यथा—भूपालेति । न्याय्य इति । यदा तूदारसत्त्वो गुर्वादिबलाद्ग्राह्यमाणः क्रमं दूषयति तदा न दोषः । क्रमानुष्ठानाभावो वा दुष्क्रमत्वम् । यथा—

क्षौरं विधाय स्नानादि भोजनादि विधाय च ।
कश्चिच्चचाल दैवज्ञं प्रष्टुं प्रतिथिवासरान् ॥

स्वपिति यावदयं निकटे जनः
स्वपिमि तावदहं किमपैति ते ।
तदयि सांप्रतमाहर कूर्परं त्वरित-
मूरुमुदञ्चय कुञ्चितम् ॥ २६२ ॥

एषोऽविदग्धः ।

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ २६३ ॥

अत्र प्रकरणाद्यभावे संदेहः । शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः ।

गृहीतं येनाऽऽसीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ २६४ ॥

अत्र द्वितीयशस्त्रमोचने हेतुर्नोपात्तः ।

इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ २६५ ॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

---

अतिशयोक्तौ कार्यकारणयोर्दुष्क्रमत्वेऽपि न दोषः । श्वेतश्यामद्युती पातां कृष्णरुद्रावित्यादिषु तु यथासंख्ये पदरचनावैपरीत्यात्प्रक्रमभङ्गः ।

स्वपितीति । स्वपिति निद्राति । स्वपिमि कामये । आहर गृहाण ।

नोचितमपीति । ब्राह्मणत्वात् । सुतेति । अवधेऽपि हतोऽश्वत्थामेति युधिष्ठिरोक्तिश्रुत्या द्रोणाचार्यस्य शोकोऽभूत् । मुक्ते च शस्त्रे हतः । ततस्तत्सुत इदमाह—यत इति । तत इत्यत्रार्थे । हेतुरिति । पितुः शस्त्रमोक्षे सुतशोको हेतुः । सुतस्य तु न कोऽपीत्यर्थः । हेतुतया परस्याऽऽकाङ्क्षायां निर्हेतुत्वम् । अहेतुतया तु साकाङ्क्षत्वमिति ।

इदमिति । कमलस्याऽऽतङ्ककारि वदनं यस्याः सा तथा । एतस्मिन्निति । स्वर्णवलयात्मनि पदार्थे ।

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥ २६६ ॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः।

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः ॥ २६७ ॥

अत्रामूर्ताऽपि कीर्तिर्ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥ २६८ ॥

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम्।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥ २६९ ॥

एतदर्थशास्त्रेण।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥ २७० ॥

अत्र केयूरपदे नखक्षतं न विहितमिति। एतत्कामशास्त्रेण।

---

उपेति। अत्र परित्यजतेत्यत्र त्यजन्त्वधुनाऽध्वगा इति पाठे भवद्भिरित्यत्र क्रमभङ्गो न स्यात्। प्रसिद्ध इति। नैवाङ्कुरोद्गमः।

महसीति। महःशब्द उत्सवार्थेऽपि। स्वैरमिति। उपपतिपार्श्वे। क नासीत्यत्र क नातीति पाठो युक्तः।

प्रसिद्धिविरुद्धमुक्त्वा धर्मशास्त्रादिविद्याविरुद्धमाह—सदेति।

केयूरेति। कामशास्त्रे केयूरस्थाने नखक्षतं नोक्तमित्यर्थः।

अष्टाङ्गयोगपरिशीलनकीलनेन
दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥ २७१ ॥

अत्र विवेकख्यातिस्ततः संप्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ । एतद्योगशास्त्रेण । एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संतर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ २७२ ॥

अत्र ततः किमिति न नवीकृतम् ।

तत्तु यथा—

यदि दहत्यनलोऽत्र किमद्भुतं
यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः
प्रकृतिरेव सतामविषादिता ॥ २७३ ॥

---

अष्टाङ्गेति । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो योगाङ्गानि । परिशीलनमभ्यासः । कीलनं स्थिरीकरणम् । योगस्य परिशीलनेन कीलनमित्यर्थः । दुःसाधसिद्धीः सविधयति यस्ता एव वा-ऽणिमादयः सविधा यस्य तम् । विदूरे दूरस्याभावो विदूरं तस्मिन्निति व्युत्पत्त्या निकटे कुर्वन्ख्यातिं च लभमानः कोऽपि समाधिधनानां चूडामणिर्मुक्तः । संप्रज्ञातः सविकल्पः ।

प्राप्ता इति । (* प्रस्तावैक्यसंबन्धत्वेन सत्यपि निरपेक्षतयाऽवश्यवाच्यतया पर्यायान्तराभावाच्च ) एककाव्यमध्ये भिन्नवाक्यगतत्वेन शब्दार्थयोः पौनरुक्त्येऽसौ दोषः । विपर्यये तु कथितपदपुनरुक्ताख्यौ शब्दार्थयोर्दोषौ । ननु कथितपदे शब्दपौनरुक्त्यादर्थपौनरुक्त्यं बलादायातमित्यनयोरयमेव वक्तुं युज्यते । मैवम् । आपातमात्रेण प्रतीतिग्राह्ये शब्दस्यार्थस्य वा पौनरुक्त्ये कथितपदपुनरुक्तादोषौ यतः स्याताम् । यदीति । अत्र किमद्भुतं किं ततः सदैव प्रकृतिरेवेत्यादीनां ततः किमि-

---

* चतुश्चिह्नान्तर्गतो ग्रन्थः कपुस्तके दृश्यते ।

यत्रानुल्लिखिताक्षरं हि निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद-
स्तस्याऽऽभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७४॥

अत्र च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति स नियमत्वं वाच्यम्।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ २७५ ॥

अत्र शोण एवेति नियमो न वाच्यः।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ २७६ ॥

अत्र ज्यौत्स्नीमिति श्यामाविशेषो वाच्यः।

---

त्यर्थत्वं तात्पर्यतया न पर्यायान्तरतया ज्ञेयम्। अतो न पुनरुक्त-दोषप्रसङ्गः। निर्वेदपरस्येयमुक्तिः। ततः प्रत्युत शान्तरसपोष इति नात्रायं दोष इत्येके।

यत्रेति। यत्र जगदिदमनुल्लिखिताक्षरमनभिव्यक्ताकारम्। यस्याऽऽकारो जगताऽपि नोल्लिख्य निर्णीतः। यद्वाऽनुल्लिखितान्ययमीदृगित्यनिर्णयपराण्यक्षराणि यस्येति तत्तथा। उत्कर्षाय प्रतियोगिनः कल्पनं चिन्ता। आभासेनैव मणीकृता अन्येऽश्मानो येन स चासौ सुमणिश्च स तथा। अत्रैवशब्दाभावे सनियमत्वं परिवृत्तम्। छायामात्रेत्युक्तौ तु मात्रशब्दान्नियमोऽपि लभ्यते।

न वाच्य इति। अवधारणे हि कृते नद एवाधरो न रक्त इति प्रतीतिः।

श्यामामिति। तस्या वक्त्रमुद्राङ्किताः काष्ठाः पाश्चात्त्योद्दीपनविभावैरालोकयोग्याः कृताः। श्यामेत्युक्ते सामान्या निशा लभ्यते न राका।

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकरालय माऽवमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ २७७ ॥

अत्र, एकेन किं न विहितो भवतः स नामेति सामान्यं वाच्यम् ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चाऽऽत्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ २७८ ॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति । न हि परस्येत्यनेन संबन्धो योग्यः ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ २७९ ॥

अत्र स्याच्चेदेष न रावण इत्यन्तमेव समाप्यम् ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥२८०॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भि-

---

सामान्यमिति । न कौस्तुभेनेति विशेषः ।

न हीति । परस्य रामस्य स्त्रीरत्नमिति योगो न । तथा प्रतीत्यभावात् । एषा रावणमातामहमाल्यवदुक्तिः ।

समाप्यमिति । अयं भावः—रावण इत्येतज्जगदाक्रन्दकारित्वादर्थान्तरं वदज्जनकस्य धर्मवीरं प्रत्यनुभावतामेति । ऐश्वर्यं पाण्डित्यं परमेशभक्तिर्देशविशेषोऽभिजन इत्येतत्सर्वं लोकबाधेनाधर्मपरस्य निष्फलमिति तावतोऽर्थस्य तिरस्कारत्वेनैव रावणचेष्टितं निर्वाहणीयम् । यत्त्वन्यदुपात्तं क्व नु पुनरिति तद्यदि संदेहेन योज्यतेऽथाऽऽक्षेपत्वेनाथापि नेदृग्वरो लभ्यत इत्यत्रार्थान्तरत्वेन तथाऽपि प्रकृतस्य धर्मवीरस्य न कथंचिन्निर्वाहः । ततोऽस्थानमुक्तो दोष इति ।

स्तवम् । विनयेन धीरता, इति पाठो युक्तः ।

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्याऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः॥२८१॥

इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ २८२ ॥

अत्र शयितः प्रयत्नेन बोध्यस इति विधेयम् ।
सुखेन शयितश्चिरादुषसि बोध्यसे मागधैः, इति युक्तम् ।
यथा वा—

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२८३॥

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

---

प्रयत्नेति । दुर्योधनं प्रत्यश्वत्थामाऽऽह । कृतद्रोणाचार्यपदेन मया सर्वेषु हतेष्वरिषु त्वं निश्चिन्तः शयितः सन् स्तुतिभिरेव यदि परं बोध्यसे, अत्र शेष इति न विधेयं किं तु बोध्यस इति । तथा यथा शयित इत्यनुवादे वाच्ये शेष इति विधिरुक्तस्तथा प्रयत्नेन परिबोध्यस इति विधौ वाच्ये परिबोधित इत्युक्तमित्यनुवादायुक्तमपि ।

ईहत इति । दाम्भिकेष्विति शेषः । व्युत्क्रमेणेति । न हि वाताहारत्वादधिको दम्भोऽम्भःकणव्रतम् । नापि ततोऽधिकं दाम्भिकत्वं मृगाजिनवसनमिति । व्युत्क्रमोक्तिस्तु प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणानुशोचनमयनिर्वेदस्याङ्गं स्यादेवेति विध्ययुक्तत्वम् ।

अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८४ ॥

अत्र विरहिप्राणदमनेति नानुवाद्यम् ।

लग्नं रागावृताङ्ग्येत्यादि ॥ २८५ ॥

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

उद्यतस्य परं हन्तुं स्तब्धस्य विवरैषिणः ।
यथाऽस्य जायते पातो न तथा पुनरुन्नतिः ॥ २८६ ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति, तथाऽपि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम् ।

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।**
**संनिधानादिबोधार्थम्**

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते । तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये ।

यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ २८७ ॥

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ २८८ ॥

अत्र कर्णश्रवणशिरःशब्दाः संनिधानप्रतीत्यर्थाः ।

---

नानुवाद्यमिति । अत्र किमित्यसमत्प्राणान्दमयसीति विधौ वाच्ये प्राणदमनेत्यनुवाद उक्तः ।

पुंव्यञ्जनस्येति । इहान्वयव्यतिरेकाभ्यामर्थ एवाश्लीलः । पश्चात्तु पदवाक्येऽश्लीलपदभावः ।

**पौनरुक्त्यापवादमाह—**कर्णेति । शालिन इति । नरा इति शेषः । अत्र कर्णेति । विलासनिर्वाहार्थं प्रतिनियतप्रतिदेशसंनिहितैर्भूषणैः प्रयोजनमिति तदर्थं प्रयुक्ता इत्यर्थः ।

विदीर्णाभिमुखारातिकराले संगरान्तरे ।
धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥ २८९ ॥

अत्र धनुःशब्द आरूढत्वावगतये ।

अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥२९०॥

इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ २९१ ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसंपत्तारुण्यं यस्यास्ते ते च विभ्रमाः ।
षट्पदान्पुष्पमालेव कान्नाऽऽकर्षति सा सखे ॥ २९२ ॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते ।

स्थितेष्वेतत्समर्थनम् ॥ ५८ ॥

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ।

---

अत्र धनुरिति । अन्यथा ज्याकिणचिह्नेन दोष्णेत्युक्ते नित्यनिबिडाकृष्टिकृतकिणवत्त्वं दोष्णोर्न प्रतीयते । दीर्घावेष्टनेनापि किणचिह्नोत्पत्तेः ।

अन्यत्रेति । आरूढत्वावगत्यभावे ।

मुक्ताशब्द इति । उत्प्रेक्ष्यमाणस्य स्तनकर्तृकस्य हासस्यातीव शुभ्रस्य प्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थंमुक्त इत्यर्थः ।

पुष्पेति । विदग्धविलोभनक्षमकामिन्युपमानभावेन मालाया उपादानभावादुत्कृष्टपुष्पग्रथितत्वमवगमयतीत्यर्थः । पुष्पस्रजमिति । सामान्यपुष्पस्रजम् । त्यज करिकलभप्रेमबन्धं करिण्याः । अत्र करिशब्दात्ताद्रूप्यावगतिः ।

स्थितेष्विति । प्रयुक्तेषु । काञ्चीत्यादीति । आदिपदादुष्ट्रकरभादि । संके-

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥ २९३ ॥

—इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ, "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्यः" —इति न युक्तम्। युक्तत्वे वा—

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम्।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥ २९४ ॥

—इत्याद्युदाहार्यम्।

## ख्यातेऽर्थे निर्हेतोरदुष्टता

यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥२९५॥

अत्र रात्रौ पद्मस्य संकोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते'—इति हेतुं नापेक्षते।

## अनुकरणे तु सर्वेषाम्।

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्। यथा—

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम्।
पश्यैष च गवित्याह सुत्रामाणं यजेति च ॥ २९६ ॥

---

तद्व्यवहाराभ्यां हि शब्दार्थनिश्चयः क्रियते न यथाकथंचित्क्रियते। क्रियेति। मधुरमिति रूपेण। गतार्थस्येति। गदनस्य वाग्रूपत्वाद्वाचमिति विशेष्यं गतार्थमित्यर्थः। पादाभ्यामिति। व्रजन्नित्युक्ते पादाभ्यामिति लब्धमेव। परं यदुच्यते तच्चरणत्रेति विशेषणसिद्धये। विशेषणसिद्धिश्चात्र विशेष्यं विनाऽन्यथा न स्यादिति वाच्यमेव विशेष्यम्। इत्यादीति। युक्तत्वे वेति यदाऽभ्युपगमेन व्याख्यायते तदेत्याद्येवोदाहार्यं न पुनर्जगादेत्यादि। क्रियाविशेषणत्वेनैव साध्यसिद्धेः। यदा त्वसूयया व्याख्यायते तर्हीत्याद्युदाहार्यं न केवलं जगाद मधुरामितीति भावः।

मृगेति। अद्राक्षीर्गवित्याह सुत्रामाणमित्यादौ श्रुतिकटुच्युतसंस्कृत्यप्रयुक्तदोषाः। एवं सर्वत्र योज्यम्।

वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥५९॥

वक्तृ–प्रतिपाद्य—व्यङ्ग्य—वाच्य—प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः। क्वचिन्न दोषो न गुणः। तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः।

क्रमेणोदाहरणानि—

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते ॥ २९७ ॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम्।
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च संमदम् ॥ २९८ ॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम्।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्-
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ २९९ ॥

वाच्यवशाद्यथा—

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ ३०० ॥

अत्र सिंहे वाच्ये परुषाः शब्दाः। प्रकरणवशाद्यथा—

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३०१ ॥

अत्र शिरोधूननेन कुपितस्य वचसि।

---

क्वचिन्नेति। क्वचिन्न दोषो न वा गुण इत्यर्थः। कश्चिदिति। कानुबन्धो ङानुबन्धश्च। ते इति। गुणवृद्धी।

अन्त्रेति। नलकैः क्रूरं क्वणतां कङ्कणप्रायाणां प्रेङ्खितानां चलितानां च भूषणानां रवैः। प्राग्भारः सेकः। अत्र रौद्रो रसो व्यङ्ग्यः।

वचसीति। कष्टत्वं गुण इति योगः।

क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ २०२ ॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याऽऽहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥ २०३ ॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

अश्लीलं क्वचिद्गुणः । यथा सुरतारम्भगोष्ठ्याम्—

" ताम्बूलदानविधिना विसृजेद्वयस्याम् । द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु " इति कामशास्त्रस्थितौ ,

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥ २०४ ॥

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥ २०५ ॥

---

शीर्णेति । अपघनैरङ्गैरित्यत्रोपलक्षणे तृतीया । घटयति नवान् करोतीत्यर्थः । उल्लाघयन् नीरुजीकुर्वन् । घृणानिघ्ना कृपासक्ता निर्विघ्ना वृत्तिर्यस्य तथा ।

येन ध्वस्तेति । अनः शकटं । अभवेनासंसारेण । बलिं दैत्यं जितवान्यः कायः स पूर्वं सुधाहृतौ स्त्रीचक्रे । भुजंगहा कालियाहिघाती । रवलयः शब्दब्रह्मलयः । अगं शैलं गां च क्षमाम् । शशिनं मन्थति यो राहुस्तस्य शिरोहरः । अन्धका वृष्णयः । क्षयो निवासः । सर्वदः सर्वदाता । उमाधवपक्षे बलिजितो हरेः कायः पुरेष्वस्त्रीचक्रे । शशियुक्तं शिरः, हर इति नाम च यस्याऽऽहुः । अन्धको दैत्यः । करीति ।

तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः ।

करिहस्त इति प्रोक्तः । संबाधौ संघयोनी । ध्वजः पताका च चिह्नं पुंलिङ्गं च । साधनं योनिरपि ।

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ २०६ ॥

अत्र भाव्यमङ्गलसूचकम् ।

संदिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः । यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ २०७ ॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः । यथा—

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥ २०८ ॥

स्वयं वा परामर्शे यथा—

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ २०९ ॥

---

रक्तेति । रक्तं सानुरागं रक्तेन रुधिरेण प्रसाधिताऽर्जिता मण्डिता च भूर्यैः । विग्रहो वैरं वपुश्च । स्वस्थाः स्वर्गस्थाः कुशलिनश्च ।

पृथुकेति । पृथुकानां बालानामार्तस्वरा ये तेषां पात्रं पृथूनि कार्तस्वरस्य हेम्नः पात्राणि यत्र । भुवि उषितो भूषितोऽलंकृतश्च । विलसत्कैरेणुभिर्विलसद्भिः करेणुभिश्च । अत्र राजकविपक्षयोर्नियतार्थप्रतीतौ व्याजस्तुतिपर्यवसायित्वाद्गुणत्वम् ।

निर्विकल्प इति । भेदसंसर्गाभ्यां ज्ञानं विकल्पः ।

षडिति । इडापिङ्गलासुषुम्णागन्धारीहस्तिजिह्वापूषासुयशाअलंबुसाकुहूप्रभृतिवाताश्रितषोडशनाडीचक्रस्य मध्ये स्थित आत्मा यस्य । हृदीति । हृच्चक्रे । रूपं ज्योतिराद्रिरूप आकारः । सिद्धिर्भुक्तिमुक्तिरूपा ।

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

फुल्लुक्करं कमलकूरणिहं वहन्ति
जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्त महिसीदहिणो सरिच्छा
दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥ ३१० ॥

अत्र कलमभक्तमहिषीदधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।

न्यूनपदं क्वचिद्गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥३११॥

क्वचिन्न गुणो न दोषः । यथा—

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥३१२॥

अत्र पिहितेत्यतोऽनन्तरं 'नैतद्यतः' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

---

ज्ञानेच्छाक्रियाद्याः शक्तयः । तासां न्यग्भावोद्भावनप्रभुः ।

मा मेति । मा मेत्यादिनिषेधपदेषु कदर्थयेत्यादिः काऽपि क्रिया नास्तीति न्यूनत्वम् ।

उत्तरेति । पूर्वां तिष्ठेदित्यादिकां प्रतिपत्तिं बाधित्वा दीर्घं न सेत्यादिरुत्तरा नैतद्युज्यत इति विना प्रतिपत्तिः स्यादित्यर्थः ।

---

१—पुष्पोत्करं कमलकूरनिभं वहन्ति ।
ये सिन्धुवारविटपा मम वल्लभास्ते ॥
ये गालितस्य महिषीदध्नः सदृक्षास्ते ।
किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥

अधिकपदं क्वचिद्गुणः । यथा—

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ ३१३ ॥

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

यथा वा—

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धाहेति परं मृते पुत्रे ॥ ३१४ ॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं क्वचिद्गुणो लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणानि—

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३१५ ॥
ताला जाअन्ति गुणा जाला ते सहिअएहिं१ घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥ ३१६ ॥
जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥ ३१७ ॥

पतत्प्रकर्षमपि क्वचिद्गुणः यथा—उदाहृते प्रागप्राप्तेत्यादौ । (३१८)

---

अन्ययोगेति । सन्त एव जानन्तीति भावः ।

हर्षेति । आदिशब्दाद्धाहेति शोकः ।

पौरुषेति । पौरुषलक्ष्मीरेव तव लक्ष्मीरिति व्याख्याने लाटानुप्रासः । पौरुषमेव कमलं यस्याः कमलाया इति व्याख्याने तु तात्पर्यमात्रभेदाभावाद्यमकत्वमेव ।

तालेति । ताला तदा । जाला यदा । अत्रापरः कमलशब्दो विकसितत्वादिगुणार्थान्तरवाची ।

प्रागिति । अत्र हि चतुर्थपादे जामदग्न्यस्य शंभौ भक्तिरेवोक्ता । सा च तत्प्रकर्षेणैव वक्तुं योग्या ।

---

१—' तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ '

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः, यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्, अपि तु वाक्यान्तरमेव क्रियते। यथा, अत्रैव प्रागप्राप्तेत्यादौ।

अपदस्थसमासं क्वचिद्गुणः। यथा–उदाहृते रक्ताशोकेत्यादौ।(३१९)

गर्भितं तथैव यथा––

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओ वि।

सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पुम्हसिमि ॥ ३२० ॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय।

एवमन्यदपि लक्ष्याल्लक्ष्यम्।

रसदोषानाह––

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।

कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ ६० ॥

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।

अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥

---

अत्रैवेति। अयं भावः–भवत्वशिथिल इत्यादिना समाप्तेऽपि परशुवर्णने येनानेनेति वाक्यान्तरेण पुनस्तस्यैव वर्णनमारब्धं न दुष्टम्। वाक्यान्तरगतत्वेनोक्तत्वात्। विशेषणत्वेनोक्तौ तु दुष्टत्वमेव यथा नववयोलास्याय वेणुस्वन इत्यादौ।

रक्तेति। अत्र विरहिवाक्ये दीर्घसमासता नोचिता। परं शिरःकम्पावलोकात्कुपित इव विरहीति कुपितोक्तौ न दोषाय।

तथैवेति। क्वचिद्गुण इत्यर्थः। हुमीति।

भवाम्यपहस्तितरेषो निरङ्कुशोऽथ विवेकरहितोऽपि।

स्वप्नेऽपि त्वयि पुनः प्रतीहि चिन्तां न मुष्णामि।

विषमबाणलीलाकथागाथेयम्। स्मरं प्रति तारुण्योक्तिरेषा। रेषा मर्यादा।

कष्टेति। अनुभावोक्तौ विभावस्य कष्टेन व्यक्तिर्विभावोक्तौ चानुभा-

---

१––' भ्रमामि अपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥ '

अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडा दयिताननें सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३२१ ॥

अत्र व्रीडादीनाम् ।

ध्यानम्रा दयिताननें मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे

इत्यादि तु युक्तम् ।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् । क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥ ३२२ ॥

---

वस्य । व्रीडादीनामिति । स्वशब्दोपादानमिति योगः ।

रससामान्यविशेषभावाद्वैरूप्यमित्याह—स्वशब्देनेति । स्वशब्दो रस इति रूपः । वाच्यत्वमिति । वाच्यत्वं हि रसादेः स्वशब्दनिवेदितत्वेन वा स्याद्विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन्पक्षे स्वशब्दनिवेदितत्वाभावे विभावादिप्रतीतौ रसादेरप्रतीतिप्रसङ्गः । न च केवलशृङ्गारादिशब्दान्विते विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिर्यथा शृङ्गारहास्यकरुणा इत्यादौ । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादेर्न त्वभिधेयत्वं कथंचिदिति स्वशब्दवाच्यता दोष इत्यर्थः । एवं द्वितीय एव पक्षो न्याय्यः । एतेन शृङ्गाराद्याः शब्दाः शृङ्गारादेर्वाचका इत्युद्भटोक्तं निरस्तम् ।

तामिति । भुजमूलं कक्षा । तत्र जनैर्या लोक्यते तां तथा ।

आलोक्य कोमलकपोलतलाभिषिक्त-
　व्यक्तानुरागसुभगामभिरामरूपाम् ।
पश्यैष बाल्यमतिवृत्त्य विवर्तमानः
　शृङ्गारसीमनि तरङ्गितमातनोति ॥ ३२३ ॥

स्थायिनो यथा —

संप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
टणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ३२४ ॥

अत्रोत्साहस्य ।

कर्पूरधूलिधवलद्युतिपूरधौत-
　दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
　व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ ३२५ ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना ।

परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥ ३२६ ॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि संभवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

---

अभिषक्तः । न्यस्तः । व्यक्त इति । पुलकादिनेति शेषः ।

संप्रहार इति । रणे शस्त्रैर्ये घातास्तेषां झणत्कारैरित्यर्थः । यत्रापि स्वशब्दनिवेदितत्वं विभावादिभिः प्रतिपादितत्वमप्यस्ति तत्रापि विभावादिमुखेनैव रसादिप्रतीतिः । स्वशब्देन सा केवलमनूद्यते ।

लीलेति । लीलया शिरस्यंशुकस्य निवेशविशेषेण या क्लृप्तिस्तथा । रूपा इति । शशिकान्तिदिक्स्त्रीरूपाः । अनुभावेति । शृङ्गारी चेद्युवा, संभवन्ति तदाऽनुभावाः । शान्तश्चेन्न संभवन्ति तं प्रति विभावानामकिंचित्करत्वादिति शृङ्गारितसंदेहे सन्तो विभावा लीलादिष्वनुभावेषु न पर्यवस्यन्ति । नापि वियदलिमलिनेत्यादिवदत्र विभावस्यासाधारणतया ऽन्यतमाक्षेपहेतुः किमपि पदमस्ति ।

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ३२७ ॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचार्युपात्तः ।

णिहुअरमणम्मि लोअणवहम्मि पडिए गुरूण मज्झम्मि ।
सअलपरिहारहिअआ वणगमणं चेअ महइ वहू ॥ ३२८ ॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत् , न दोषः ।

दीप्तिः पुनः पुनः, यथा कुमारसंभवे रतिविलापे ।

अकाण्डे प्रथनं यथा—

वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरसंक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम् ।

---

प्रतिकूलस्येति । कालो मृगचलः प्रयातः प्रयात एव न पुनरेतीत्यादिवैराग्यकथाभिः प्रियाप्रसादनं निर्विण्णस्येव कस्यापीति शृङ्गारप्रतिकूलत्वं शान्तस्य । विभाव इति । एतेन विभावप्रातिकूल्यं शान्तशृङ्गारयोर्व्यभिचारिप्रातिकूल्यं च । शान्तं प्रति निर्वेदस्य व्यभिचारित्वं परमतेन स्वमतेन तु विचार्यम् । एवं शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोरपि विभावादिप्रातिकूल्यं ज्ञेयम् ।

णिहुअइति ।

निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये ।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः ॥

निभृतरमण उपपतिः । वनगमन संकेतगृहम् ।

दीप्तिरिति । उपभुक्तो हि रसः स्वसामग्रीलब्धपोषः पुनः पुनः परामर्शेन म्लायति मालतीमालेव । धाराप्राप्ते हि रसे तदाविष्टानां तत्परक्षानामुक्तिरल्पीयस्येव निर्यातीत्यर्थः ।

सक्षय इति । भीष्मादिवीरलक्षाणाम् ।

अकाण्डे छेदो यथा—

वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे "कङ्कणमोचनाय गच्छामि"—इति राघवस्योक्तौ ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम् । यथा हयग्रीववधे हयग्रीवस्य ।

अङ्गिनोऽननुसंधानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ताः, उत्तममध्यमाधमाश्च । तत्र रतिहासशोकाद्भुतान्यदिव्योत्तमप्रकृतिवद्दिव्ये-

---

हयग्रीवेति । विपक्षोत्कर्षेण मूलनायकस्य विष्णोर्महोत्कर्ष इति साध्विदमिति । तस्मादित्थं वाच्यम् । तथा हि कादम्बर्यां रूपविलासेत्यादिना महाविप्रलम्भबीजमुपक्षिप्य तदनुपयोगिनामटवीशबरेशाश्रममुनिपुरीनृपादीनां, हर्षाख्यायिकां वा जयति ज्वलदित्यादिना हर्षोत्कर्षवद्विजयबीजेऽनुपयोगिबाणान्वयस्य वर्णनम् । तदित्थं महाकवयोऽप्यन्यद्बीजमुपक्षिप्य तदसंगतशृङ्गाराङ्गभूततत्तद्रूपवनविहारपुष्पावचयजलकेल्यादीनां प्रस्तुतरसतिरस्कारिणीं वर्णनां कुर्वन्तो दृश्यन्त इति त एवात्र तत्त्वज्ञाः ।

विस्मृतिरिति । अनुसंधानं हि सहृदयतायां सर्वस्वम् ।

प्रकृतय इति । स्वभावाः । धीरोदात्तेति । धर्मयुद्धवीरप्रधानो धीरोदात्तः। धीरोदात्तादित्रयेऽपि क्रमेण रौद्रशृङ्गारशान्तरसप्राधान्येऽप्यवश्यंभावित्वादुत्साहस्य वीररसप्राधान्यमपि बोध्यम् । ततो वीररौद्राभ्यां वीरशृङ्गाराभ्यां दानधर्मवीरशान्ताभ्यां प्रधाना धीरोदात्तादयः स्युः । दिव्यादिप्रकृतित्रिकस्य प्रत्येकमुत्तममध्यमाधमभेदत्वेन त्रिधात्वे सति नवधात्वम् । नवभेदानामपि प्रत्येकं धीरोदात्तादित्वेन चतुर्धात्वे षट्त्रिंशद्भेदत्वम् । अदिव्योत्तमेति । अदिव्या मानुषी सा चासावुत्तमप्रकृतिश्चेति सा तथा । अभिनेयानभिनेययोः काव्ययोर्यथोत्तमप्रकृतिराजादेरुत्तमस्त्रीभिः सहाग्राम्य संभोगविप्रलम्भवर्णनं तथैव दिव्येषु । संभोगश्च न सुरतात्मैवैको यावदन्योऽपि मिथोदर्शनादिको ग्राह्यः । एवं हास्यादावप्यौचित्यं वाच्यम् । दिव्येषु रतिर्वर्ण्यत्वेन सामान्येनोक्ता ।

---

१ ए. °ताया. स° ।

ष्वपि। किं तु रतिः संभोगशृङ्गाररूपा, उत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्।

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार॥ ३२९॥

इत्युक्तवद्भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव। अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा, तावदेवोपनिबद्धव्यम्, अधिकं तु निबध्यमानमसत्यप्रतिभासेन 'नायकवद्वर्तितव्यम्, न प्रतिनायकवत्–' इत्युपदेशे न पर्यवस्येत्। दिव्यादिव्येषूभयथाऽपि। एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः। तत्रभवन्भगवन्नित्युत्तमेन नाधमेन, मुनिप्रभृतौ न राजादौ, भट्टारकेति नोत्तमेन राजादौ, प्रकृतिविपर्ययापत्तेर्वाच्यम्। एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम्।

---

उत्तमदेवतादिविषयत्वेनापि सा स्यादित्याशङ्क्याऽऽह—किं त्विति। अनुचितमिति। आस्वादकानां हि यत्र चमत्काराविघातस्तदेव रससर्वस्वम्। आस्वादायत्तत्वात्। पित्रोः सभोग इवैतद्वर्णने लज्जादि न तु कश्चिच्चमत्कार इत्यर्थः। यथा कुमारसंभवेऽष्टमसर्गे। क्रोध इति। भ्रुकुट्यादिविकारांस्त्वदिव्येष्वेव। अवदानमिति। सातिशयं कर्म। अधिकमिति। अयं भावः—स्वःपातालगमनाब्धिलङ्घनादिकमदिव्यस्य वर्ण्यमानमसंभाव्यतयाऽलीकमिति चिन्तयन्तो विनेया उपदेश्यस्य चतुर्वर्गोपायस्याप्यलीकतां कल्पयन्ति सर्वमिदं शास्त्रोक्तमसंबद्धमिति। उभयथाऽपीति। रामपाण्डवादौ दिव्यादिव्यसबद्धं वाच्यमित्यर्थः। न मुनिप्रभृताविति। वाच्यमिति योगः। प्रकृतिविपर्ययापत्तोरिति हेतुः। देशेति। विश्वं विश्वैकदेशाश्च देशाः। एकद्वित्रिसप्तचतुर्दशैकविंशतिविश्वानि स्युः। स्वर्गमर्त्यपातालमहर्जनस्तपःसत्यैः सप्तभिश्च वायुस्कन्धैः सप्तभिश्च पातालैर्विशेषविवक्षायामनेकत्वं सामान्यविवक्षायां त्वैक्यम्। तत्र भूमध्ये जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्याः सप्त द्वीपाः। अष्टादशेत्येके। एकस्त्रयश्चत्वारः सप्ताब्धयो वेत्यादिकविप्रसिद्ध्या सर्वं घटते। कालः काष्ठामुहूर्तयामदिनरात्रिपक्षमासर्तुवर्षादिभेदभिन्नः। वयः शैशवादिकम्।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा--

कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य तस्य राज्ञा प्रशंसनम् ।

" ईदृशाः " इति नायिकापादप्रहारादिना नायककोपादिवर्णनम् । उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥ इति ।

इदानीं क्वचिद्दोषा अप्येते—इत्युच्यन्ते—

**न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।**

यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥३२०॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथाप्रतीतिकृत् । अत एव "दूरादुत्सुकम्-"(३२१) इत्यादौ व्रीडाद्यनुभावानां विचलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसाप्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ।

**संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ ६३ ॥**

बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत् ।

---

जातिः स्त्रीपुंसादिका ब्राह्मणत्वादिका वा । आदिशब्दाद्विद्यावित्तकुलादयः । व्यवहारादीत्यादिशब्दादाकारवचनादयः । व्यवहारादिति देशादिभिः प्रत्येकं योज्यम् । तेन देशविशेषादेरौचित्येन निबन्धः कार्य इत्यर्थः । एवं कालादौ योज्यम् । तस्येति । वसन्तस्य ।

एत इति । दोषा इत्यर्थः । न तथेति । यथौत्सुक्यनामा संचारी साक्षात्स्वपदेनोक्तश्चमत्कारकारी न तथा तदनुभावश्चिन्तादिरूपश्चमत्कारीति स्वशब्देनौत्सुक्यनामा संचारी प्रोक्तः । व्रीडादीति । व्रीडाहर्षकोपास्तथा प्रसादास्तदनुभावा विवलनस्फारणारुणत्वाञ्चितभ्रूलतात्वबाष्पाम्बुपूर्णत्वरूपाः । तथा प्रतिपत्तीति । चमत्कारकारित्वाभावादित्यर्थः ।

यथा—क्काकार्यं शशलक्ष्मणः क्व च कुलम्—इत्यादौ ।

अत्र वितर्कादिषूद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ३३२ ॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धत्वम् ।

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ ३३३ ॥

इत्यत्राऽऽद्यमर्धं बाध्यत्वेनैवोक्तम् । जीवितादप्यधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धतद्गुणोपमानतयोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः । न तु विनेयोन्मुखीकरणमत्र परिहारः । शान्तशृङ्गारयोर्नैरन्तर्यस्याभावात् । नापि काव्यशोभाकरणम् । रसान्तरादनुप्रासमात्राद्वा तथाभावात् ।

---

क्काकार्यमिति । अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने मिथो बाध्यबाधकतया भवन्ती चिन्तायामेव विश्राम्यन्ती परमास्वादस्थानम् ।

पाण्डु क्षाममिति । रसौ पारदस्नेहौ । क्षेत्रियरोगः क्षयरोगो जारश्च । न विरुद्धत्वमिति । पाण्डुतादयो हि क्षयरोगजा जारचिन्तोत्थाश्च मृत्यवे भवन्तीति करुणविप्रलम्भयोः समाः ।

सत्यमिति । अत्र शृङ्गारविभावप्रतिपादकं पूर्वार्धं बाध्यत्वेनैवोक्तं न तु शिष्यौन्मुख्यार्थं काव्यशोभार्थं वा । ध्वनिकारस्तु शिष्यौन्मुख्यार्थत्वकाव्यशोभार्थत्वाभ्यां शान्तशृङ्गारयोर्विरोधं परिहरति । शृङ्गारादि काव्यं चारु स्यान्मृदुमतयश्च नृपाद्या झगित्यभिमुखीकृताः शान्ते सुखं स्थाप्यन्ते । तदसत् । अनयोर्नैरन्तर्यस्य भरतेन निषिद्धत्वात् । प्रसिद्धेति । प्रसिद्धेन तेनाधिकत्वाख्येन गुणोपमानता । तयोपात्तमस्थिरत्वं कर्तृ शान्तं पुष्णाति । यद्वा प्रसिद्धः स आधिक्याख्यो गुणो यस्य प्रस्तावादपाङ्गभङ्गस्य स तथा । स उपमानं यत्र यस्य वा तत्प्रसिद्धतद्गुणोपमानम् । तस्य भावस्तत्ता । तयोपात्तम् । प्रस्तावाज्जीवितं द्वितीयार्धं वा कर्तृ । तदङ्गेति । शृङ्गाराङ्गणाम् । रसान्तरादिति । अत्रोक्तशान्ताख्यरसात् । मात्राद्वेति । मत्ताङ्गनेत्यादिरूपात् । तथेति । गुम्फशोभाभावादित्यर्थः ।

आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।
रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥ ६४ ॥

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम् । यथा नागानन्दे, शान्तस्य जीमूतवाहनस्य 'अहो गीतम् अहो वादित्रम्' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः ।

न परं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते । यथा—

भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तरालाः ॥३३४॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥ ३३५ ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥ ३३६ ॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः ।

स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ ६५ ॥

---

प्रतिपक्षेति । अन्यस्थानेऽविरुद्धमिति तात्पर्यम् । न तु प्रतिपक्षो भीरुरिति निश्चयः क्वापि । प्रतिपक्षस्य धीरोद्धतस्यापि रावणादेः प्रसिद्धत्वात् । रसान्तरमिति शेषः ।

निवेशित इति । एतेन विरोधो निवृत्तः । वीराः स्वदेहानित्यादिनोत्सवाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यानुयायितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकता । स्वदेहानित्यनेन चैकत्वाभिमानादाश्रयैक्यम् । अन्यथा विभिन्नविषयत्वे को विरोध इत्यर्थः । नन्वत्र रतिजुगुप्से एव वीरं प्रति संचारीभूते लक्ष्येते । न तु शृङ्गारबीभत्सरसौ । तथाऽपि प्रकृतोदाहरणं युज्यत एव । रतिजुगुप्सापोषितत्वाद्रसयोः ।

साम्येनेति । न दुष्टत्वम् । द्वौ विरुद्धावङ्गित्वे दुष्टौ नाङ्गतायाम् । सा चाङ्गता सहजाऽऽरोपजा वा । तत्र येषां सहजा तेषां तावदुक्तावविरोध एव । यथा विप्रलम्भे तदङ्गानां व्याध्यादीनाम् । ते हि निरपेक्षभाव-

यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ३३७ ॥

एतद्भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ ।
अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति ।

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥ ३३८ ॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य । यथा वा परः शृङ्गारी तदवलोकनात्सस्पृहस्तद्वदेत-द्दृशो मुनय इति साम्यविवक्षा ।

---

तया सापेक्षभावाविरोधिन्यपि करुणे सर्वथाऽङ्गत्वेन दृष्टाः । यथा भ्रमि-मरतिमलसेत्यादि । आरोपिताङ्गता यथा—

लीलापद्मकशाघातैः कान्ताभिः कोऽपि हन्यते ।

इति । अत्र हन्यत इति रौद्रानुभावानां रूपकबलादारोपितानां चोर-वदित्यनुक्तेस्तदनिर्वाहादेवाङ्गत्वम् । इय चान्याङ्गता यदाऽधिकारित्वात्प्र-धान एकस्मिन्काव्यार्थे रसौ भावौ वा मिथो विरुद्धावङ्गतां यातस्त-त्रापि न दोषो यथा क्रामन्त्य इति । पराङ्गत्वेऽपि कथं विरोधिनोरवि-रोध इति चेदुच्यते । विधौ विरुद्धसमावेशो दुष्टो नानुवादे । यथैही-त्यादि । न ह्यत्र विधिस्तदैतयोरपि हि न विरोधः । अयमिति । अत्र स्मर्यमाणः शृङ्गारः करुणस्य प्रकृतस्य विरुद्धोऽपि पोषकः । यतः स्व-भावसुभग वस्तु शोच्यतां गतं प्रागवस्थाभाविभिर्विलासैः स्मर्यमाणै-र्गाढं शोकं जनयति ।

दन्तेति । स्वडिम्भभक्षणप्रवृत्तसिंहिकायाः स्वाङ्गं ददतो बौद्धस्य केनापि चाटु क्रियते । पुलकोद्भेदः परार्थसंपादनसुखाभ्याम् । रक्तम-सृगनुरक्तं च । मुनयश्चोद्बोधितस्मरावेशाश्चेति विरोधः । जातस्पृहैरिति । वयमप्येवं कदा कृपालवो भविष्याम इति भावः । पर इति । श्लो-कोक्तः कामिन्यतिरिक्तः । तदवेति । कामिनं तक्षते क्षणात् । एत-द्दृश इति । एतेषां जिनदन्तक्षतादीनां दर्शनेन । साम्येति । अयं

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ३३९ ॥

अत्र चाटुके राजविषया रतिर्या प्रतीयते तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः । यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ३४० ॥

अत्र, एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडनापेक्षयो-रागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्त
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवाऽऽर्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥३४१॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् । तस्य तु शृङ्गारः । तथाऽपि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथवा

---

भाव.—यथा कोऽपि मनोरथशतासप्रेयसीरतकाले जातपुलक-स्तथा त्वं परार्थकरणाय स्वाङ्गदान इति विरुद्धेन शृङ्गारेण शान्तः पोष्यत एव । यत्र तु नैवं तत्र दोष एव । यथा राममन्मथशरेण ताडि-तेति । अत्र प्रकृतस्य करुणस्य विरुद्धः शृङ्गारो न तदेव कुरु मा कार्षीरितिवदेकदा प्राधान्यरूपोऽपि त्वन्याङ्गतारूपोऽनुवादः । अन्या-ङ्गता च क्रीडनापेक्षया । यदैवेहीत्यादि ब्रूयात्तदैव गच्छेत्यादि ब्रूया-त्तदा विरोधः स्यात् । सामग्रीविशेषगतत्वेन भावानां वा विरोधाविरोधौ न स्वभावेन । भिन्नदेशयोः शीतोष्णयोरपि विरोधाभावात् । न च रसेषु विध्यनुवादौ न स्यातामिति वाच्यम् । तेषां वाक्यार्थत्वेनाभ्युप-गमात् । वाक्यार्थस्य च वाच्यस्य यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः । अनूद्यमानविभावाद्याक्षिप्तत्वाद्रसानामनूद्यमानतेति यावत् ।

प्रभावातिशयस्येति । रतौ विश्रान्तिरिति । तस्येति । करुणस्य । तत्पो-षकशृङ्गारस्यापि रतावेव विश्रान्तिरित्यर्थः । अथ वेति । पूर्वस्मिन्पक्षे करुणं पुष्यन्नपि शृङ्गारः प्रभावातिशयेऽङ्गभावगमनादविरोधी प्रोक्तः ।

प्राग्यथा कामुक आचरति स्म, तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते । उक्तं हि—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ।

प्राक्प्रतिपादितरूपस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवतीति रसशब्देनात्र तत्स्थायिभाव उपलक्ष्यते ।

इति श्रीकाव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ॥ ७ ॥

---

अधुना तु स शृङ्गारः करुणस्यैवाङ्गतां गतो न विरोधीति । तथा हि—करग्रहणासहनादिनेर्ष्याशृङ्गारवृत्तान्तः स्मर्यमाणः संप्रति विरुद्धतया शोकविभावतां प्रकृष्टां यातीति वाक्यार्थभूतकरुणो विरुद्धेनापि शृङ्गारेण पोष्यते । परतस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एव प्रभावातिशये उद्धतबलः क्रियत इत्यर्थः । गुण इति । शृङ्गारेण कृतसंस्कारो गुणः करुणो रसः । प्रधान प्रभावातिशयम् । तथेति । कृतसस्कार इत्यर्थः । प्रधानस्य भूयस उपकाराय स्यादिति भावः । रसस्येति । करुणस्य । रसान्तरेणेति । शृङ्गारेण । रसशब्देनेति । अङ्गिन्यङ्गत्वमाप्तावित्यत्राङ्गिनि रस इत्युक्तम् । तत्र शब्देन स्थायी रत्यादिर्वाच्यः । तथैव चाङ्गितयोदाहृतः । तथाऽङ्गत्वमाप्तौ रसौ न दुष्टावित्युक्तम् । ततोऽप्राधान्यादेव शृङ्गारकरुणयोः स्थायिनौ रतिशोकाख्यौ ज्ञेयौ । यत्रापि समप्राधान्येनानेकस्य रसस्य भावस्य न्यासो यथा—

'एकत्तोरुय इपिया अण्णत्तो समरतूणनिग्धोसो ।
णेहेण रणरसेणयभडस्स दोलाइअं हिअअं ॥'

इत्यादौ रत्युत्साहयोः, मात्सर्यमुत्सार्येत्यादौ रतिप्रेमयोः । अत्राप्युच्यते—न हि द्वयोः समप्रधानयोर्मिथोऽनुपकारकयोरेकवाक्यत्वं युज्यते । तस्मादेकत्र भटस्येत्युक्तिबलाद्वीर एव विश्रान्तिः । न हि समरतूर्यनादे भटाः समरालसाः स्युः । अन्यत्र तु चिरंतनरतिवासनाया हेयत्वेनोपादानात्समैकपरत्वमार्याः समर्यादमित्युक्तिबलात् । एवमन्यत्रापि ज्ञेयम् ।

इति काव्यप्रकाशसंकेते सप्तमोल्लाससंकेतः समाप्तः ॥

अथाष्टमोल्लासः ।

---

एवं दोषानुक्त्वा गुणालंकारविवेकमाह—

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवाऽऽत्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ ६६ ॥**

आत्मन एव हि यथा शौर्यादयो नाऽऽकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम् । क्वचित्तु शौर्यादिसमुचितस्याऽऽकारमहत्त्वादेर्दर्शनादाकार एवास्य शूर इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततकृतित्वमात्रेण शूर इति, क्वापि शूरेऽपि मूर्तिलाघवमात्रेणाशूर इति, अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोप

---

वाणी काव्यप्रकाशस्य गुणतत्त्वविवेकिनी ।
संकेतेनैव घटते यदि कस्यापि धीमतः ॥

ये रसस्येति । रसोऽङ्गी । वाच्यवाचकावङ्गम् । अचलेति । एतेन काव्ये गुणानामवश्यं भावः । तथा हि । अनलकाराऽपि वाक् सगुणा रोचते । यथा—यः कौमारहर इत्यादौ । निर्गुणा तु सालंकाराऽपि न रोचते । यथा—

स्तनकर्परपृष्ठस्था वर्जिनी छिन्दमण्डका[१] ।
वियोगाग्न्यूष्मणा पक्वाः कन्दुकिन्येव ते स्त्रिया ॥

न वर्णानामिति । उत्कर्षहेतव इति शेषः । रसस्यैव चेन्माधुर्यादि तत्कथं मधुरौजस्विप्रसन्ना वर्णा इति प्रतीतिरत आह—क्वचित्त्विति । शौर्यादीति । शौर्यादिसंयुक्तस्याऽऽकार एव यथा शौर्यमुपचारात्तद्व्यञ्जके काये व्यवह्रियते तथा वर्णानां मधुरादिरसव्यञ्जकानां माधुर्यादीति भावः । मधुरादीति । शृङ्गारादिर्मधुरो रसो वीरादिस्त्वमधुरः । सौकुमार्यादीति । माधुर्यादिविरहेऽपि गुम्फस्य मृदुत्वादिमात्रेण माधुर्यादि व्यवहरन्तीत्यर्थः ।

---

१ स. °छद्म° ।

करणानां तेषामसौकुमार्यादेरमाधुर्यादि, रसपर्यन्तविश्रान्तप्रतीतिबन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते न तु वर्णमात्राश्रयाः । यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ ६७ ॥

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽप्युपकारका हारादय इवालंकाराः । यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः । क्वचित्तु सन्तमपि नोपकुर्वन्ति । यथाक्रममुदाहरणानि—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३४२ ॥

इत्यादौ वाचकमुखेन

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ ३४३ ॥

इत्यादौ वाच्यमुखेनालकारौ रसमुपकुरुतः ।

---

तेषामिति । वर्णानाम् । वन्ध्या इति । वामनाद्याः । समुचितैरिति । योग्यत्वेनोक्तैः । न त्विति । रसाश्रया एव गुणा इत्यर्थः । एषामिति । वर्णानाम् । शरीरिणोऽपीति । आत्मनोऽपि । उक्तीति । शब्दार्थवैचित्र्य एव विश्रान्ताः । क्वचित्त्विति । जातुचिदित्यस्य व्याख्या ।

अपसारयेति । अत्रोद्दीपनविभावा वर्धिष्णुतया विद्वेष्यत्वेनोक्ताः । मन इति । मनोरागः कामजः । भवती सखीत्यर्थः । रसमिति । एकत्र कोमलानुप्रासोऽन्यत्र तु मालोपमेति शब्दार्थालंकारौ विप्रलम्भमुत्कर्षयतः । रसाभावे तूक्तिवैचित्र्यविश्रान्तिदृष्टान्तः षष्ठोल्लासोक्तत्वात्पुनर्नोक्तः ।

चिंत्ते विहट्टदि ण टुट्टदि सा गुणेसु
सज्जासु लोट्टदि विसट्टदि दिम्मुहेसु ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
झाणे ण टुट्टदि चिरं तरुणी तरट्टी ॥ ३४४ ॥

इत्यादौ वाचकमेव ।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नाऽऽस्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ३४५ ॥

इत्यादौ वाच्यमेव न तु रसम् । अत्र बिसलता जीवं रोद्धुं न क्षमेति प्रकृताननुगुणोपमा ।

एष एव च गुणालंकारप्रविभागः । एवं च समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालंकाराणां भेदः । ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैषां भेद इत्यभिधानमसत् ।

---

चित्त इति । विहट्टदि निखाता भवति । ण टुट्टदि न न्यूनतामेति विसट्टदि विकसति । तरट्टी प्रौढा । मित्र इति । स्थानद्वयेऽप्यत्र क्रमात्परुषानुप्रासोपमालंकारौ शब्दमर्थं चोपकुर्वतो न प्रकृतं सन्तमपि विप्रलम्भं रसम् । रोद्धुं नेति । अतिसूक्ष्मत्वाज्जीवस्य । अत्र विप्रलम्भे जीवनिर्गमस्यापि वर्णनीयत्वात्प्रकृतरसस्याननुगुणोपमा । एष इति । योऽस्माकं मतः । एते शौर्यादिहारादिकस्थानीया गुणालंकारा इति । अभिधानमिति । शब्दार्थालंकाराणां गुणवत्समवायेन स्थितिरिति भामहवृत्तौ भट्टोद्भटेन भणनमसत् । तथा हि—शृङ्गारादिरसे गुम्फे प्राच्यस्यालंकारस्योत्थापनेऽन्यस्य च स्थापने गुम्फस्य न दोषो नापि पोषः । न किंचिद्वा स्थाप्यते तथाऽपि न दोषः । तथाऽर्थालंकारस्योत्थापनेऽन्यस्य स्थापने स्वोक्तं यथा—

---

१—चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विकसति दिङ्मुखेषु ।
वचने वर्तते प्रवर्तते काव्यबन्धे
ध्याने न त्रुट्यति चिरं तरुणी प्रगल्भा ॥

यदप्युक्तम्—काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेत-वस्त्वलंकारा इति । तदपि न युक्तम् । यतः किं समस्तैर्गुणैः काव्यव्यवहार उत कतिपयैः। यदि समस्तैः, तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्याऽऽत्मा । अथ कतिपयैः, ततः

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥ ३४६ ॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ३४७ ॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ ।

इदानीं गुणानां भेदमाह—

माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।

---

सतामपि महाद्वेषः स्यादेकगुणजीविनाम् ।
वैमुख्यमेकमालायां यथा सुमनसां मिथः ॥

यथा च—न किं सुमनसां मिथः । शब्दालंकारस्योत्थापने एवमेव स्वोक्तं यथा—

दुष्टः सुतोऽपि निर्वास्यः स्वामिना नयगामिना ।
ग्रहपङ्क्तेर्ग्रहाधीशः शनिमन्ते न्यवीविशत् ॥

यथा च—विभुना नयशालिना । एवमलंकारान्तरेष्वपि ज्ञेयम् । गुणानां तु नैषा युक्तिः । तत्रैव गुम्फे माधुर्यमुत्सार्य ओजोन्यासे दोषप्रसङ्गात् । असमस्तेति । वैदर्भी तु सर्वगुणा । वामनमतमदः। अद्रावत्रेति। अत्र वाक्य उक्तिमात्रमेव न वैचित्र्यम् । तत ओजःप्रभृतिषु गुणेषु सत्स्वपि न काव्यव्यवहारः । स्वर्गेति । वरवर्णिनी स्त्री । अत्र स्फुटस्य कस्यापि गुणस्यानुपलम्भेऽपि काव्यत्वम् । स्वर्गप्राप्तिरूपहेतुसामग्र्ये सत्यपि दिव्यदेहरूपकार्यस्यानुक्तेर्विशेषोक्तिः । पूर्वदेहत्यागाभावेऽपि स्वर्गाप्तिफलस्योक्तेर्विभावनाऽपि । न्यक्करोतीति व्यतिरेकः। गुणनिरपेक्षाविति । अतिस्पष्टत्वादिति भावः ।

एषां क्रमेण लक्षणमाह—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥

शृङ्गारे ( अर्थात् ) संभोगे । द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।

अत्यन्तद्रुतिहेतुत्वात् ।

दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ६९ ॥

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

---

शृङ्गार इति । शृङ्गाराङ्गे हास्याद्भुतादावपि । यद्यपि हास्याद्भुतयोश्चित्तवृत्तिविस्तारहेतुतयौजोऽप्यस्ति तथाऽपि शृङ्गाराङ्गतया प्रकृष्टं माधुर्यमेव तत्र प्रतीयते । द्रुतीति । आर्द्रतेति यावत् । चित्तस्य द्रुतिहेतुराह्लादकत्वमतिव्यापकत्वाव्यापकत्वाभावाल्लक्षणं सत् । बहुधा श्रुतमपि यदनुद्वेजकं वचस्तन्मधुरमिति भरतोक्तं तु लक्षणं प्रियजनरूक्षाक्षराक्षेपवचनेऽपि तुल्यत्वादतिव्यापकम् । पृथक्पदत्वं तु माधुर्यं वामनोक्तमव्यापकम् । समासेऽपि माधुर्यस्य दृष्टेः । अवृत्तिर्मध्यवृत्तिर्वेत्यग्रे भणनात् । परमेतदपि भेदभङ्ग्योपात्तम् । दण्डिमते तु रसवत्काव्यं मधुरम् । श्रुतिवर्णानुप्रासाभ्यां वाग्रसः । अग्राम्यता तु वस्तुरसः । इत्थं रसो द्वेधा । अनुप्रासस्यालंकारत्वादग्राम्यार्थतायास्तु दोषाभावत्वान्न गुणत्वम् । वामनोक्तोऽर्थगुणस्तु माधुर्यमग्रे चर्चिष्यते । अर्थादिति । अग्रेतनश्लोके विप्रलम्भभणनरूपसामर्थ्यात् । श्रव्यत्वमिति । ओजःप्रसादयोरपि श्रव्यत्वात् ।

श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते ।

इति माधुर्यलक्षणं भामहोक्तमतिव्यापकत्वेन निरस्तम् ।

करुण इति । अत्र क्रमेणेत्यभणनात्संभोगात्करुणे ततो विप्रलम्भे ततोऽपि शान्ते सातिशयं माधुर्यं न । किंतु संभोगात्करुणादौ समतयाऽधिकमित्यर्थः । अन्ये तु क्रमेणेति व्याख्यान्ति ।

वीरेति । वीररसप्रधाना स्थितिर्यस्य । यद्वा स्थानं स्थितम् । तद्विद्यते यस्य तत्स्थिति । वीररसे स्थितिमत्तत्तथा । विस्तरेति । विस्तारो विकासः । तद्रूपदीप्तिजनकमोजसो लक्षणं सत् । न तु हीनमवगतं वा वस्तु शब्दार्थसंपदा यदुत्कृष्यते तदोज इति भरतोक्तम् । अहीनानवगी-

बीभत्सरौद्ररसयोस्तस्याऽऽधिक्यं क्रमेण च ।

वीराद्बीभत्से ततोऽपि रौद्रे सातिशयमोजः ।

शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः ॥ ७० ॥

व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

अन्यदिति व्याप्यमिह चित्तम् । सर्वत्रेति सर्वेषु रसेषु सर्वासु रचनासु च ।

---

तस्यापकर्षणेनौजसोऽपि गुणस्य प्राप्तेः । द्वयोदाहृतिः स्वा यथा–

लघुभ्यो यादृशी कीर्तिर्महद्भ्यः स्यान्न तादृशी ।
अरण्यं समृगस्थानं नगरं कीटकाश्रितम् ।

साहित्यदिगेषा यत्किमपि कथं चिद्वर्ण्यते । तत्कथमिवेयं गुणः । दण्ड्युक्तं समासदैर्घ्यमोज इत्यपि न । रीतित्रयेऽप्योजसः साधारणत्वात् । गौडीयानां निर्देशो न युक्तिमानिति वामनमङ्गलौ । तस्माद्गाढत्वमोज इत्यपि न शुद्धम् । बन्धगाढत्वं प्रत्युतौजोहानिहेतुः । यथा—

दैत्येन्द्रं द्राग् विदद्रे हृत्पकैर्वारुवदुच्चकैः ।
नार्मृगेन्द्रैः स्पृष्टमात्रं वज्रक्रूरैर्नखाग्रकैः ॥

वामनोक्तौजोर्थगुणो द्विविधोऽप्यग्रे चर्चिष्यते । वीरबीभत्सान्तःपाठाद्भयानकेऽप्योज इत्येके ।

शुष्केति । शुष्केन्धनस्याग्निः । स तथा । यद्वा यश्चित्तं व्याप्नोति स प्रसादः । किंभूतः शुष्केन्धनाग्निवदित्यादि । तुल्यार्थे वतिः । शुष्केन्धनस्याग्निः स्वच्छस्य वस्त्रादेर्जलं यथा शीघ्रं व्याप्तिकृत्तथा चित्तस्य प्रसाद इत्यर्थः । विभक्तवाच्यवाचकयोगादनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसाद इति तु भरतः । प्रसिद्धार्थपदतेति भावः । पदपूर्विका तदर्थावगतिरिति शब्दार्थयोर्ग्रहणम् । सेयं विशेषणाधारा विशेष्याणामुक्तिः । वामनोक्तं शैथिल्यं प्रसादः । ओजोव्यत्ययाद्दोषोऽयम् । तर्हि गाढत्वसंप्लुतं शैथिल्यं प्रसाद इति चेन्न । मिथो विरोधे गाढत्वशैथिल्ययोरेकत्र संप्लवासिद्धेः ।

करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथाऽनुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥

इत्युक्त्या संप्लवः सिध्यतीति चेत्तर्हि ओजस्यन्तर्भाव इति वक्ष्यते । वस्तुवृत्त्या तु सभ्यानां नाट्ये करुणवासितानां प्राग् दुःखं नेपथ्यादि-

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥**

गुणवृत्त्या—उपचारेण, तेषां गुणानामाकारे शौर्यस्येव । कुतस्त्रय एव न दशेत्याह—

**केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।**

**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७२ ॥**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चाऽऽरोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणोदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः ।

---

दर्शनेन च पश्चात्सुखमिति क्रमात्सुखदुःखानुभूतिः । ओजःप्रसादयोः पुनः सममनुभवप्रतिज्ञेति दृष्टान्तासिद्धिः । यद्वा सर्वरसप्रतीतिरानन्दरूपैवेति दृष्टान्तासंगतिः । अर्थगुणस्तु प्रसादोऽग्रे चर्चिष्यते ।

गुणेति । मुख्यया वृत्त्या गुणा रसे शौर्यमिवाऽऽत्मनीत्यर्थः ।

एष्विति । रसध्वनिगुणालंकारेषु । दोषेति । पूर्वोक्तदोषत्यागात्केचिल्लब्धाः । परोक्तशेषगुणानां क्रमेणान्तर्भावस्वीकारदोषत्वान्याह—बहूनामित्यादि । स्वभावस्पष्टं विचारगहनं वचः श्लिष्टमिति भरतः । विचारगहनं गभीरार्थमभिधानाभिधयेव्यवहारवैदग्धीयं न तु गुम्फधर्मः । गुम्फधर्मा हि गुणाः । तस्मान्मसृणत्वं श्लेषः । यस्मिन् सन्ति बहून्यपि पदान्येकपदवद्भान्तीति वामनः । अस्त्युत्तरस्यां दिशि देवतात्मेति । मसृणमदन्तुरम् । दन्तुरत्वे हि रीतिवैशसोपनिपातः । तं चान्यतरनिर्वाहे निषेवन्ति । तस्मादशिथिलं श्लिष्टमिति दण्डी । यथा—

अपकारिण्यपि प्रायः स्वच्छाः स्युरुपकारिणः ।
मारकेभ्योऽपि कल्याणं रसराजः प्रयच्छति ॥

ओज एवेदम् । गौडगुम्फदर्शिनो वा मतमिदम् । ते हि शिथिलप्रियाः । एवं यथा—

नीचाः स्वशीलं मुञ्चन्ति नोपकारापकारयोः ।
आरढन्त्येव करभा भारारोहावरोहयोः ॥

एकपदवद्भातीत्युक्तौ वस्तुवृत्त्या तु पृथक्पदत्वमेव सत्यमिति माधुर्यमेवेदम् । अर्थस्य गुणान्तरसमाधानात्समाधिरिति भरतः । समाधानमारोपः । यथा—

कीर्तिः पल्लवितेवाऽऽसीद्गुणैः कुन्देन्दुसुन्दरी । इति ।

पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् । प्रसादेनार्थव्यक्तिर्गृहीता । मार्गाभेदरूपा समता क्वचिद्दोषः । तथा हि—मातङ्गाः किमु वल्गितैरित्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः ।

---

सोऽयमतिशयोक्तिविशेषः । तस्मादारोहावरोहक्रमः समाधिरिति वामनः । तदिदं गुरुलघुवर्णसंचययोर्मिथोऽन्तरेणेति दण्डिभोजौ । तस्मादन्यधर्मस्यान्यत्र समाधानात्समाधिः । यथा मुखं विकसितस्मितमित्यादि । लक्षणेयं न तु गुण इति स्वमते त्वोजः । बहुभिः सूक्ष्मैश्च विशेषैः समेतमुदारमिति भरतः । यथा प्रथममरुणच्छाय इत्यादि । उल्लेखवानसावर्थो न गुणः । तस्माद्विकटमुदारता यस्मिन् सति नृत्यन्तीव पदानीति प्रतीतिरिति वामनः । स्वं यथा—

यद्यशः कैरवारामे वैरिणामपकीर्तयः ।
भ्रमद्भृङ्गाङ्गनाभङ्गीमङ्गीकुर्वन्ति हेलया ॥

मनागमसृणोऽनुप्रासप्रभवोऽयं न गुणः । स्वमते त्वोजः । यस्मिन्न तथा स्थितोऽपि तथा स्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति भरतः । स्वोक्तं यथा—

तदम्भः किं वाच्यं तनयिषु जगज्जीवनकरं
श्रियः क्रीडागारं जयति जलजं यस्य तनयः ।
कथं वा निर्वाच्यं सरसिजमिदं यस्य भुवन-
त्रयीस्रष्टा स्रष्टा समजनि सुतः सर्वमहितः ॥

प्रसादान्न भेदोऽस्येति वामनीयाः । तस्माद्यत्र प्रागिवार्थस्यावगतिः पश्चादिव वाचः सार्थव्यक्तिः । यथा—वागर्थाविव संपृक्ताविति । सोऽयमुक्त्यन्तरोक्तः प्रसाद एवेति दण्डी । तस्मादनेयार्थत्वमर्थस्यार्थव्यक्तिः । दोषाभावोऽयं न गुणः । परस्परविभूषणो गुणालंकारग्रामः सममिति भरतः । भिन्नाधारा गुणालंकाराः कथमन्योन्यं भूषयेयुरिति दण्डी । श्लेषयमकचित्राणि भूयेनुप्रासाश्च प्रस्तुतगुणान् विगृह्णन्ति । तस्माद्बन्धेष्वविषमं समम् । बन्धाश्च प्रौढमृदुमध्यवर्णारब्धत्वात्तादृशास्त्रयः । अत्र दृष्टान्ताः सुलभत्वान्नोच्यन्ते । एवं पश्चादग्रे च ज्ञेयम् । तदिदं वृत्तिष्वन्तर्भवतीति । तस्मादारब्धरीतिनिर्वाहः सममिति वामनीया इत्यपि दूष्यते—मार्गाभेदेति । क्वचिदिति । कुत्रचिदित्यस्य व्याख्येयम् । तस्मात्समता न

कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्यम्, औज्ज्वल्यरूपा कान्तिश्च स्वीकृता । एवं न दश शब्दगुणाः ।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

---

गुणः । अपारुष्येति । सुखशब्दार्थं सुकुमारमिति भरतः । सुखशब्दमेवेति तु वामनः । तदिदं माधुर्यं कष्टत्वदोषाभावो वा । कान्तिरिति । श्रोत्रमनःप्रीतिकृत्कान्तमिति भरतः । माधुर्यमेवेदम् । तस्मादौज्ज्वल्यं कान्तिरिति वामनः । यस्यां सत्यां न वा ग्गुम्फच्छायेयमिति प्रतीतिः । स्वं यथा—

अस्तावनौ विगलितोष्मणि संश्रितेऽर्के
दिक्कामिनीषु रुदतीषु विहंगनादैः ।
सौरभ्यलीनमधुपालिमिषेण राज्ञा
मृत्पिण्डमुद्रितमुखा इव पद्मकोशाः ॥

औजस्यौज्ज्वल्यतस्तर्हि कान्तिस्तस्माल्लोकसीमानतिक्रमः कान्तिरिति दण्डी । सा चोपकारात्प्रशंसनाच्च । क्रमेणोदाहृतम् ।

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र व कार्यमनास्था बाह्यवस्तुषु ॥
तदास्यमनुभृङ्गाली गन्धलोभाद्भ्रमन्त्यभात् ।
ध्रुवं भुवं गतस्येन्दोर्भ्रान्त्या सेनेव तामसी ॥

स्वमिदम् । एवं चेत्तर्हि लोकसीमातिक्रमोऽकान्तिः स्यात् । पदार्थ इति । पदार्थे वाच्ये वाक्योक्तिर्यथा—चन्द्रपदे वाच्येऽत्रिनयनसमुत्थं ज्योतिरित्युच्यते । वाक्यार्थे पदोक्तिर्यथा—दिव्यैषा न स्यात्किं तु मानुषीति वाच्ये निमिषतीत्युक्तिः । वाक्यार्थस्य व्यासो यथा—

सुखं क्वचित्क्वचिद्दुःखं सुखदुःखं क्वचित्पुन. ।
क्वचिन्न दुःखं न सुखमिति चित्रा भवस्थितिः ॥

स्वमिदम् । तस्यैव समासो यथा—ते हिमालयमामन्त्र्येति । साभिप्रायत्वमिति । वामनोक्तोऽयं द्वितीयो भेदः । नन्वर्थस्य जडत्वान्नाभिप्रायः । वक्तृश्रोत्रोः स इति चेत्—तद्गतोऽर्थस्य गुण इति कथम् । अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुण इति ब्रूषे तद्वस्त्वन्तरमाक्षेप्यं वक्त्रभिप्रायरूपम् ।

इति या प्रौढिः, ओज इत्युक्तं तद्वैचित्र्यमात्रं न गुणः। तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपोदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलकारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपार्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीक्रते। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः। क. खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम्, इत्यर्थदृष्टिरूपः समाधिरपि न गुणः।

---

एवमाक्षेपकत्वमपि कविव्यापारादेव तथा विनिवेशप्रकारयोगे भवेत्। अत एव प्रौढिर्वस्तुतो वक्तृगतार्थेंपूपचर्यते। अर्थेति। प्रयोजकपदोक्तिर्वैमल्यम्। उक्तीति। नवीनकृतत्वे ह्युक्तयो विचित्राः स्युः। अपारुष्येति। अत्रार्थगतमपारुष्यं यथा—यशःशेष इति। विशेषोऽसौ पर्यायोक्तस्य। उदारतेति। यथा—त्वमेवंसौन्दर्या स च रुचिरेत्यादि। दीप्तेति। वामनमतमिदम्। यथा—प्रेयान् सोयमपाकृत इत्यादि। रौद्राद्या दीप्ता रसाः शृङ्गाराद्यास्तु न। ततस्तद्वैपरीत्यादकान्तिरपि स्यादित्युत्तरम्। क्रमेति। नेत्रपिधानादेर्यः क्रमो यच्च कौटिल्यं तयोरनुल्बणत्वेनाग्राम्यत्वेनोपपत्त्या युक्ततया यद्योजनं योगस्तद्रूपा घटना या तदात्मा श्लेषः। यथा—

दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्याऽऽदरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकस्वेदोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥

अत्रैका प्रियाऽक्षिपिधानकेलिनाऽन्या तु चुम्बनेन रञ्जितेति संविधानकभवं वैचित्र्यमात्रमिदं न तु गुणः। कः खल्विति। एकमर्थं प्रक्रम्य तस्मादन्येनार्थेन कः सुधीर्निर्वाहं कुर्यादित्यर्थः। अर्थदृष्टीति। स्वं यथा—

---

१ ख. तत्त्यागाद्°।

तेन नार्थगुणा वाच्याः ।

वाच्या वक्तव्याः ।

प्रोक्ताः शब्दगुणाश्च ये ।

वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ७३ ॥

के कस्येत्याह—

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।

अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ७४ ॥

---

सर्वथा नष्टनैष्कर्म्यं विपदे वृत्तशालिनाम् ।

वारिहारिघटीपार्श्वे ताड्यते पश्य झल्लरी ॥

तस्मात्समाधिः काव्यार्थ एव न गुणः । व्याजावलम्बनं समाधिरिति तु भोजः । यथा—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे

तन्वी स्थिता कतिचिदेव पदानि गत्वा ॥

इत्यादि । एतदपि वैचित्र्यमात्रम् । अविच्छेदेन विच्छेदेनाऽऽरोहावरोहाभ्यां सौष्ठवतया स्थानस्यानुच्चनीचतया च पाठक्रमेणौजःप्रसादमाधुर्यौदार्यसाम्यानीति गुणाः पञ्चेत्येके । तदसत् । न हि विषयविभागेन पाठक्रमोऽस्ति । किमपि कदाचित्कथंचित्पठ्यत इति पाठनियमः । कल्प्यत इति चेत्सोऽलीकत्वान्न गुणहेतुः । स्रग्धरादावोज इन्द्रवज्रादौ प्रसादो मन्दाक्रान्तादौ माधुर्यं शार्दूलादौ साम्यं विषमवृत्ते चौदार्यमिति च्छन्दोविशेषसाध्या गुणा इत्येके । तदप्यसत् । स्रग्धरादावपि प्रतिगुणं यथोक्तवर्णरचनासमासाद्यभावे गुणान्तरप्राप्तेः । यथा—जङ्घाकाण्डोरुनाल इति । एवमिन्द्रवज्रादिष्वपि ज्ञेयम् । तेषामिति । ये माधुर्याद्या गुणाः शब्दगतत्वेनोक्तास्तेषां वर्णाद्या व्यञ्जकतां गता इत्यर्थः । स्पर्शा वर्गवर्णा ह्रस्वान्तारिता इति लघुत्वस्य स्वरधर्मत्वात् । रणयोर्व्यञ्जनयोरनुपपत्तौ ह्रस्वान्तारितोपनिबन्धे लघुत्वं कल्प्यते ।

तथेति । माधुर्यानुकूलाः स्पर्शा इत्यादि व्यञ्जकतामिता इति संबन्धः ।

---

१ ख. पाठे क्र ।

टठडढवर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः, समासाभावो मध्यमः समासो वेति समासः, तथा माधुर्यवती पदान्तरयोगेण रचना माधुर्यस्य व्यञ्जिका । उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥ ३४८ ॥

**योग आद्यतृतीयाभ्यामन्त्ययो, रेण तुल्ययोः ।**
**टादिः, शषौ, वृत्तिदैर्घ्यं, गुम्फ उद्धत ओजसि ॥ ७५ ॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोस्तद्द्वितीयचतुर्थयो रेफेणाध उपरि उभयत्र वा यस्य कस्यचित्, तुल्ययोस्तेन तस्यैव संबन्धष्टवर्गोऽर्थात् णकारवर्जः शकारषकारौ दीर्घसमासो विकटा संघटना ओजसः । उदाहरणं-मूर्ध्नामुद्वृत्तकृत्तेत्यादि ।

**श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।**
**साधारणः समग्राणां स प्रसादो गुणो मतः ॥ ७६ ॥**

समग्राणां रसानां संघटनानां च । उदाहरणम्-

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ ३४९ ॥

यद्यपि गुणपरतन्त्राः संघटनादयस्तथाऽपि

---

अनङ्गेति । एता भङ्ग्यः । स्वान्तानि योषाङ्गमेव ध्यायन्तीत्यर्थः । अत्रानङ्गेत्यादिरूपतया वर्णा मूर्ध्नि स्ववर्गान्त्यगाः समासरचने च शृङ्गारस्य व्यञ्जकाः ।

तद्द्वितीयेति । च्छड्ढेत्यादिरूपतया । अध इति । क्रर्केत्यादिरूपतया । तुल्ययोरिति । कच्चिदवृत्तेत्यादिरूपतया ।

परीति । दाहाधिक्येनाधोमुखी स्त्री शयने लुण्ठिता । अतः स्तनजघनस्थानयोर्म्लानिः ।

वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भ प्लुतिकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ॥३५०॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम् । अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः । वक्ता चात्र भीमसेनः ।

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः । यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कंधरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥३५१॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते । तथा हि—आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः ।

---

मन्थेति । मन्थेनाऽऽयस्तं यदर्णवाम्भस्तत्प्रतिकुहरं वलन् यो मन्दर इति योगः । कृष्णा द्रौपदी । केन ताडितोऽयं दुन्दुभिरीदृग्भूत इति वृत्तार्थः । अत्रेति । यदि हि क्रोधादिव्यञ्जकं वाच्यं स्यादिदं च काव्यमनभिनेयार्थं स्यात्तदाऽनुमन्ये नोद्धतरचनादि । अभिनेयार्थं हि नाटकादि । तत्र रौद्रादावपि न दीर्घवृत्त्यादि कार्यम् ।

न मसृणेति । विकटगद्यबन्धाख्यायिकाबन्धस्य च वैकट्यं न मृदुवर्णैः स्यात् । कथायामिति । मृदुवर्णा कथा । नाटकेति । न केवलं करुणविप्रलम्भयोः । रौद्रेऽपि न दीर्घवृत्त्यादिकं कार्यम् । यतो रसप्रतीतौ विरोधिनो व्यवधायकाश्च त्याज्या एव । एवं दीर्घवृत्ते वृत्तीनां नानाविधसंभावनया रसप्रतीतिं काचिद्व्यवदधातीति तस्यां न भरः कार्यः । विशेषेण काव्येऽभिनेयार्थे । तत्रापि विप्रलम्भकरुणयोः । तयोर्हि सुकुमारत्वादस्वच्छत्वे शब्दार्थयोः प्रतीतिर्मन्दा स्यात् ।

एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

इति काव्यप्रकाशे गुणालंकारभेदनियतगुणानिर्णयो नामाष्टमोल्लासः ॥ ८ ॥

---

रसान्तरे तु रौद्रादौ मध्या वृत्तिरपि । धीरोद्धतव्यापारौचित्यात् । दीर्घवृत्तिरपि वा तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा स्यादिति साऽपि स्वीकार्या । प्रसादस्तु सर्वरसगोक्तत्वात्सर्वत्र स्वीकार्यो ज्ञेयः । तत्त्यागे ह्रवृत्तिरपि न करुणविप्रलम्भयोर्व्यञ्जिका । तदङ्गीकारे मध्यवृत्तिरपि च व्यञ्जिका । अत एव कृतमनुमतं दृष्टं वा यैरित्यादौ प्रसाद एव न माधुर्यम् । नाप्योजः । दीर्घवृत्त्याद्यभावात् । न चाचारुत्वम् । इष्टरसप्रतीतेः । एवमिति । एकद्वित्रिचतुर्भिश्छन्दोभिरर्थसमाप्तौ मुक्तकसंदानितकविशेषककलापकानि सर्वभाषाभिः स्युः । पञ्चादिचतुर्दशान्तैस्तु कुलकम् । चतुर्दशार्धमप्येके । मुक्तकैरेकविषया पद्धतिः पर्या । स्वपरकृतानां सूक्तीनां मीलनं कोशः । एकानेकप्रघट्टकविषयत्वेनैककविकृतानां तु मीलनं संघातसंहितेति । तत्रैतेषां मध्ये मुक्तकेषु रसबन्धाश्रयेण न दीर्घा वृत्तिः कार्या । अन्यथा तु स्वेच्छा-संदानितकादौ विकटबन्धत्वेन वृत्त्यभावस्त्याज्यः । प्रबन्धाश्रिते तु मुक्तकादौ यथोक्तप्रबन्धविषया[1] आराध्याः । पर्याबन्धेषु तु दीर्घा वृत्तिस्त्याज्या । कदाचिद्रौद्रादिविषये दीर्घायामपि वृत्तौ परुषाग्राम्ये वृत्ती त्याज्ये । एकं पुमर्थमुद्दिश्य प्रकारभङ्ग्या भूरिवृत्तान्तवर्णनारूपायां त्वितिवृत्तस्य न्यासे भरः कार्यो न रसानाम् । मध्यादुपान्ततो वा । ग्रथान्तरप्रसिद्धमितिवृत्त यस्यां वर्ण्यते सा खण्डकथा । पूर्णकथा तु प्रसिद्धा । तयोः कुलकादिभूयस्त्वे दीर्घाऽपि वृत्तिर्न विरुद्धा । सर्गबन्धे तु रसा एवाऽऽराध्या इति ।

इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेतेऽष्टम उल्लासः समाप्तः ॥

---

१ ख. °विशेषा आ° ।

अथ नवम उल्लासः ।

—:०:—

गुणविवेचने कृतेऽलंकाराः प्राप्तावसरा इति संप्रति शब्दालंकारानाह—

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि, कश्चेतनो
वामानां प्रियमादधाति, हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरंदरमतच्छेदं विधातुं कुतः ॥ ३५२ ॥

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३५३ ॥

काक्वा यथा—

---

लोकोत्तरोऽयं संकेतः कोऽपि कोविदसत्तमाः ।
शब्दस्याऽऽडम्बरो यत्र भूषणत्वेन निश्चितः ॥

यदुक्तमिति । अन्येनान्यथोक्तमन्येनान्यथा योज्यत इत्यर्थः । श्लेषेण काक्वेति हेतौ तृतीया । तथेति । श्लेषकाकुभ्याम् । तत्रेति । पदानां भङ्गाभङ्गाभ्यां श्लेषवक्रोक्तिः स्यादिति भावः ।

नारीणामिति । चेज्जानासि तन्नारीणामनुकूलमाचरसीति योगः । नारीणां स्त्रीणाम् । भङ्गे तु न, अरीणाम् । वामाः स्त्रियः प्रतिकूलाश्च । हितकृदिति । हितं करोति कृन्तति च । बलं शक्तिर्बलो दैत्यश्च । तदभावेन प्रसिद्धात्मा दुर्बलो बिडौजाश्च । मतमभीष्टम् । अत्राभङ्गभङ्गाभ्यामुक्तिप्रत्युक्ती ।

दारुणेति । प्रथमान्ततया रौद्रा । तृतीयान्ततया काष्ठेन । केन काष्ठेनेति योगः । सत्त्वरजस्तमांसि गुणाः । काक्वेति । काकुशब्दव्युत्पत्तिस्तृतीयोल्लासे कृता । वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वाभ्यां काकुर्द्विधा— साकाङ्क्षा निराकाङ्क्षा च । यस्माद्वाक्याद्यादृशः संकेतेनार्थः प्रतीयते न

तादृगेव किं तु न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद्वाक्यं साकाङ्क्षम् । अन्यथा तु निराकाङ्क्षम् । वक्तुराकाङ्क्षा वाक्ये उपचर्यते । सा च प्रस्तावव शान्निर्णीयते । विशिष्टविषयता चास्याः प्रस्तावादेव वाच्या । एतद्वाक्यमागमनानिषेधायोक्तम् । कयाचित्तत्सख्या तु काका वाक्यस्य विधेयत्वं प्रापितम् । विषयोऽप्यर्थान्तरं तदर्थगत एव विशेषस्तदर्थाभावो वेति त्रिधा । यथा देशः सोऽयमरातीति । अत्र साकाङ्क्षा काकुस्तत्प्रभावात्ततोऽप्यधिकं कुरुत इत्यर्थान्तरे गतिः ।

स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गत. स्फुटमवन्ध्यतामधिपयोधि सांध्यो विधिः
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः ॥

अत्र तदात्मज इहाङ्गद इति साकाङ्क्षया काका स्वगता वालिपुत्रोचिता विशेषा अर्प्यन्ते । निर्वाणवैरिदहना इति । अत्र भवन्तीति साकाङ्क्षया काकुर्भवनाभावमाह । भवन्तीति वचनोच्चारणं त्वर्थे संभावनां विदधदभावस्य निषेधात्मनो विषयं भवनलक्षणमर्पयति । न भवन्त्येवेत्यर्थः । अभिप्रायवान् पाठधर्मः काकुः । स नालङ्कारी स्यादिति तु स्थवीयः । शब्दस्पृष्टत्वेनार्थान्तरप्रतीतिहेतुत्वाद् । गुणीभूतव्यङ्ग्यभेद एवायम् । यदाह ध्वनिकारः—

अर्थान्तरगतिः काका या चैषा परिदृश्यते ।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥ इति ।

तन्मते काकुवक्रोक्तिर्नालंकारः । यथा च पाठधर्मत्वं काकोस्तथा भरताज्ज्ञेयम् । वस्तुस्वाभाव्यात्काकुः श्रुतमर्थमनादृत्यार्थान्तर वक्तीत्येके । अन्ये त्वेवमाहुः—इह येषां प्रथमेन संवित्स्पन्देन प्राणोल्लासनया वर्णादिविशेषहीना वाग्जन्यते सा नादरूपा सती हर्षादिचित्तवृत्तिं विधिनिषेधाद्याशयं वा तत्कार्यलिङ्गतया वा तादात्म्येन वा गमयति । दृश्यते हि मृगश्वादेरपि नादश्रुतौ भीरोपशोकादिप्रतिपत्तिः । नादाच्चित्तवृत्त्याद्यनुमानमित्यर्थः । ये चैते वर्णविशेषास्ते तन्नानारूपसामान्यात्मकवाक्तन्तुग्रन्थिमया इव प्राच्यप्रयत्नातिरिक्तनिमित्तान्तरापेक्षाः ।

१ ख. °ब्दस्पृष्टत्वे° ।

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ॥३५४॥

वर्णसाम्यमनुप्रासः ।

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

छेकवृत्तिगतो द्विधा ।

छेका विदग्धाः, वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः, गत इति च्छेकानुप्रासो वृत्त्यनुप्रासश्च ।

किं तयोः स्वरूपमित्याह—

सोऽनेकस्य सकृत्पूर्वः ।

अनेकस्यार्थाद्व्यञ्जनस्य, सकृदेकवारं सादृश्यं छेकानुप्रासः । उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ३५५ ॥

---

तत एवान्यत्राप्यभिप्रेतेऽन्यथाऽपि प्रयोक्तुं शक्याः । अत एव दृष्टव्यभिचाराः । नादस्तु झटित्युद्भिन्नमुखरागपुलकस्थानीयो नान्यथा कर्तुं पार्यत इत्यनन्यथासिद्धोऽन्यथासिद्धं शब्दार्थं बाधत एव । यथोक्तं भीरु न मे भयमिति । अन्यप्रकारतां वा वाक्यार्थस्य विशेषणार्पणेन विधत्ते । वामनस्त्वसादृश्याल्लक्षणा वक्रोक्तिरिति वक्रोक्तिलक्षणमाह ।

वर्णेति । वर्णस्यैकस्यानेकस्य घटपटेत्यादिशब्दरूपरहितस्य साम्यं सादृश्यम् । स्वरेति । स्वरव्यञ्जनसादृश्ये यमकं स्यादिति वर्णसाम्यमुक्तम् । एकस्यैव पुनः पुनर्निबन्धसाम्यमावृत्तिरित्यर्थः । प्रकृष्ट इति । अदूरान्तरित इति शेषः । पूर्व इति । छेकानुप्रासः । अनेकस्येति । अयं भावः—यत्रानेकं व्यञ्जनं द्वित्र्यादिव्यञ्जनसमुदायः सकृदेकवारमावर्त्यते तत्र च्छेकानुप्रासः । ततोऽरुण इति । न्द न्दी ण्ड ण्डु इत्याद्यनेकव्यञ्जनं सकृदावृत्तम् । कामपरिक्षामकामिनीत्यत्र तु कामेत्यनेकव्यञ्जनस्य द्विरावृत्तत्वाद्वृत्त्यनुप्रासः ।

---

१ ख. 'रुर्न मे'.

एकस्याप्यसकृत्परः ॥ ७९ ॥

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः। तत्र—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा

उभयत्रापि प्रागुदाहृतम् ।

कोमला परैः ॥ ८० ॥

परैः शेषैः। तामेव केचिद्ग्राम्येति वदन्ति। उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३५६ ॥

केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी–गौडी–पाञ्चाल्याख्या रीतयो मताः ।

शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥

शब्दगतोऽनुप्रासः, शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात्। लाटजनवल्लभत्वाच्च लाटानुप्रासः। एष पदानुप्रास इत्यन्ये ।

---

एकस्येति। असमुदायरूपस्य। केवलस्येति यावत्। तस्यासकृद्बहुकृत्वः सादृश्ये चारुत्वम्। अनेकस्य द्विर्बहुकृत्वो वा।

तत्रेति। वृत्त्यनुप्रासे। उभयत्रापीति। उपनागरिकापरुषयोः। प्रागिति। अनङ्गरङ्गेत्यादि मूर्ध्नामुद्वृत्तेत्यादि। अत्रानङ्गरङ्गेत्यत्रैकस्य गकारस्य बहुवारमावृत्तिः।

ग्राम्येति। ग्राम्येति नाम्नि तात्पर्यं न तु दुष्टत्वम्। न हि सर्वं ग्राम्यं दुष्टमेव। ग्राम्यमपि किमपि रम्यं भवतीति नाभ्यन्तरतत्परतां खल्वपसारयति। अत्र वर्णसमुदायस्य बहुवारमावृत्तिः।

रीतय इति। एतेन रीतयो वृत्त्यात्मिका इत्यर्थः।

शाब्दस्त्विति। न तु वार्णः। तात्पर्यमात्रेति यमकव्यवच्छेदार्थम्। तात्पर्यमन्यतरपरत्वम्। तेनैव भेदोऽत्र न शब्दार्थस्वरूपेण। अन्वयमात्रेति। अनन्वये शब्दैक्यमौचित्यादानुषङ्गिकं न तु नियतम्। ततो हंस इव हंसः हंसो मराल इति वा कृते न दोषः। अत्र तु शब्दार्थयोरैक्यमेव।

---

१ ख. 'रता ख°।

पदानां सः ।

स इति लाटानुप्रासः । उदाहरणम्—

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ ३५७ ॥

पदस्यापि ।

अपिशब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ३५८ ॥

वृत्तावन्यत्र तत्र वा ।

नाम्नः स वृत्त्यवृत्त्योश्च

एकस्मिन्समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य, न तु पदस्य सारूप्यम् । उदाहरणम्—

---

एष च पञ्चधेति क्रमेणाऽऽह–पदानामिति । यस्येति । अत्र पूर्वार्धे दवदहनो विधेयः । तुहिनदीधितिरनुवाद्यः । एतदेवोत्तरार्धे विपरीततया ज्ञेयम् । यथा वा—

न्यायशालिनि भूपाले संग्रही नावसीदति ।
विपरीते पुनस्तत्र संग्रही नाऽवसीदति ॥

पूज्यानामिदम् । स्थानद्वयेऽप्यत्र बहूना पदानां सकृदावृत्तिरुक्ता । असकृत्त्वं स्वं यथा—

सन्ति सन्तः किं न सन्ति सन्ति चेत्तन्निवेद्यताम् ।
किं कुप्यन्ति न कुप्यन्ति ते कुप्यन्ति किमीदृशाः ॥

पदस्य सकृदावृत्तिर्यथा—वदनमिति । अत्र वदनं सुधाकरत्वेनोक्त्वा पुनर्निषेधो न युक्त इति चेन्न । वर्णनीयस्यात्यन्तोत्कर्षाय स्वोक्तस्यापि तिरस्कारे न दूषण प्रत्युत भूषणम् । यद्वा तस्याः सत्यं वक्त्रं सुधाकरो न त्विन्दुः सुधाकर इति काका व्याख्येयम् । असकृद्यथा—

दुःखाभावः सुखं नेह सुखं यत्तन्न वा सुखम् ।
सुखं तत्परमार्थेन यद्विहाय सुख सुखम् ॥

स्वमिदम् ।

वृत्ताविति । वृत्तावित्येकस्मिन् समासेऽन्यत्र तत्र वेति भिन्नसमासे

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः ।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३५९ ॥

तदेवं पञ्चधा मतः ॥ ८२ ॥

अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।
यमकं

समरसमरसोऽयमित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुमित्यर्थे सतीत्युक्तम् । सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

---

वृत्त्यवृत्त्योरिति समासासमासयोरिति ज्ञेयम् । सितेति । अनेकस्य नाम्नः सकृदावृत्तिरेषा । असकृदावृत्तिः स्वयमूह्या । एकस्य नाम्नः सकृदसकृदावृत्तिर्यथा स्वम्—

विश्वसृष्टिकरो विश्वपालको विश्वघातकः ।
विश्वज्ञो विश्वविख्यातो देवदेवः पुनातु वः ॥

नेत्रेऽञ्जनेत्रे तवेत्यादौ तु विभक्त्यादौ वाच्यापौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वमेव । यमकस्येवास्यापि प्रायेण भेदाः स्युः। वर्णानामिति । स्वरयुतानामिति शेषः । तथा सूत्रे लिङ्गवचने अतन्त्रे इति न्यायाद्वर्णस्य वर्णयोश्च पुनः श्रुतौ यमकत्वम् । परं वर्णस्य[1] पदान्तरगतत्वेन पुनः श्रुतौ वैचित्र्याभावात्तस्मिन्नेव[2] पदे पुनः श्रुतिः कार्या । पुनः श्रुतिरावृत्तिः । वर्णस्य पादादिमध्यान्तेष्वावृत्तिर्यथा—‘ नानाशं शंकरो मम ’ । वर्णयोर्वर्णानां च तस्मिन्नेव[3] पादे पदान्तरे चाऽऽवृत्तिः स्वयमूह्या । यमौ द्वौ समजातौ । तत्प्रतिकृतिर्यमकम् । तेनैकस्याक्षरस्य द्वयोर्बहूनां वाऽन्यत्सदृशं निरन्तरं सान्तरं वा शोभाजनकमलंकार । अनर्थकत्व इति । मधुपराजिपराजितमानिनीत्यादौ द्वयोरनर्थकत्वे वेति शेषः । न च तदर्थ एव शब्दः पुनः प्रयुज्यते पौनरुक्त्यप्रसङ्गादिति सामर्थ्यलब्धेऽप्यर्थभिन्नत्वे यत्र स एवार्थः प्रसङ्गेन पुनर्वक्तुमिष्टः स्याद्बन्धबन्धुरत्वादिना च प्रयुक्त एव शब्दः पुनः प्रयुज्यते ।

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।

इत्यादौ । अत्र पौनरुक्त्यदोपाभावाद्यमकत्वं प्रसज्येतेत्यर्थभिन्नाना

---

१ ख. ‘स्य पदा°’ । २ ख. ‘°व पादे°’ । ३ क. ‘°व पदा°’ ।

पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥

प्रथमो द्वितीयादौ ( ३ ) द्वितीयस्तृतीयादौ ( २ ) तृतीयश्चतुर्थे ( १ ) प्रथमस्त्रिष्वपि ( १ ) इति सप्त । प्रथमो द्वितीये तृतीयश्चतुर्थे, प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वे । तदेवं पादजं नवभेदम् । अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे । द्विधा विभक्ते पादे प्रथमपादादिभाग पूर्ववद्द्वितीयादिपादादिभागेष्वन्तभागोऽन्तभा-

---

मित्युक्तम् । तथा दन्त्योष्ठ्यौष्ठ्यवकारबकारादिवर्णभेदे लघुप्रयत्नतरकृते च भेदे संयुक्तयोः सजातीययोर्वास्तवे विशेषे यमकबन्धो न विरुध्यते । लोकप्रतीत्या तत्रापि श्रुतितुल्यत्वात् । एवं यथा—

यथा नश्यन्ति विघ्नानि यथा नश्श्यन्ति न द्विषः ।
तथा कुरु गुणालम्बकृपालं वः सदा मन. ॥

अत्र नश्यन्तीत्येकत्रैकः शकारोऽन्यत्र द्वौ । तत्रैकत्र चौष्ठ्योऽन्यतो दन्त्योष्ठ्यः । तथा गुणालम्बेत्यत्र लकारो लघुप्रयत्नतरः । कृपां लातीति कृपालमित्यत्र त्वलघुप्रयत्नतरः । तथा नकारणकाराभ्यामस्वरमकार-नकाराभ्यां विसर्गभावाभावाभ्यां च न विरोध इत्यन्ये । एवं यथा—

अप्रमाणमप्रमानमङ्गीकुर्वन् गुणव्रजम् ।
देवदेव समक्षोऽसि साधूनामध्वनि व्रजन् ॥

इत्यादि । लोकादन्यदप्यूह्यम् ।

तदेव पादजमिति । अत्र प्रथमस्त्रिष्वपीति भेदवर्जं पादस्य सकृदावृत्त्या भेदा ज्ञेयाः । तेन प्रथमो द्वितीयतृतीययोर्द्वितीयचतुर्थयोस्तृतीयचतुर्थयोर्द्वितीयस्तृतीयचतुर्थयोरिति चतुर्भेदी सन्त्यपि न गणिता । नवभेदमिति । प्रथमस्य क्रमेण द्वितीयतृतीयचतुर्थै. पादैः सह द्वितीयस्य तृतीयचतुर्थाभ्यां तृतीयस्य चतुर्थेन साद्दश्ये षड् भेदाः । चतुष्पदे साद्दश्ये सप्तमो भेद. । अर्धेति । द्वे अप्यर्धे सदृशे । श्लोकेति । द्वौ श्लोकौ सदृशावित्यर्थः । प्रथमपादादीति । प्रथमपादस्याऽऽदिभागः स तथा । द्वितीयादयश्च ते पादाश्च तेषामादिभागास्तेषु तथा । प्रथमपादादिभाग इत्यत्राऽऽदिशब्दः प्रथमादिपादादिभाग इत्येवंरूपतया ज्ञेयः । ततो ग्रन्थो युज्यते । अन्यथा तु दशभङ्गी नोत्तिष्ठते । यद्वा दशत्वं विनाऽपि पुर उक्तस्येति-

गेष्विति विंशतिर्भेदाः । श्लोकान्तरे हि नासौ भागावृत्तिः । त्रिखण्डे त्रिंशच्चतुष्खण्डे चत्वारिंशत् । प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगत आद्यार्धादिभागे यम्यत इत्याद्यन्वर्थतानुसारेणानेकभेदम्, अन्तादिकम् । आद्यन्तिकम्, तत्समुच्चयः, मध्यादिकम्, आदिमध्यम्, अन्तमध्यम्, मध्यान्तिकम्, तेषां समुच्चयः । तथा तस्मिन्नेव पाद आद्यादिभागानां मध्यादिभागेषु, अनियते च स्थान आवृत्तिरिति प्रभूततमभेदम् । तदेतत्काव्यान्तर्गडुभूतमिति नास्य भेदलक्षण कृतम् । दिङ्मात्रमुदाह्रियते–

सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमाय ततस्त्वं पृथिवीं जय ॥ ३६० ॥

---

शब्दस्य प्रकारार्थता ज्ञेया । ततो ग्रन्थोक्तं युज्यत इति । श्लोकान्तरे हीति । अत्र हि भागस्याऽऽवर्तमानत्वे न वैचित्र्यमित्यावृत्तिर्नेष्टा न त्वसंभवादेव । चत्वारिंशदिति । द्वित्रिचतुष्खण्डपादभेदानां केवलानामेव मीलन उक्तसंख्या युज्यते । द्विकादियोगे तु वर्धतेऽपि । प्रथमपादादीति । प्रथमपादादिगतान्त्यार्धरूप आदिशब्दादिमध्यान्तरूपो भाग इत्यर्थः । अन्तादिकमिति । अत्रान्तशब्देनाग्रेतनोऽन्तादिकनामा यमकभेदो भीमो भीमसेन इति न्यायेन गृह्यते । ततोऽन्तादिकादिकमिति लभ्यते । यद्वाऽन्तादिकादिकमिति पाठः । यद्वा यमकस्य जातिनामेदम् । अग्रतस्तु व्यक्तिनामानि । तत्समुच्चय इति । तयोरन्तादिकाद्यन्तयोः समुच्चयो योगः । तेषामिति । मध्यादिकादीनाम् । आद्यादीति । आदिशब्दान्मध्यान्तभागानाम् । मध्यादीति । आदिशब्दादन्तादिभागेषु । गडुभूतमिति । काव्यवपुषो रसोपचयस्य भङ्गहेतुत्वाद्यमकं गडूयते ।

सन्नारीति । सतीर्नारीर्बिभर्ति पुष्णाति योमा तां याति स तथा । सन्ना अरीणामिभा यत्र तथाविधो रणो यस्य । आराध्येति सन्नक्रियापेक्षया पूर्वकालता । तत इति प्रथमान्तं तसन्तं वा । अत्र प्रथमपादस्तृतीये पादे यमितः ।

विनाऽयमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥३६१॥
स त्वारं भरतोऽवश्यमवलं विततारवम्।
सर्वदा रणमानैषीद्वानलसमस्थितः॥ ३६२॥
सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम्।
सर्वदारणमानैषी दवानलसमस्थितः॥ ३६३॥
अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम्।
या च मातेव भजते प्रणते मानवे दयाम्॥ ३६४॥
यदानतोऽयदानतो नयात्ययं न यात्ययम्।
शिवे हितां शिवेहितां स्मरामितां स्मरामि ताम्॥ ३६५॥

---

विनेति। एनोऽपराधं विना स्थान नयता प्रापयताऽसुखादिना प्राणविनाशिना विशिष्टपुरुषयुक्तोऽयम्। एनो नयता हानिं कुर्वाणेन सुखादिना सुखभक्षकेणायं महाजनोऽदीयताखण्ड्यत। अरं शीघ्रं मानसात् मनः समाक्रम्य। मानसादिति पञ्चमी प्रासादात्प्रेक्षत इतिवत्कर्मणि। महानजन्ति महाजाः खलास्तान्नुदतीन्येवंशीलः। यतमानानां सोद्यमानां सादं खेदं राति। क्रियाविशेषणमिदम्। तथा यमेन मानसमाक्रम्य महाजनोऽखण्डचत यथा सोद्यमाः खिद्यन्त इत्यर्थः। अत्र प्रथमो द्वितीये तृतीयश्चतुर्थे पादे पादो यमितः।

सत्त्वेति। स प्रक्रान्तो महापुरुषः पुनरारं शत्रुसमूहं भरादवशे वर्तमानं दुर्बलं दीर्घाक्रन्दं सर्वकालं रणं प्रापयामास। अलसमगच्छन् शीघ्रगामीत्यर्थः। अस्थीनि तस्यति च्छिनति। सत्त्वेन ये प्रारम्भास्तेषु रतः सर्वथाऽऽश्रिततरुत्वग्वसनं येन आरेण। सर्वेषां यो दारणो मानस्तमिच्छति। दवाग्निना समं स्थितं यस्य।

अनन्तेति। अत्र द्विधा पादविभागेऽन्तर्भागेऽन्तर्भाग आवृत्तः। वेधा यां न वेद न वेत्ति या च नम्रे मानवे दयां कृपां भजते।

यदानत इति। यस्याः प्रणतोऽयस्य शुभदैवस्य दानान्न्यायातिक्रमं न गच्छत्यसौ शिवेऽनुकूलां वराभिलाषां स्मरेणामितां ध्यायामि ताम्। अत्र पादमध्य एवाऽऽद्यन्तकम्।

सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति ।
सर स्वतिकुरु क्षेत्र-कुरुक्षेत्र-सरस्वति ॥ ३६६ ॥
ससार सार्कं दर्पेण कंदर्पेण ससारसा ।
शरं नवाना विभ्राणा नाविभ्राणा शरन्नवा ॥ ३६७ ॥
मधुपराजि पराजित-मानिनीजनमनःसुमनःसुरभि श्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत् ॥ ३६८ ॥

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

**वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥**

अर्थभेदेन शब्दभेद इति दर्शने काव्यमार्गे स्वरो न गण्यत इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद्युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः । स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदादष्टधा । क्रमेणोदाहरणानि—

अलंकारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ३६९ ॥

---

सरस्वतीति । हे वाणि चित्ताब्धौ स्थिते सर गच्छ स्वतिकुरु सुष्ठु अतिशयेन कुरु । क्षेत्रमेव शरीरमेव कुरुक्षेत्रम् । तत्र नदी । संबोधनमेतत् । अत्र पूर्वार्धे आद्यन्तकमुत्तरार्धे आद्यन्तकान्तादिकसमुच्चयः ।

सकलश्लोके आद्यन्तकान्तादिकयोगो यथा—ससार सेति । प्रवृत्ता दर्पेण स्मरेण च सारसैर्युक्ता काण्डं नूतनशकटा धारयन्ती न विद्यते न वीनां त्राणः शब्दो यत्रासौ न अविभ्राणा नाविभ्राणा, अपि तु पक्षिध्वनियुक्ता । शरद् ऋतुविशेषः नवा प्रकृष्टा ।

मधुपेति । अत्र नियते स्थाने आवृत्तिः ।

शब्दभेद इति । यथा कर इत्यत्र पाणिशुण्डाद्यर्थभेदेन शब्दभेदो न वर्णभेदेन । सर्वेष्वप्यर्थेषु वर्णैकस्वररूपत्वात् । ननु स्वरभेदाद्भिन्नस्वरूपापह्नुत्यभावान्न श्लेषः स्यादित्याशङ्क्याऽऽह—काव्यमार्ग इति । भेदादिति । भङ्गात् । अभङ्गात्तु नवमो भेदोऽनन्तरं वक्ष्यति ।

विधाविति । अत्र विधुर्विधिश्चेत्युकारेकारयोर्वर्णयोर्भङ्गे श्लेषः । अलं-

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥ ३७० ॥
भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३७१ ॥

एवं वचनश्लेषोऽपि ।

महदे सुरसंधं मे तमव समासङ्गमागमाहरणे ।
हर बहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ३७२ ॥
अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७३ ॥

---

कारसर्वस्वमते त्वत्रार्थापत्तिरलंकारः । तथा हि–विधौ वक्रे यदेश्वरस्यापीदृशी दशा दृश्यते तदाऽर्थादन्येषामीदृग्दशा सिद्धैवेति संसृष्टिरपि।

भक्तीति । भवे भवे त्वद्दर्शनं भूयादित्यादिप्रकारेण भक्तिप्रह्वाणां विलोकनयाच्ञावती । दृक्पक्षे भक्तावलोकने स्नेहवती । नीलोत्पलस्य स्पर्धिनी कृष्णतया चारुतया च । हितप्राप्तये नीते। नीता चेहितप्राप्तये। महानिधी इति प्रथमायां रो रे लोपमिति दीर्घः । वचनेति । अत्र स्त्रीक्लीबलिङ्गयोर्द्विवचनैकवचनयोश्च श्लिष्टतेत्यर्थं ।

महदे इति । हे उमे महदे उत्सवदे आगमाहरणे आगमनापलापिनि सुरैः सधा संधानं यस्य तं तादृशं समासङ्गं विषयप्रसङ्गमव रक्ष। यद्वाऽऽगमस्य स्वीकारे समासङ्गं विघ्नं रक्ष। तथा बहुसरणं बहुव्यापकं चित्तमोहमवसरे काले हर स्फोटयेति संस्कृतपक्षे । प्राकृतपक्षे तु हे हरवधु शम्भुपत्नि मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धर्वी द्धर स्फोटय । तथा नोऽस्माकं शरणं त्वं चित्तमोहोऽपसरतु[१] मे सहसा बलेन । प्राकृतत्वाच्चित्तमोहमित्यत्र क्लीबत्वम् । एवं संस्कृतस्यापभ्रंशादिभाषाश्लेषोऽपि बोध्यः ।

वक्ष्यतीति । वहिवच्योः रूपम् । कृदिति करोतिकृन्तत्योः प्रकृत्याः । सहस्रमिति क्रियाविशेषणम् । शहस्रशब्दो बाहुल्यार्थः । स्या

---

१—मम देहि रसं धर्मे तमोवशामाशा गमागमाद्धर नः ।
हरवधू शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥

रजनिरमणमौले. पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसंपत्सहस्रम् ।
प्रमथनिवहमध्ये जातुचित्त्वत्प्रसादा-
दहमुचितरुचिः स्यान्नन्दिता सा तथा मे ॥ ३७४ ॥
सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसामुख्यमायासि तनुवर्तनम् ॥ ३७५ ॥

**भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।**

नवमोऽपीत्यपिर्भिन्नक्रमः । उदाहरणम्—

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ।
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥ ३७६ ॥

अत्र प्रकरणादिनियमाभावाद्द्वाव यर्थौ वाच्यौ ।

ननु स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्याणां तदभावाद-भिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलंकारान्तरप्रतिभोत्पत्ति-हेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालंकारमध्ये परिगणि-तोऽन्यैरिति कथमयं शब्दालंकारः । उच्यते—इह दोषगुणालंका-राणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । तथा हि—कष्टत्वादिगाढत्वाद्यनुप्रासादयो व्यर्थत्वा-

---

स्वादिति च नन्दतीति नन्दिना नन्दिनो गणविशेषस्य भावो नन्दि-तेति चाऽऽख्यातकृत्तद्धितप्रत्ययानां भेदः ।

सर्वेति । हे शम्भो त्वं सर्वस्य सर्वस्वं हर त्वमेव संसारोच्छेदत-त्परः सन् नयोपकारयोः सामुख्यं शरीरवर्तनमायासि आगच्छसि । अन्यच्च हर स्फोटय । भव संपद्यस्व । नय निवारय । आयासि खेद-कारि वर्तनं तनु प्रथय । इति सुप्तिङ्विभक्त्योर्भेदः । अत्र प्रकरणा-दिना नियमाभावे श्लेषो न तु ध्वनिः ।

प्रकृत्यादेरिति । अभङ्गश्लेष इत्यर्थः । य इति । गोत्रशब्दो गिरिवं-शार्थः । पक्षाः पतत्राणि स्ववर्ग्याश्च । क्षणो महः निश्चयश्च । शतकोटिदः शतकोटीनां दाता शतकोटिना वज्रेण च्छेदकश्चेति । विबुधा देवाः ।

स्वरितादीति । समाहारोदात्तानुदात्ताः । भिन्नेति । भिन्नाभिन्नप्रय-त्नोच्चार्यत्वं क्रमेण शब्दार्थश्लेषयोर्हेतुरित्यर्थः । अन्यैरिति । उद्भटाद्यैः । अयमिति । योऽसकृदित्यादि । कष्टत्वादीति । एते त्रयोऽपि शब्दगतत्वेन

दिप्रौढ्यानुपमादयस्तद्भावतदभावानुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते।

स्वयं च पल्लवाताम्रभास्वत्करविराजिता।

इत्यभङ्गः शब्दश्लेषः। प्रभातसंध्येवास्वापफललुब्धेहितप्रदा॥३७७॥

इति सभङ्गः शब्दश्लेषश्च। इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम्। न त्वाद्यस्यार्थश्लेषत्वम्। अर्थश्लेषस्य तु स विषयो यत्र शब्दपरिवर्तनेऽपि न श्लेषत्वखण्डना। यथा—

स्तोकेनोन्नतिमायाति स्तोकेनाऽऽयात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥ ३७८॥

न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः। अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथा हि—यथा कमलमिव मुखं मनोज्ञमेतत्कचतितरामित्यादौ गुणसाम्ये क्रियासाम्य उभयसाम्ये वोपमा, तथा—

---

दोषगुणालंकाराः। व्यर्थत्वादीति। एते त्वर्थगतत्वेन दोषगुणालंकारास्त्रयः। तद्भावेति। अयं भावः—गोत्रादिशब्दप्रयोगेऽलंकारस्तदर्थकवंशशैलादिप्रयोगे तु नेति तद्भावतदभावानुविधायित्वेनान्वयव्यतिरेकाभ्यां शब्दालंकार एवात्र। अर्थालंकारे शब्दाः परिवृत्तिं सहन्ते। अर्थस्तु तदवस्थ एव। स्वय चेति। गौरीपक्षे—गौरी पल्लववदाताम्रभास्वद्भ्यां कराभ्यां शोभते। सुखेनाऽऽप्तुं यन्न शक्यं फलं तल्लुब्धानामीहितं प्रदत्ते। संध्यापक्षे तु भास्वत्कराः सूर्यकराः। स्वापफलं विश्रान्तिः। लुब्ध इति सप्तम्यन्तम्। अभङ्ग इति। अर्थश्लेषतयोद्भटस्य यः संमतः। न त्विति। न ह्यभङ्गमात्रमर्थालकारताहेतुः। किं त्वन्वयव्यतिरेकौ। अर्थश्लेषस्य को विषय इत्याह—स्तोकेनेति। तुलायाः कोटिरग्रम्। एतेनालंकारान्तरविविक्तो नास्ति श्लेष इति यदुक्तं परैस्तत्परिहृतम्। केचिदत्रापि तुल्ययोगितामाहुः। द्विविधस्यापि परेष्टश्लेषस्यालंकारान्तरप्रतिभोत्पत्तिहेतुत्वं दूषयति—न चेति। अयमिति। स्वयं चेत्यादिः। प्रतिभेति। प्रतिभार्थस्याऽऽभासमात्रम्। न तु प्ररोहः। निर्वाह इति यावत्। यथा गुणक्रियासाम्ये स्यादुपमा तथा शब्दसाम्येऽपि सा स्यादिति निर्णेतुमाह—तथा हीति। सकलेति। सह कलकलेन वर्तते सकलाः कला

सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव ।

इत्यादौ शब्दमात्रसाम्येऽपि सा युक्तैव । तथा ह्युक्तं रुद्रटेन–

स्फुटमर्थालंकारावेतावुपमासमुच्चयौ किं तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ॥ इति ।

न च कमलमिव मुखमित्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम् । पूर्णोपमाया निर्विषयत्वापत्तेः ।

देव त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ३७९ ॥

इत्यादिः श्लेषस्य चोपमालंकारविविक्तोऽस्ति विषय इति द्वयोर्योगे संकर एव । उपपत्तिपर्यालोचने तूपमाया एवायं युक्तो विषयः । अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् । न च

अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ।

इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः । अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोधः । न ह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः । द्वितीया

विद्यन्ते यत्र सकलैः कलावद्भिः कलं सकलं च तत्कलं चेत्यादिविग्रहः पक्षद्वयेऽपि यथायोगं योज्यः । शब्दमात्रसाम्येऽपीति । एतेनोद्भटेष्टं शब्दमात्रसाम्ये शब्दश्लेषत्वं निरस्तम् । इहापीति । शब्दालंकारप्रकरणे । एतेन शब्दमात्रसाम्येऽप्युपमात्वं सिद्धम् । शून्य इति । चारुत्वादिधर्मप्रयोग उपमा तत्प्रयोगे श्लेष इति परस्याऽऽशयः । ननु यदि पूर्णोपमाया निर्विषयत्वभिया भवद्भिः शब्दसाम्येऽप्युपमात्वं स्मृतं तर्हि श्लेषस्य निर्विषयतेत्याह–देवेति । त्वमेवेत्यत्रैवकारानिर्देशात्पाताअलमिति व्याख्या । तेन न रूपकाशङ्का । आशा दिश आस्थाश्च । एतेन पृथ्वी लब्धा । चामरवीजने चामरमरुतां भूमिः । अमराणां मरुतां च भूमिः स्वर्गः । द्वयोरिति । स्वयं चेत्यादावस्मद्रीत्या श्लेषप्रतिभोत्पत्तिहेतुरुपमा यदि ते न रोचते तदा तत्रापि मतेऽन्यत्र लब्धसत्ताकयोर्द्वयोर्योगे संकरः स्यादेव । अयमिति । स्वयं चेत्यादिकः । तत्सिद्धमेतत्–गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्यानभिधानाच्छब्दसाम्यमप्युपमाया विषयः श्लेषस्य तूपमया विरहित इति स्वयं चेत्यादावुपमैव । यथोपमाबाध्यत्वं श्लेषस्य तथाऽलंकारान्तरबाध्यत्वमपि तस्य स्यादित्युद्भटेष्टमन्यदपि दूष्यते—न चेति । अप्सु इन्दुरबिन्दुः । द्वितीयेति । न बिन्दुरबिन्दुरित्यन्योऽर्थः । न चैकार्थप्रतिभासमात्रे श्लेषः

र्थस्य प्रतिभातमात्रस्य प्ररोहाभावात् । न च विरोधाभास इव विरोधः, श्लेषाभासः श्लेष । तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलंकारान्तरमेव । तथा च—

सद्वंशमुक्तामणिः ॥ ३८० ॥

नाल्पः कविरिव स्वल्पश्लोको देव महान्भवान् ॥ ३८१ ॥

अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥ ३८२ ॥

आदाय चापमचलं कृत्वाऽहीनं गुण विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३८३ ॥

इत्यादावेकदेशविवर्तिरूपकश्लेषव्यतिरेकसमासोक्तिविरोधत्वमुचितं न तु श्लेषत्वम् ।

शब्दश्लेष इति चोच्यतेऽर्थालंकारमध्ये च लक्ष्यत इति कोऽयं नयः । किंच वैचित्र्यमलंकार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रतेति सैवालंकारभूमिः । अर्थमुखप्रेक्षित्वमेतेषां

---

किं त्वर्थद्वयप्ररोहे स्यादित्याशयेनाऽऽह—न चेति । यथा विरोधाभासोऽपि विरोधो न तथा श्लेषाभास श्लेष इत्यर्थः । कानि तान्येवमादिवाक्यानीत्याह—तथा च सद्वंगेत्यादि । वशः कुलम् । स एव वंशो वेणुः । श्लोको यशोऽपि । तत्पुरःसर इति । आयान्त्या इव संध्यायाः कामीव दिवसः पुरः संमुखं सरतीति व्याख्या । न त्वग्रे दिनं पृष्ठतश्च संध्या यातीति । एवं कदाऽपि न समागमः स्यात् । आदायेति । अचलं शैलं निश्चलं च । अहीनं शेषं न हीनं च । विषमा त्रिरूपा चञ्चला च । अच्युतो विष्णुर्गतिशून्यश्च । एकदेशेति । भामहोक्तैकदेशविवर्तिरूपकस्य मम्मटमते[1] परम्परितसंज्ञा । अत्र वर्णनीयस्य राज्ञो मुक्तामणित्वरूपणान्यथानुपपत्त्या वंशस्य गोत्रस्य वेणुत्वरूपणं साक्षादनुक्तमपि श्लेषबलाद्गम्यत इत्येकदेशविवर्तित्वम् । सद्वंशेत्यत्रैकदेशविवर्ति रूपकम् । नाल्पः कविरिवेत्यत्र श्लेषव्यतिरेकौ । अनुरागवती संध्येत्यत्र समासोक्तिः । आदायेत्यत्र च विरोधः ।

ननु स्वारितेत्यादिपरोक्तपूर्वोक्तपूर्वपक्षस्योपहासं करोति—शब्दश्लेष इति । य एवेति । शब्दोऽर्थो वा । सैवेति । विचित्रता । एतेन स्वयं

---

१ क मम्मटमते ।

शब्दानामिति चेदनुप्रासादीनामपि तथैवेति तेऽप्यर्थालंकाराः किं नोच्यन्ते । रसादिव्यञ्जकस्वरूपवाच्यविशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलंकारता । शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता । अर्थगुणदोषालंकाराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम् ।

विधौ वक्रे मूर्ध्नीत्यादौ च वर्णादिश्लेष एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम् ।

तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८५ ॥

संनिवेशविशेषेण यत्र न्यस्ता वर्णाः खड्गमुरजपद्माद्याकारमुल्लासयन्ति तच्चित्रं काव्यम् । कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते । उदाहरणम्—

मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥३८४॥
माता नतानां संघट्टः श्रियां बाधितसम्भ्रमा ।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ ३८५ ॥
( खड्गबन्ध )

---

चेत्यादौ शब्द एव कविप्रतिभासंरम्भगोचर इति परमतेऽपि शब्दश्लेषता न त्वर्थश्लेषतेत्युक्तम् । रसादीति । रसादिव्यञ्जकं स्वरूपं यस्य वाच्यविशेषस्य । अनुप्रासादीनामपि शब्दालंकारताऽर्थापेक्षैवेति तेऽप्यर्थालंकाराः किं न स्युः । गुणदोषतेति । शब्दगुणदोषा अर्थगुणदोषत्वेन किं नोच्यन्त इति भावः । संस्कृतादिषड्भाषाणामर्थाभेदे युगपदुक्तिर्भाषाश्लेष इत्येके । तत्र संस्कृतस्य प्राकृतभाषया श्लेषो यथा—

सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम् ।
विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥

एवमन्यभाषाणामपि द्वित्र्यादिश्लेषो ग्रन्थान्तराज्ज्ञेयः ।

वर्णा इति । लिपयः । तासामेव खड्गाद्याकारोल्लासनासंभवात् । लिपीनां च श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन प्रतीतेरत्र वाचकशब्दालंकारता न लिप्यलंकारता । चित्रमिति । चित्रसादृश्याद्वाश्चर्यहेतुत्वाद्वा चित्रम् । मारारीति । मारारिः शम्भुः । स्थापना यथा—द्वादिकान्तरे साधारणो माशब्दः । तस्य दक्षिणतोऽधः क्रमेण वर्णाश्चतुर्दश ।

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला ॥ ३८६ ॥
( मुरजबन्धः )

भासते प्रतिभासार रसाभाता हताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ ३८७ ॥
( पद्मबन्धः )

---

शिखायां साधारणः साशब्दः । ऊर्ध्वक्रमेण वामतस्तावन्त एव यावन्माशब्दः साधारणः । एतत्फलम् । तस्यैव माशब्दस्य दक्षिणतो निःसरणक्रमेण वामतश्च प्रवेशक्रमेण वर्णाः सप्त सप्त । एषा द्राढिका । ततो माशब्दादूर्ध्वं क्रमेण गण्डिकायां वर्णत्रयम् । उपरि माशब्दः साधारणः । तस्य दक्षिणतो वामतश्च तथैव चत्वारश्चत्वारो वर्णाः । एतच्च कुलकम् । ततस्तस्य माशब्दस्योपरि वर्णद्वयम् । एतन्मस्तकम् । सा—मा—माशब्दाद्विः पञ्चकृत्वो द्विरावृत्ताः ।

सरलेति । शरद्वर्णनेयम् । सरं लातीति सरला । बहुलारम्भेण तरलानामलिमालानामारवो यत्र । हंसीभिर्बहुला । करान् लान्तीति करलाः क्ष्मापाः । अमन्दा विजिगीषवः करला यस्याम् । अबहुलेन शुक्लपक्षेण निर्मला । स्थापना यथा—पादचतुष्टयेन पङ्क्तिचतुष्टये कृते प्रथमादिपादेभ्यः प्रथमाद्यक्षराणि चत्वारि चतुर्थादिपादेभ्यः पञ्चमादीनि च चत्वारि गृहीत्वा प्रथमः पादः । द्वितीयात्प्रथमं प्रथमाद्द्वितीयतृतीये द्वितीयतृतीयाभ्यां चतुर्थे चतुर्थात्तृतीयद्वितीये तृतीयात्पादात्प्रथममक्षरं गृहीत्वा द्वितीयः पादः । द्वितीयादष्टमं प्रथमात्सप्तमषष्ठे द्वितीयतृतीयाभ्यां पञ्चमे चतुर्थात्षष्ठसप्तमे तृतीयादष्टमं च गृहीत्वा तृतीयः पादः । चतुर्थादिभ्यः प्रथमादीनि प्रथमादिभ्यः पञ्चमादीनि पादेभ्योऽक्षराणि गृहीत्वा चतुर्थः पादः ।

भासत इति । हे प्रतिभासार रसेन समन्ताद्भाता हताऽशोभा यया वादे एकाग्रचित्ता शुभा प्रशस्या देवैर्वादिभिर्विद्वद्भिराभाति । बतेत्याश्चर्ये । स्थापना यथा—भाशब्दः कर्णिकास्थाने । ततोऽक्षरद्वयेनैकं दिग्दलं निःसरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । ततः स एव भाशब्दः । ततोऽक्षरद्वये विदिग्दलं निर्गमेण तावतैव दिग्दलं प्रवेशेन

रसासार रसा सारसायताक्ष क्षतायसा ।
सातावात तवातासा रक्षतस्त्वस्त्वतक्षर ॥ ३८८ ॥
( सर्वतोभद्रम् )

संभविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ।

---

भाशब्दं यावत्पुनर्भाशब्दो निर्गमेण च तदेवाक्षरद्वयमित्यादिना क्रमेण दलाष्टकमुत्पाद्यमिति । विदिग्दलवर्णानां द्विर्भाशब्दस्य चाष्टकृत्व आवृत्तिः । खड्गादीत्यादिशब्दान्मुशलधनुर्बाणचक्रशक्तिशूलहलस्वस्तिकादयस्तथैकद्वित्र्यादिवर्णस्वरस्थानपादार्धश्लोकगतप्रत्यागतादयश्चित्रभेदा ज्ञेयाः ।

रसेति । हे सारस्थिररसवेगवद्वर्ष आयताक्ष पृथुनेत्र सातं सुखमव सामस्त्येनाततीति सातावात । अतक्षर वृद्धिदायक तव रक्षतः सतः सारसा भूरतासा विगतोपक्षयाऽस्तु । क्षत आयो यैस्ते क्षतायाः खलास्तान् स्यति या सा भूस्तवैवेत्थम् । तुरवधारणे । अत्र न केवलमधोऽध क्रमेण स्थितानां पादानां प्रातिलोम्येन स्थितिर्यावदर्धभ्रमस्यापि । तत्र हि प्रथमादिपादानां प्रथमैश्चतुर्थतृतीयद्वितीयप्रथमपादानामष्टमैश्चाक्षरैः प्रथमः पादः । एवं द्वितीयसप्तमैस्तृतीयषष्ठैश्चतुर्थपञ्चमैश्च द्वितीयतृतीयचतुर्थपादाः । इह च सर्वं तदेवोपलभ्यत इत्यर्धभ्रमस्याप्यवस्थानात्सर्वतोभद्रम् ।

अन्य इति । वर्णच्युतं स्वं यथा—

नृपदितिजामरप्रभुनताङ्घ्रियुगो जलदद्युतिर्विभुः
पृथुभुजगाधिपस्फुटफणासुभगः कमठारिजित्तथा ।
शिवसुखसंपदव्ययविलासगृहं निखिलैनसां हरो
घनविधुतावनीं हरतु नः सकलः कलिलावलीं जिनः ।

अत्र श्रीपार्श्ववर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयस्यान्त्याक्षरसप्तकस्य च च्युतौ प्रमिताक्षरावृत्तेन तथाऽऽद्याक्षरसप्तकस्यान्त्याक्षरद्वयस्य च च्युतौ द्रुतविलम्बितवृत्तेन तस्यैव वर्णनम् । एवं बिन्दुमात्रार्धमात्राच्युतानि क्रियाकारकपादसंज्ञासंबन्धगुप्तानि प्रश्नोत्तरप्रहेलिकागोमूत्रिकातुरगपदादीनि कण्ठाभरणादिग्रन्थेभ्यो ज्ञेयानि ।

---

१ ख. तदैषा° । २ ख. °द्विव्यञ्जनस्वं° । ३ ख. °तगतम° । ४ क. °ज्ञानिवं° ।

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन वा मुखे भासनं पुनरुक्तवदाभासः । स च

शब्दस्य

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः । उदाहरणम्—

अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥ ३८९ ॥

चकासत्यङ्गनारामाः कौतुकानन्दहेतवः ।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः ॥ ३९० ॥

तथा शब्दार्थयोरयम् ॥ ८६ ॥

उदाहरणम्-

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजोधाम महःपृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ ३९१ ॥

---

आमुख इति । न तु परमार्थतः । एतेन पर्यवसानान्यथात्वं लब्धम् ।

अरीति । अरिवधदा, ईहा येषां शरिणां तानीरयति यः स तथा । सूतशब्दः प्रेरितार्थोऽपि । स्थिरतायामवनितलतिलक । अगो मेरुः सन् सतामानत्या भाति। अत्र देहशरीरशब्दौ सार्थकौ सभङ्गौ सन्तौ दानत्यागशब्दावनर्थकौ सभङ्गौ सन्तौ सारथिसूतशब्दौ सार्थकानर्थकौ सभङ्गाभङ्गौ सन्तौ पुनरुक्ताभासौ ।

चकासतीति । अङ्गनेष्वारामा येषां ते तथा । अत्राङ्गनारामा इत्येतौ शब्दावनर्थकौ देहशरीरादिशब्दवद्भङ्गाभावादभङ्गौ च । केचिदस्यार्थपौनरुक्त्याश्रितत्वादर्थालंकारतामाहुः । वयं त्वर्थपौनरुक्त्याश्रितत्वेऽपि शब्दवैचित्र्याच्छब्दालंकारत्वं ब्रूमः ।

तन्विति। तनुः कृशोऽपि । कुञ्जरः श्रेष्ठार्थोऽप्युत्तरपदे। रक्तो रञ्जितः। खरः कठोरः । तेजोधाम्नां मह उत्सवभूतः । तेजोगृहं वा । पृथुमनसां

अत्रैकस्मिन्पदे परिवर्तिते नालंकार इति शब्दाश्रयः, अपरस्मिंस्तु परिवर्तितेऽपि स न हीयत इत्यर्थनिष्ठ इत्युभयालंकारोऽयम् ॥

इति काव्यप्रकाशे शब्दालंकारनिर्णयो नाम
नवमोल्लासः समाप्तः ॥

---

महसा वा पृथुमनसां स्वामी । जिष्णुर्जेता । हरिः सिंहः । एकस्मिन्निति । तनुकुञ्जरादिपदेऽनेकार्थेत्यर्थः । अपरस्मिन्निति । एकार्थे वपुरादिपद इत्यर्थः ।

इति माणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते
नवमोल्लाससंकेतः समाप्तः ।

## दशमोल्लासः ।

—०:—

अथार्थालंकारानाह—

**साधर्म्यमुपमा भेदे,**

उपमानोपमेययोरेव, न तु कार्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा। भेदग्रहणमनन्वयव्यवच्छेदाय ।

---

पारेऽलंकारगहनं संकेताध्वानमन्तरा ।
सुधियां बुद्धिशकटी कथंकारं प्रयास्यति ॥

अथ द्वाषष्टिमुपमाद्यर्थालंकारानाह । तत्रापि प्रकारवैचित्र्येणानेकालंकारबीजमिति पूर्वमुपमोच्यते । एषा चार्थालंकारत्वेन प्राच्यैरुक्तत्वादुक्ता । यावता त्वेषा श्रौती रूपवादिशब्दपरावर्तासहनान्यशब्दपरावर्तसहनाभ्यामन्वयव्यतिरेकत्वेनोभयालंकृतिः । अत एवासौ पुनरुक्ताभासोभयालंकारसमीपे प्रोक्ता । श्रीभोजोऽप्येवमुक्तवान् ।

साधर्म्यमिति । सधर्मणो भावः साधर्म्यं समानधर्मसंबन्धः । तच्च प्रतीतयोरुपमानोपमेययोरेव न कार्यकारणादिकयोः । असंभवात् । सत्त्वज्ञेयत्वप्रमेयत्वादिसाधर्म्यभावेऽपि तयोर्नोपमा । हृद्यत्वाभावात् । उपमितिः समगुणद्वारेणोपमेयस्योपमानसदृशीकरणमुपमा । उप समीपे मीयते क्षिप्यते स्वसादृश्यप्रापणादुपमेयं येन तदुपमानम् । तथा तेन यत्तु समीपे क्षिप्यते गुणद्वारेण तदुपमेयम् । हृद्यतया कविना यदुत्कृष्यते तदुपमानमन्यदुपमेयम् । न तु प्रसिद्धमप्रकृतं वोपमानमन्यदुपमेयम् । एवं हि

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।

इत्यादौ चन्द्रादेः प्रसिद्धस्योपमेयत्वं गण्डादेरप्रसिद्धस्योपमानत्वं न स्यात् । प्रकृताप्रकृतत्वेऽपि कविविवक्षैवाङ्गीकार्या । चन्द्रगण्डयोरुपमानोपमेयत्वप्रसिद्धौ सत्यामपि वक्त्रा प्रसिद्धिविपर्यासेनौपम्यस्य कल्पितत्वाद्विपर्यासोपमा । एवंविधकाव्येषु न सामान्योपमेति श्रीभोजः। क्वचिदहृद्यस्यापि साधर्म्यस्योपमानत्वं यथा हास्यादौ शूर्पकर्णः कुम्भोदर इत्यादि । भेद इति । प्रायः शब्दार्थाभ्याम् । पुरुषः पुरुषो यथेत्यादिदर्शनाच्च क्वचिदर्थेनास्यां भिन्ने उपमानोपमेये । अनन्वये तूपमानोपमेययोः शब्दार्थाभ्यां क्वचिच्चार्थेनाभेद एव । यथा रविरिव रविः । रविः सूर्य इव । उपमानोपमेययोः शब्दार्थद्वारेण स्वगतो भेदो न धर्मद्वारेण ।

पूर्णा लुप्ता च,

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता।

साऽग्रिमा।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७ ॥

अग्रिमा पूर्णा। यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते तथाऽपि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा। तथैव, 'तत्र तस्येव' (पा० सू० ५। १। ११६) इत्यनेनेवार्थे विहितस्य वतेरुपादाने श्रौती। 'तेन तुल्यं मुखम्'—इत्यादावुपमेय एव, 'तत्तुल्यमस्य'—इत्यादौ चोपमान एव, "इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्ति-

---

धर्मद्वारकभेदे हि व्यतिरेकालंकारत्वं स्यान्नोपमालंकारत्वम्। उपमानोपमेययोर्भेदः शब्दार्थद्वारको यथोपमायामस्ति तथा समानधर्मद्वारेणाप्यभेदोऽप्यस्ति। यदाहुर्यत्र किंचित्सामान्यं कश्चिच्च विशेषः स विषयः सदृशताया इति। तदर्थमुपमाभेदे इत्यत्र सूत्रेऽकारप्रश्लेषो ज्ञेयः। ततश्च भेदाभेदप्राधान्य उपमेति लब्धम्।

'' उपमाया वाचका इववायथेत्यव्ययानि तुल्यार्थवाचिनः प्रतिपक्षप्रत्यनीकादयः प्रतिबिम्बप्रतिच्छन्दादयश्च शब्दाः कल्पबादिप्रत्ययाश्च स्पर्धतेजयत्यनुकरोत्यादिक्रियाश्च चन्द्रमुखीत्यादिसमासाश्च। उपमानमुपमेयं साधारणधर्म उपमाप्रतिपादकाश्च यत्र स्युः सा पूर्णा। एषां क्रमेणैकद्वित्रिलोपे लुप्ता।

'' उपमानविशेषणानीति। पद्मादेरुपमानतया स्थापकाः श्रुत्यैवेत्यभिप्रायेण। यथा षष्ठी यस्याग्रे तं विशिनष्टि न पुनस्तत्र विश्राम्यति। अतः सा श्रुत्यैव संबन्धं द्विष्ठं ब्रूते। तथैवायमिवादिरुपमानोपमेययोरेकतरत्राप्यविश्रान्तः श्रुत्या द्विष्ठमुपमानोपमेयभावं वक्तीति। तत्सद्भावे। यथेवादिभावे। तथैवेति। श्रौतीत्यर्थः। तेनेति। चन्द्रेण। तत्तुल्यमिति। चन्द्रबिम्बं तुल्यं मुखस्य। इदं चेति। मुखं च चन्द्रबिम्बं च तुल्यम्। उभयत्रापि क्रमेणेति शेषः। पूर्वयोस्त्वेकत्रैवेति भावः। तुल्यादीति। तुल्य-

रिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्याऽऽर्थत्वात्तुल्यादिपदोपादान आर्थी । तद्वत्, 'तेन तुल्यं क्रिया चेद्वतिः' ( पा० सू० ५ । १ । ११५ ) इत्यनेन विहितस्य वतेः स्थितौ ।

'इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति नित्यसमास इवशब्दयोगे समासगा ।

क्रमेणोदाहरणम्—

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३९२ ॥

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः
सममिति चेतसि संमदं विधत्ते ॥ ३९३ ॥

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३९४ ॥

---

प्रकारशब्दानाम् । साम्येति । सममेव साम्यं समानो धर्मः । द्विष्ठरूपं सादृश्यं तुल्यता । अयं भावः—उपमानोपमेययोः साम्यप्रतीतिर्न तुल्यादिशब्दादेव किं त्वर्थात् । तुल्यादिपदानामेकतरत्रैव विश्रान्तेः । अन्यत्र साम्यालोचनया सादृश्यप्रतीतिः । तद्वदिति । आर्थीत्यर्थः । इवेन सह समासः स्याद्वा न वेत्याह—इवेनेति । एतद्वक्तव्यं कुगतिप्रादय इतिसूत्राश्रितम् । समासगेति । श्रौतीति योगः ।

स्वप्नेऽपीति । प्रभावो विक्रमः । अन्यत्र तु प्रकृष्टो भावोऽनुरागः । तयोः प्रभव उत्पत्तिस्थानम् । अत्र श्रीः स्वाधीनपतिका प्रभावप्रभवामोचनं यथेति च क्रमेणोपमेयोपमानधर्मोपवाचकम् । इयं वाक्ये पूर्णा श्रौती ।

वाक्ये पूर्णार्थी यथा—चकितेति । न तुल्यादिशब्दात्साम्यप्रतीतिः किं त्वर्थादित्युभयत्र स्थितेनापि समशब्देनोपमानोपमेययोरेकतरस्य सादृश्यमर्थादवगम्यते ।

भुजैरिवेति । यो राजा सदा चतुर्भिरुपायैः शौरिरिव चतुर्भिर्भुजैर्भुवनं

अवितथमनोरथपथ-
प्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवा-
भिलषणीयः क्षितीश्वर न कस्य ॥ ३९५ ॥

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजङ्गवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ३९६ ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम् , वैचित्र्यं चालंकारः, तथाऽपि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, । न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः । अपि तु वाच्यवैचित्र्यप्रतिभासादेव । रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलं-

---

बभारेति योगः । अथ वा शौरिः सहायः सन् चतुर्भिरुपायैर्भुजैरिवेति योगः । इवेन समासपक्षे समासे श्रौती पूर्णोपमेयम् । ये त्विवेन समासं नेच्छन्ति तन्मते वाक्योपमेयम् ।

सुरेति । अत्र सुरतरुणा सदृश इति तत्पुरुषे सदृशशब्द उपमेये विश्रान्तस्तद्गतं सादृश्यं साक्षाद्भूते । अन्यत्र सादृश्यमर्थात्प्रतीयते । बहुव्रीहौ तूपमाने सदृशशब्दो विश्राम्यति । तत्र सादृश्यं साक्षादपरत्र त्वर्थादितीयं समासे, आर्थी पूर्णोपमा ।

गाम्भीर्येति । तद्धिते श्रौती पूर्णेयमिति योगः । भुजङ्गवदित्यत्रेवार्थे वतिः । ततः श्रौतीत्वम् । भुजङ्गः कामी । स चार्थात्समुद्रः । अम्बररत्नं रविः । तेन तुल्यः । तुल्यार्थे वतिः । स चोपमेये साक्षाद्विश्रान्तः । उपमाने तु साम्यपर्यालोचनयोपमानताप्रतीतिरितीयं तद्धिते पूर्णार्थी ।

स्वाधीनेति । अयं भावः—प्रतीयमानं चेद्व्यक्तं तदा ध्वनिव्यवहारः । अथास्फुटं तदा गुणीभूतव्यङ्ग्यव्यवहारः । तत्कथमत्र वाच्यचित्रकाव्यव्यवहारः ।

अलंकारान्तरं चेति । तद्ध्यनुप्रासादि श्लिष्टतरमपि काव्ये यद्यव्यभिचारितयैव गण्येत तदा तेन सहोपमादीनां संकरसंसृष्टी स्यातामिति केवलतयैवैषां विषयो नावकल्पेत । तदिति । स चास्फुटतरो रसादिर-

कारा उदाहृताः । तद्रहितत्वेन तूदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम् ।

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।**

धर्मः साधारणः । तद्धिते कल्पबादौ त्वार्थ्येव । तेन पञ्च । उदाहरणम्—

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।
करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥ ३९७ ॥
आकृष्टकरवालोऽसौ संपराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ ३९८ ॥
करवालइवाऽऽचारस्तस्य वागमृतोपमा ।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ॥ ३९९ ॥

---

र्थस्तच्चालंकारान्तरमिति नपुंसकानपुंसकैकशेष । संस्पर्शपदादत्र रसादिः स्फुटतरो ग्राह्यः । अस्फुटातिस्फुटस्य तु गुणीभूतव्यङ्ग्यता । तद्रहितत्वेनेति । रसाद्यलंकारान्तररहितत्वेन ।

तद्वदिति । पूर्णावल्लुप्ताऽपि वाक्यसमासयोर्द्विभेदा । तद्धिते त्वार्थ्येव न श्रौती । 'तत्र तस्येव' इति सूत्रेण कृते वतिप्रत्यये श्रौतीत्वं मतम् । नन्वस्य सिंहवत्त्वया संनिधौ न गन्तव्यमित्यत्र दारुणत्वस्य गम्यत्वादनुच्चारणे पुरुषस्य सिंहोपमेयस्य संनिधौ पुरुषसंचरणनिवारणे समानधर्मलोपेन श्रौतीति युज्यते । सत्यम् । समानधर्मतां निवारणादिकं भजते । अथ वा प्रतीत्यभावादेव । तथा हि षष्ठ्यन्तस्य सिंहोपमानत्वे विवक्षितेऽपि शब्दसामर्थ्यात्तृतीयान्तेनैव सहोपमायाः स्फुटता प्रतीयते । न तु पूर्वोक्तघटना ।

करणीयमिति । करणीयं वपुः । करणेभ्यो हितत्वात् । सत्यमेतत्त्रयमपि सुधावदाह्लादकमित्यर्थः । इयमाह्लादकत्वादिधर्मलोपे वाक्ये श्रौती ।

वाक्य आर्थी यथा—आकृष्टेति । समशब्दस्योपमेये विश्रान्त्या, उपमाने साधर्म्यप्रतीतिरर्थात् । क्रूरादिधर्मलोपोऽत्र ।

करवाल इति । अत्रेवेनेति समासः । इय दारुणत्वधर्मलोपे समासे श्रौती । समास आर्थी यथा-अमृतोपमेति । अत्र माधुर्यादिलोपः । तद्धित आर्थी यथा—विषेति । यदि वेत्सि तर्ज्जीवसीत्यन्वयः । अत्र दारुण-

उपमानानुपादाने वाक्यगाऽथ समासगा ॥ ८८ ॥

सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहवणिसम्मइ सरिसं अंसंसमेत्तेण ॥ ४०० ॥

धर्मलोपः । ईषदपरिसमाप्तं विषं मन इत्युक्त्या आमुखे रूपकावभासः । निर्वाहे तु विषसदृशं मन इति प्रतीत्या प्रातीतिकेन रूपेणोपमैव । ईषदपरिसमाप्तिविशिष्टे प्रकृत्यर्थसदृशेऽर्थे कल्पबादीनां स्मरणात् । ईषदपरिसमाप्तं विषं विषकल्पशब्देनोच्यते । गुणहीनविषजातीयं यत्किंचनापि वस्तु विषकल्पशब्दवाच्यमित्यर्थः । मनोविषकल्पशब्दयोः सामानाधिकरण्यं गौर्वाहीक इतिवद्गुणद्वारेणेति केचित् । वयं तु कल्पप्रत्ययस्य सदृशार्थवाचित्वेन विषकल्पं विषसदृशं मन इति प्रतीत्या विशेषणतया सामानाधिकरण्यं ब्रूमः । यतः सर्वत्र प्रतीतिरेव बलवती । ननुविषशब्दोऽपि विषत्वजातेस्तदाधारद्रव्यस्य वा वक्ता । जातिश्चैकाऽनवयवा च । स्वाश्रयव्याप्त्या समाप्तैव । द्रव्यमपि यत्तद्युक्तं तत्सर्वतः संपूर्णत्वात्समाप्तमेवेतीषदसमाप्तिः कथमिति चेन्न । इह शब्दादुच्चरितादद्वयं प्रतीयते । शब्दार्थौ जातिर्द्रव्यं वा । तद्योगाद्वाऽशब्दार्था अपि गुणाः प्रतीयन्ते । यत्र चैतदुभयमस्ति तत्र परिसमाप्तिः । यत्र त्वन्यतरन्नास्ति तत्रापरिसमाप्तिः । तत एतद्द्वयभावे न स्यादीषदसमाप्तिरेकतराभावे तु स्यात् । तद्विषशब्दो विषजात्या हीनं दुष्टत्वादिगुणेन वा हीनं द्रव्यं ब्रुवन्नीषदसमाप्त एव । अतश्च विषत्वजातिहीने मनःशब्दवाच्येऽर्थे केनापि साम्येन वर्तमानो विषशब्द. प्रत्यययुग्मनःशब्देनैकाधिकरणोऽपि भवेत् । गुणाहीनत्वेन त्वेकाधिकरणः प्रागुक्तः ।

सकलेति । सकलकरणपरविश्रामश्रीवितरणं न सरसकाव्यस्य । दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेण । अत्र सदृशशब्दवाच्यस्योत्कृष्टत्वेन बलादुपमानत्वम् । तच्च सरिसमिति विशेषणेनाऽऽक्षिप्यते । नात्र साक्षात्प्रतीयत इत्युपमानानुपादानम् । सरसकाव्यमुपमेयम् । तस्यान्यदुपमानभूतं सरसान्तरं निषेध्यमिति भावः । इयमुपमानलोपे वाक्यगाऽऽर्थी । श्रौती तु न संभवति । उपमानोपादानमन्तरेण यथेवा-

१—सकलकरणपरविश्रामश्रीवितरण न सरसकाव्यस्य ।
दृश्यतेऽथ वा निशम्यते सदृशमंशांशमात्रेण ॥

कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति पाठ एवैव समासगा ।

वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि;

वाशब्द उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्-समासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् ।

उदाहरणम्,—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ ४०१ ॥

तथा—

असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥ ४०२ ॥

पौरं सुतीयति जनं समरान्तरेऽसा
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥ ४०३ ॥

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यत्रनीपतिः ॥ ४०४ ॥

---

दीनां प्रयोगाभावात् । तदर्थे विहितस्य वतेरपि उपमानभूतप्रकृत्युपादान-मन्तरेणाघटनात् ।

तत इति । अत्र समासासमासगे उपमानोपमेये प्रोक्ते । असित इति । अत्र तु समासगे । रुहरुहिकौत्सुक्यम् ।

पौरमिति । सुतीयतीति कर्मणि क्यच् । अन्तःपुर इवाऽऽचरति अन्तःपुरीयतीत्याधारे क्यच् । नारीयत इत्यादि भिन्नमभिन्नं वा व्याख्येयम् । मृधे इति । अत्र समासे कर्मकर्त्रोर्णमुलीवलोपः । सुतीयतीत्यादिषु त्रिषु प्रत्ययेन साधारणधर्म उच्यते नेवार्थः ।

एतद्विलोपे क्विप्समासगा ॥ ८९ ॥

एतयोर्धर्मवाद्यो । उदाहरणम्,—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥ ४०५ ॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपराये प्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ ४०६ ॥

धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

उदाहरणम्—

ढुण्ढुण्णन्त मरीहसि कण्टअकलिआई केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥ ४०७ ॥

कुसुमेण सममिति पाठे वाक्यगा ।

क्यचि वाद्युपमेयासे ।

आसे निरासे ।

---

एतदिति । एतयोर्विलोप एतयोर्धर्मवाद्योर्लोपे चेति । विधवतीति । अत्र क्विब्लोपात्तद्वाच्यस्याऽऽचाराख्यधर्मस्येवस्य च लोपः ।

राजेति । राजा कुञ्जर इवेति समासे उपमासाधकधर्मस्येवस्य च लोपः । राजनं तु राजकुञ्जर इत्युपमाया सिद्धायां योज्यत इति न धर्मसद्भावः शङ्क्यः । वृत्ताविति । समासे । ढुण्ढु इति ।

ढुण्ढुलायमानो मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृशं भ्रमर भ्रमन्न प्राप्स्यसि ।

हे भ्रमर भ्रमणशील दुष्ट विट चुम्बितानि शंभलीकुलानि गवेषयन्विपद्यसे न कदाऽपि मालतीसुकुमारसुभगां नारीं प्राप्स्यसीति भावः । तेन तुल्यमित्यादौ तुल्यादिपदानामुपमेय एव विश्रान्तिरिति यद्यप्युक्तं तथाऽपि सदृशशब्दवाच्यगुणत्वेन बलादुपमानत्वं नोपमेयत्वमित्युपमानस्यैव लोपः ।

अरातिविक्रमालोकविकस्वरविलोचन ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥ ४०८ ॥

अत्राऽऽत्मा उपमेयः ।

त्रिलोपे च समासगा ॥ ९० ॥

त्रयाणां वादिधर्मोपमानानाम् । उदाहरणम् —

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।
स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः ॥ ४०९ ॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदेद-मुदाहरणम् ।

क्रूरस्याऽऽचारस्यायःशूलतयाऽध्यवसायात्, अयःशूलेनान्विच्छति 'आयःशूलिकः'—इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय–तैक्ष्ण्यधर्म–वादीनां लोपे त्रिलोपेयमुपमा । एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः ।

---

सहस्रायुधीयतीति । सहस्रायुधमिवाऽऽत्मानमाचरतीति नामधातुवृत्तौ । इवादिरात्मोपमेयश्च लुप्तः । आचारधर्मस्तु क्यचोच्यते । तस्य तत्र विधानात् ।

तरुणीति । विलासाय विलब्धो दत्तो विग्रहो यया सा तथा । मृग-नयने इव नयने यस्या इति सप्तम्युपमान इत्यादिनोपमानपूर्वस्य समास उत्तरपदलोपश्च । अत्र धर्मस्येवाऽऽदेरुपमानस्य च लोपः । यदा तु मृग शब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इति रूपकसमासस्यैष विषयः । न तूपमासमासस्य । यदेति । यदोपमास-मासलोपौ तदा त्रिलोपे समासगा । अन्यथा तु नास्ति त्रिलो पिन्युपमा ।

आयःशूलिक इति । अत्रार्थान्वेषणोपायादिः क्रूराचारोऽयःशूलतयाऽ-ध्यवसीयते । तथाऽत्रायःशूलेनेत्युपमानं शब्दोक्तम् । शेषं तु तैक्ष्ण्यादि-धर्मक्रूराचारोपमेयेवादिरूपं त्रयमर्थसामर्थ्यगम्यम् । निगीर्याध्यवसा-नरूपातिशयोक्तिरियं नोपमा । अत्रोपमानेनायःशूलेनार्थान्वेषणोपाय-स्योपमेयस्य तद्भावाध्यवसानेनाऽऽपादिताभेदस्य प्रतीयमानत्वात् । भाष्य-कारोऽप्याह—न तिङन्तेनोपमानमस्ति । आख्यातं नोपमानं स्यादि-

"अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
म्लौ सा च विषादेन पद्मिनीव हिमाम्भसा ॥ ४१० ॥

इहाभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ४११ ॥

इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा,
यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥ ४१२ ॥

मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥ ४१३ ॥

इत्यादिका रशनोपमा च " न लक्षिता । एवंविधवैचित्र्यस-
हस्रसंभवात् । उक्तभेदानतिक्रमाच्च ।

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।

---

त्यर्थः । एवं वर्तमानसामीप्यादावप्यतिशयोक्तित्वं वाच्यम् । एवं पूर्णाया भेदाः षट् । लुप्तायास्त्वेकोनविंशतिः । तथा हि—धर्मस्य लोपे पञ्च । उपमानस्य द्वौ । वादेः षट् । धर्मवाद्योर्द्वौ । धर्मोपमानयोर्द्वौ । वाद्युपमेययोरेकः । त्रयाणामेक इति । लोप इति सर्वत्र योज्यम् ।

अनयेनेति । अत्र म्लानत्वमभिन्न एको धर्मः । ज्योत्स्नेवेति । अत्र नयनानन्दहेतुत्वान्नयनानन्द इति हेत्वलंकारोऽपराशयेन । नयनानन्दादिको भिन्नो नैको धर्मः । मालेति । माला स्रक् । तद्रूपा योपमा सा तथा । यथा तन्तावेकस्मिन्ननेकपुष्परत्नादियोगस्तथैकस्मिन्नुपमेयेऽनेकोपमानयोगः । यद्वोपमानानां माला पङ्क्तिस्तयोपमा । अनवरतेति । अत्र विमलत्वमभिन्नो धर्मः । मतिरिवेति । अत्र तु माधुर्यादिर्भिन्नो धर्मः । एवंविधेति भणनादेकदेशविवर्तिन्युपमा । यथा—

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥

अत्र सरःश्रीणां नायिकात्वं न समासोक्त्या । विशेषणसाम्याभावात् । तस्मादुपमैकदेशविवर्तिनी वाच्यैव । यथाऽन्यैरुक्ता ।

## अनन्वयः

उपमानान्तरसंबन्धाभावोऽनन्वयः ।

उदाहरणम्—

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः ॥ ४१४ ॥

**विपर्यास उपमेयोपमा तयोः ॥ ९१ ॥**

तयोरुपमानोपमेययोः, परिवृत्तिरर्थात् वाक्यद्वये, इतरोपमानव्यवच्छेदपरा, उपमेयेनोपमा इति उपमेयोपमा ।

उदाहरणम्—

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥ ४१५ ॥

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।**

समेनोपमानेन । उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ ४१६ ॥

---

अनन्वय इति । अयं नोपमा । वास्तवद्वित्वाभावात् । विलासायुधः कामः । लासः क्रीडा । अत्र नितम्बिनी नितम्बिनीवेति विलासा विलासा इवेति भेदाभावादुपमानतयाऽनुपपद्यमानमन्यव्यावृत्तौ लक्षणयाऽवतिष्ठते ।

कमलेति । अत्र पूर्ववाक्यात्सादृश्यावगतौ पुनरिहसादृश्यमुच्यमानमनन्यार्थत्वे सत्यन्यव्यावृत्तिं लक्षयति । अत्र पूर्वत्र चैतयोः सदृशं नान्यदस्तीति भावः ।

उत्प्रेक्षेति । उपमानगतगुणक्रियाभिसंबन्धादुपमानत्वेनोपमेयस्य संभावनमुत्प्रेक्षा । अन्यधर्माणां स्वधर्मिभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षाणामीक्षणमुत्प्रेक्षा । तस्याश्च मन्येशङ्केध्रुवमिवाद्या व्यञ्जकाः ।

उन्मेषमिति । विकासम् । अत्रोपकृता उपमानम् । पद्मलक्ष्मारुपमे-

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ४१७ ॥

इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ।

**ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ९२ ॥**

---

यम् । हर्षो गुणः शत्रूच्छेदेनोपकारिणं प्रति सर्वस्यापि स्यादिति स पद्मलक्ष्म्यामसंभवन्नपि संभावितः । सिद्धरूपत्वे सति द्रव्यधर्मत्वाद्‌ हर्षस्य गुणत्वम् । हर्षगुणयोगात्पद्मलक्ष्म्याः पादलग्नत्वमुत्प्रेक्षितमिति क्रियोत्प्रेक्षा ।

लिम्पतीवेति । अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादिक्रिया निमित्तं गम्यम् । व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात् । न च विषयस्य गम्यत्वं युक्तम् । तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात् । यत्तु व्यापनाद्युत्प्रेक्षाविषयमत्रोचे तच्चिन्त्यम् । व्याख्याविशेषोऽलंकाराणामलंकारसर्वस्वाज्ज्ञेयः । अकालसंध्यामिव धातुमत्ताम् । स्थितः पृथिव्या इव मानदण्डः । भूगतामिव कौमुदीं रम्भामिव भुवं गतामित्यादिषु तूत्प्रेक्षैव । धातुमत्तादेर्हि प्रत्यक्षेणैवाकालसंध्यादिसादृश्यमुपलभ्याकाले संध्या न स्यादित्यसंभाव्यवस्त्वध्यवसायस्य संभावना क्रियते—अकालसंध्यामिवेति । प्रत्यक्षोपलम्भे च न युक्त्यन्तराकाङ्क्षा । उपमानस्यासंभवान्न तूपमा ।

रवेरिवान्धकारश्रीः कालधर्म इवामृतात् ।
अनीतिः पुरुषादस्मादहो कौतूहलं महत् ॥

इतिवदसंभाव्योपमेयधर्मदर्शनाभावादसंभवोपमाऽपि न । भारं वहतीव पुंगवः पयो ददातीव स्त्रीगवीत्यादौ तु हृद्यत्वाभावान्नोत्प्रेक्षा । क्वापि किंचिद्धावामुख उपमाच्छायानिर्वाहे तूपमानस्य प्रकृतेः संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षा । स्व यथा—

यस्याऽऽज्ञया समं पादपद्मद्वयनखद्युतिः ।
मालतीमाल्यतितरां नमद्भूपालमौलिषु ॥

ससंशय इति । यत्राप्रस्तुतेन संशयवता वचसा प्रस्तुतमुत्कर्ष्यते स संदेहोऽलंकारः । अयं च प्रतिभोत्थापितकायश्चमत्कारीति स्थाणुर्वा नरो वेत्यादौ नालंकारता । तत्रोपमेयमुपमानादभित्त्वा भित्त्वा वोच्यते । स

भेदोक्तौ यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याऽऽजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ ४१८ ॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि संदेहः स्वीकृतः । यथा—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥४१९॥

किंतु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इत्युपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२० ॥

---

च निश्चयगर्भो निश्चयान्तः शुद्धश्चेति त्रिधा । तत्र भेदोक्तौ निश्चयगर्भो यथा—अयमिति । अत्राऽऽदावन्ते च संशयः । मध्ये तु तुरगैरित्यादिना भेदोक्तौ निश्चयः ।

इन्दुरिति । अत्र क्व कलङ्क इत्यादिभेदकोक्तिः । आदौ संशयोऽन्ते निश्चयः । किं त्विति । अयं भावः—निश्चितमित्युक्त्या निश्चयस्य न व्यङ्ग्यत्वं किंतु वाच्यत्वम् । व्यङ्ग्यत्वे चाऽऽश्चर्यमिति ।

भेदोक्तेरभावात्संदेहनिर्वाहे शुद्धो यथा—अस्या इति । अत्र कान्तद्युतिरिति युक्तः पाठः । निर्वाहे निर्माणस्यैव श्रूयमाणत्वान्न कान्तिप्रदानस्य विधिः । स्वस्वविशेषणविशिष्टचन्द्रादिरूपो भूत्वैनां चक्रे । यद्वा नैनां पुराणः प्रजापतिरकार्षीत् । किं तु चन्द्रादिः । कान्तिमत्त्वसरसत्वसुकुमारत्वादिधर्मदर्शनात् । यो हि स्वयं कान्तद्युतिः शृङ्गारैकरस पुष्पाकरश्च स एव कान्तिमद्रसवत्सौकुमार्यवद्वस्तु कर्तुं समर्थः । अत एवायमर्थः पूर्वोक्तविशेषणत्रयस्योत्तरार्धविशेषणत्रयेण यथासंख्यं व्यतिरेकोक्त्योपोद्बलितः स्रष्टुः सृष्टिसंबन्धेऽप्यसंबन्ध उक्त इत्यतिशयोक्तिरपि । अत्र च स खलु तुरगैरित्यादिवन्न भेदकोक्तिः । चन्द्रा-

तद्रूपकमभेदो य उपमानोपमेययोः ।

अतिसाम्यादनपह्नुतभेदयोरभेदः ।

समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३ ॥

आरोपविषया इवाऽऽरोप्यमाणा यदा शब्दोपात्ताः, तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् ।

---

दयो ह्येवंविधा इत्यनुक्तेः । उत्तरार्धेन संदेहनिर्वाहाच्च शुद्धत्वम् । तथा–

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।

अत्र ध्वान्तार्थैस्तर्वादि न व्याप्तं किं तु रञ्जितमित्याद्युत्प्रेक्षितं संदेहद्वारेणेत्युत्प्रेक्षाश्रयेण संदेहद्योती नुशब्दः । अन्ये तु नुशब्दः संभावनो त्थापकत्वादुत्प्रेक्षामेवाऽऽहेत्याहुः । अयं मार्तण्ड इत्यत्रोपमेयस्योपमानेनाभेदे पश्चाद्भेदे प्रोच्यमाने यद्यप्यादौ रूपकव्यतिरेकावभासस्तथाऽपि संकरधीर्न कार्या । संदेहस्यैव निर्वाहात् । इतरौ तु च्छायामात्रेण सन्तावप्यसत्कल्पाविति । यद्वा रूपकव्यतिरेकयोरुत्कटतया भेदेन भासनादत्र न संकरः । उत्कटाभेदे हि स स्यात् । तर्हि संसृष्टिः । न । उपकार्योपकारकत्वेन नैरपेक्ष्याभावात् ।

तद्रूपकमिति । रूपयत्येकतां नयतीति रूपकम् । अभेद इति भणनादभेदप्राधान्ये रूपकं स्यादिति लब्धम् । तथा मुखं चन्द्र इत्यादिरूपके चन्द्रेण स्वगुणा लक्ष्यन्ते । तैर्मुखगुणाः । तैरपि मुखम् । ततश्च सामानाधिकरण्यं मुखचन्द्रयोर्गुणद्वारेण ताद्रूप्यादिप्रतीत्योपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिः । अतिसाम्यादिति । साम्यमात्र उपमा । अतिसाम्ये तु रूपकम् । सर्वथाऽतिसाम्ये पुनरप्रस्तुतप्रशंसातिशयोक्ती । अत एव तद्रूपकमभेद एव य इति नावधारणं कृतम् । इदं तत्त्वम्– भेदे ज्ञातेऽपि यत्राभेदप्रतीतिरिवाभेदप्रतीतिरभेदप्रतीतिरेव तत्र क्रमेणोपमारूपकातिशयोक्त्याद्या ज्ञेयाः । यत्र त्वज्ञाते भेदे किलाभेदप्रतीतिरेव तन्मिथ्याज्ञानम् । तत्र न कोऽप्यलंकार. । अनपह्नुतेति । अपह्नुतभेदयोरुपमानोपमेययोस्त्वप्रस्तुतप्रशंसातिशयोक्ती स्याताम् । आरोपविषयो ज्योत्स्नादिः । आरोप्यमाणो भस्मादिः । अविवक्षितमिति ।

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४२१ ॥

अत्र पादत्रये । अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशङ्का न कार्या ।

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।**

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेया इत्येकदेशे विवर्तनादेकदेशविवर्ति । यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥ ४२२ ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् । मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयत इत्येकदेशे विशेषेण वर्तनादेकदेशविवर्ति ।

**साङ्गमेतत् ।**

उक्तद्विभेदं सावयवम् ।

**निरङ्गं तु शुद्धम् ।**

---

तेनाऽऽरोपितावारोपित इति च लब्धम् । ज्योत्स्नेति । चन्द्र एव मुद्राकपालम् । अत्र पादत्रये समस्तवस्तुविषय रूपकम् । चतुर्थपादे त्वपह्नुतिः । परिमलशब्दः स्वरूपार्थः । रसिकत्वमिति । रात्रिरेव कापालिकीति रूपकसमासे कापालिक्याः प्राधान्ये तस्याः सचेतनत्वादन्तर्धानरसिकत्वं घटत इति भावः । एकदेशेति । एकदैकस्मिन्काल ईशः शाब्दत्वात्समर्थो विवर्तो रूपणविधिर्यत्रेति व्युत्पत्तिः । जस्सेति ।

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥

साङ्गमेतदिति । न केवलं मुख्यस्यैव रूपणमपि तु तदङ्गस्यापीति । द्विभेदमिति । पूर्वोदाहरणयोः समस्तवस्त्वेकदेशविवर्तिविषयत्वादित्यर्थः । निरङ्गमिति । निरवयवम् । यत्र केवल एवाङ्गी रूप्यते नाङ्गानि तन्नि-

यथा —

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ४२३ ॥

**माला तु पूर्ववत् ॥ ९४ ॥**

मालोपमायामिवैकस्मिन्बहव आरोपिताः ।

यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ४२४ ॥

**नियतारोपणोपायः स्यादारोपः परस्य यः ।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥**

यथा—

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४२५ ॥

---

रङ्गम् । यथा प्रेमेति । अत्र लताऽङ्गिनी न तु तदङ्गं पत्रादीति शुद्धम् । प्रेमैव लतिकेत्यत्रापि रूपकसमासे मयूरव्यंसकादित्वादेवशब्दलोपः । उपमासमासे तु सर्वत्र व्याघ्रादित्वादिवशब्दलोपः । अत्र तु लतायाः सेचनमानुकूल्यादारोपितधर्म एवेति रूपकस्य साधकं प्रमाणमिति नोपमासंकरः । केवलं शुद्धरूपकमुक्त्वा मालारूपकमाह—सौन्दर्यस्येति । रहांसि रहस्यानि । अत्र प्रियारूप एक एवाऽऽरोपविषयो मुखाद्यङ्गैर्विना तरङ्गिण्याद्यै रूपित इति निरङ्गम् ।

नियतेति । नियतं ध्रुवं तडागादेरारोपणमुपायो यस्य स तथा । यद्वा नियतस्याऽऽरोपणमुपायो यस्य तथा । परस्येति । हंसादेः । विद्वदिति । सती गौरी । दक्षस्तत्पिता । विजयस्यार्जुनस्य प्राग्भावेऽग्रजत्वे भीमः

अत्र, मानसमेव मानसम्, कमलायाः संकोच एव कमलानामसंकोचः, दुर्गाणाममार्गणमेव दुर्गाया मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः,—एवमारोपणनिमित्तो हंसादेरारोपः ।

यद्यपि शब्दार्थालंकारोऽयमित्युक्तम्, वक्ष्यते च, तथाऽपि प्रसिद्ध्यनुरोधादत्रोक्तः । एकदेशविवर्ति हीदमन्यैरभिधीयते ।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥ ३२६ ॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्याऽऽलानत्वाद्यारोपो युज्यते ।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ४२७ ॥

---

सन् भीमः । न तु भीम इव भीमः । उपमात्वप्रसङ्गात् । वैरिञ्चं ब्राह्मम् । अत्र मानसाद्या वाचकाः श्लिष्टाः । एवमारोपणेति । एवमारोपणं निमित्तं यस्याऽऽरोपस्येति । पूर्वं मानसादीनां मानसत्वादिकमारोप्यते ततो हंसाद्यारोप इति परम्परितशब्दार्थः ।

यद्यपीति । अयं भावः—मानसादीनामन्वयव्यतिरेकाभ्यामपरावृत्तिसहत्वे हंसादीनां तत्सहत्व उभयालंकारः परम्परितरूपकम् । उक्तमिति । पूर्वं शब्दश्लेषपुनरुक्ताभासयोः । वक्ष्यत इति । संकरालंकारे । अन्यैरिति । उद्भटाद्यैः परम्परितमेवैकदेशवृत्तिनाम्नोचे । तथा त्वमेव हंस इत्याद्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप इत्यन्ये ।

भेदभाजीति । अश्लिष्टे वाचक इत्यर्थः । यथा—आलानमिति । अत्र लीलोपधानं श्रिय इति परम्परितमप्येकदेशविवर्ति । श्रियः स्त्रीत्वानुक्तेः अत्र दृष्टान्तद्वये श्लिष्टाश्लिष्टशब्दमालया परम्परितरूपकम् ।

इदानीं श्लिष्टाश्लिष्टशब्दं केवलत्वेन परम्परितरूपकं दृष्टान्तद्वयेनाऽऽह—अलौकिकेति । आलोको ज्ञानं तेजश्च । वंशो वेणुरन्वयश्च । अत्र वंशस्य वंशत्वारोपो राज्ञो रत्नारोपणोपायः ।

निरवधि च निराश्रयं च यस्य
स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्ति-
र्जयति चतुर्दशलोकवल्लिकन्दः ॥ ४२८ ॥

इति च, अमालारूपकमपि परम्परितं द्रष्टव्यम् ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ४२९ ॥

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।**

उपमेयमसत्यं कृत्वोपमानं सत्यतया यत्स्थाप्यते, सा त्वपह्नुतिः ।

---

निरवधीति । इह भवान् पूज्यः कूर्ममूर्तिर्विष्णुरित्यतिशयोक्तिः । लोका एव वल्ली । तस्याः कन्दः । अत्र लोकानां वल्लीत्वारोपः कृष्णस्य कन्दत्वारोपणोपायः । वाचकश्चात्र न श्लिष्टो वल्लिकन्द इति । पूर्वत्र तु श्लिष्टः सद्वंश इति । एवं श्लिष्टाश्लिष्टशब्दं मालया द्विधा केवलत्वेन च द्विधेति चतुर्धा परम्परितम् । साङ्गनिरङ्गयोर्मालाकेवलत्वेन प्रत्येकं द्विभेदत्वे चतुर्भेदत्वम् । तदेवमष्टधा रूपकम् । अन्येऽपि प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः सन्ति तेऽन्यतो ज्ञेयाः ।

किसलयेति । यत्र किसलयान्येव कराः करा एव कमलानीत्यादिक्रमेण सर्वेषां मिथः संघटनाद्रशनासादृश्यम् ।

सत्कीर्तिमालतीक्षारमासः पिशुनसंगमः ।

इत्यादौ वैधर्म्येण रूपकम् । तथाऽऽरोपविषयाणां बहुत्वादारोप्यस्यापि बहुत्वम् । यथा कुवलयोल्लासिनो नखेन्दव इत्यादाविन्दोरेकत्वेऽपि नखेषु प्रत्येकमारोपाद्बहुत्वम् ।

निषिध्यान्यदिति । अन्यदुपमानम् । तच्च प्रकृतमप्रकृतं वा । रूपके ह्यारोप्यारोपविषययोरनपह्नवे स्फुटेन रूपेणाऽऽदावेव सादृश्यं प्रतीयते । अत्र तूपमेयस्यापह्नुत्या मुखे पारमार्थिकस्यासत्यत्वं तदितरस्य सत्यत्वं प्रतीत्य निर्वाह आरोप्यारोपविषययोः सादृश्यं प्रतीयते । स्थूलतयाऽपह्नवे विश्रान्तिस्तात्पर्येण तु वाक्यस्य सादृश्य एवेति भावः ।

उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ४३० ॥

इत्थं वा—

बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ ४३१ ॥

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः । एवं वा—

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४३२ ॥

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः । एवमियं भङ्ग्यन्तरैरप्यूह्या ।

---

अवाप्त इति । अत्र कलङ्कनिशे प्रकृते । द्वयोरपि वर्ण्यत्वेन प्रस्तुतत्वात् ।

बतेति । अत्र भृङ्गेति प्रकृतम् । परं त्वप्रकृतम् । मन्ये छलाद्याः शब्दा असत्यवाचकाः ।

रोमेति । अत्र रोमावलिवपुरिति शब्दो वस्त्वन्तराभिधायी अपह्नवस्य कारणम् । भङ्ग्यन्तरैरिति । एवं यथा—

आरुरोह चितामेष मालतीविरहादलिः ।
न किंशुकस्य कुसुमे वर्तते जीवितेश्वरि ।

अत्र प्रागारोपः पश्चादपह्नवः । इदं ते केनोक्तमित्यत्रान्त आरोपः पूर्वोऽपह्नवः । स्थानद्वयेऽपि नेदं कुसुमं कटकं वा किं तु चिता स्मरचक्रं चेत्यादि । भङ्ग्यन्तराणि भणितिविशेषाः कदाचित्कथंचित्किमपि काव्ये निविशन्त इत्यर्थः ।

श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत् ॥९६॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः।

उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ४३३ ॥

अत्राभिधाया अनियन्त्रणाद्द्वावप्यर्कभूपौ वाच्यौ।

परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात्, न तु विशेष्यस्य सामर्थ्यादपि यदप्रकृतस्यार्थस्याभिधानम्, सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः। उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंसं तीए स को वि उल्लासो।
जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ ४३४ ॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति।

---

एकार्थेति। न गोशब्दवदनेकार्थानाम्। उदयेति। उदयः समृद्धिरपि। दिङ्न्यायमार्गस्तत्स्थाः प्रजा वा। मालिन्यं कलङ्कोऽपि। निद्राऽऽलस्यमपि। क्रिया धर्माद्या अपि। स्वैरा अन्यायतोऽपि। तेजः प्रतापोऽपि। विभाकरो नाम राजा। वक्ष्यमाणार्थसूचनाभिप्रायेणोक्तौ न श्लेषः। द्वयोरर्थयोः प्रकृतत्वेन वक्तुमनिष्टत्वात्। किं तु वस्तुध्वनिरेव। यथा—यान्ति न्यायप्रवृत्तस्येति। अत्र प्रकृतत्वेनार्थो न्यायनिष्ठपुंवृत्तिः। सूचनाद्यभिप्रायेण तु रामादिवृत्तिः।

भेदकैरिति। उपमेयस्य विशेषणैः। परस्योपमानस्योक्तिः परोक्तिः। विशेष्यस्येति। उपमेयस्य। तस्य श्लिष्टत्वे श्लेषप्राप्तेः। लहिऊणेति।

लब्धा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।
जयलक्ष्मीस्तव विरहे न भवतु दुर्बला ननु सा ॥

तव विरहेण हेतुना सा दुर्बला भूयात्। णं नन्वर्थे। अत्र विशेषणानि कान्तया सह तुल्यानि। न तु विशेष्यं जयलक्ष्मीरिति रूपम्।

---

१—‘लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा’ ॥

## निदर्शना ।

अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥ ९७ ॥

निदर्शनं दृष्टान्तकरणम् ।

उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४३५ ॥

अत्र, उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।

यथा वा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ४३६ ॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव
यस्ते गुणान्गदितुमुद्यममादधाति ॥ ४३७ ॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ।

---

अस्यां विशेषणसाम्यादप्रस्तुतस्य प्रस्तुतविशेषकत्वेन प्रतीतिः । अतो विशेषकत्वाद्व्यवहारसमारोपः । रूपसमारोपे तु रूपकं स्यात् । उपमेयस्यानुक्तौ समानवस्तुन्यासः समासोक्तिरिति तु वामनः । तन्मतेऽप्रस्तुतप्रशंसाऽन्यथा ज्ञेया ।

क्व सूर्येति । अल्पमत्याऽर्कवंशवर्णनमसंभवद्दार्ष्टान्तिकदृष्टान्तवस्तुनोरौपम्यं कल्पयति । निरपेक्षवाक्यार्थयोर्बिम्बप्रतिबिम्बत्वे दृष्टान्तस्य लक्षणात् । अत्र प्रकृतवाक्यार्थे वाक्यार्थान्तरारोपात्सापेक्षत्वे संबन्धानुपपत्तिमूला निदर्शना न दृष्टान्तः । एषा वाक्यार्थेन निदर्शना ।

पदार्थेन सा यथा—उदयतीति । तत्सदृशीमिति । गजलीलातुल्याम् । दोर्भ्यामिति । तरङ्गवती नदी । तद्भुजङ्गोऽब्धिः ।

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

क्रिययैव स्वस्वरूप—स्वकारणयोः संबन्धो यदवगम्यते साऽपरा निदर्शना ।

यथा—

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ ४३८ ॥

अत्र पातक्रियया पतनस्य, लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च संबन्धः ख्याप्यते ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ ९८ ॥**

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याऽऽक्षेपोऽप्रस्तुतप्रशंसा ।

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९९ ॥**

---

स्वस्वेति । स्वश्च पतनात्मक्रियायाः स्वभावः । स्वहेतुश्च तस्या एव कारणमुन्नतपदाप्तिरूपम् । तयोरन्वयः कार्यकारणत्वेन घटना । अपरेति । उद्भटोक्ता ।

उन्नतमिति । अत्र ममेवान्यस्यापि लघोरुच्चैःपदाप्तिः पातान्तेति कारणकार्ययोरन्वयेनोपमानोपमेयत्वाक्षेपे संभवद्वस्तुसंबन्धा निदर्शना स्वसिद्धये वाच्येनोपमानोपमेयभावरूपार्थान्तरमाक्षिप्यत इति । पातक्रिययेति । पततीतिरूपया । पतनस्येति । पतेदित्येवमुल्लिखितस्योच्चैःपदाप्तिरूपकारणकार्यस्वरूपस्य । कारणस्येति । उच्चैःपदाप्तिरूपस्य ।

अप्रस्तुतेति । इहाप्रस्तुतस्य स्तुतिनिन्दासाम्यैर्वर्णनादृष्टौ प्रशंसा । अत्र वर्णना न स्तुतिः । तच्चाप्रस्तुतमप्रस्तुत्वादेव वक्तुमयुक्तं सत्प्रस्तुतपरतयोच्यमान युक्तं स्यात् । प्रस्तुतपरता च कार्यकारणभावसामान्यविशेषभावसारूप्यसंबन्धैः स्यात् । सैवेति । या प्रशंसा कविभिरप्रस्तुतस्य क्रियते सा प्रस्तुतपरा सैवाप्रस्तुतप्रशंसैव । तदन्यस्येति । कार्ये प्रस्तुते तदन्यस्य कारणस्येत्यादिक्रमेण चतुष्टयस्य तथा तुल्ये राजादौ प्रस्तुते तदन्यस्य तुल्यस्य तद्वचो भणनमिति पञ्चधात्वम् । अत्र वाच्यस्य परार्थे स्वसमर्पणमिति लक्षणेन लक्षणा ।

तदन्यस्य कारणादेः । क्रमेणोदाहरणानि—

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४३९ ॥

अत्र—प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् ।

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४४० ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः—इति कारणे प्रस्तुते कार्यमुक्तम् ।

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥ ४४१ ॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

---

नितरामिति । अग्रेऽपि त्वं कृशा चिन्तया भृशं भवसि यतः । हसितेनेति । तया तथा हसितं यथा त्वया त्यक्ता सती मरिष्यामीति कारणं सूचितम् ।

कुमारेति । कुमारवरैः । राजशुको वरशुकः । त्वां यात्रोद्यतं ज्ञात्वा द्विषस्ते नष्टा इति प्रस्तुतो हेतुरूपोऽर्थः । शुकवृत्तान्तस्त्वप्रस्तुतः कार्यरूपः प्रस्तुतार्थे स्वात्मानमर्पयतीत्यर्थः । कारणवत्कीरवृतान्तरूपकार्यस्यापि वर्ण्यत्वेन प्रस्तुतत्वे कार्यद्वाराऽऽत्मभङ्ग्यन्तरेण कारणस्योक्तावत्र पर्यायोक्तालङ्कारः । कारणापेक्षया कार्यस्यातिचारुत्वमिति कार्यमेवोच्यते । कारणकार्ययोः प्रस्तुताप्रस्तुतत्वेऽप्रस्तुतप्रशंसा ।

मुखादिति । मुखमाकृतिः । एतस्या आकृतेरिदमल्पमित्यर्थः । मुखादित्यपेक्षितक्रियमपादानम् । अत्राम्भोबिन्दौ मणिधीर्विशेषः ।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान्स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥ ४४२ ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत्त्वमेव श्लाघ्यः—इति विशेषे प्रकृते सामान्यमुदितम् ।

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात्तुल्यस्य ह्याक्षेपे हेतुः । क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ४४३ ॥

येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥४४४॥

---

कृष्णमिति । कृष्णेन नरकासुरे हते तन्मन्त्रिणस्तन्मित्रं प्रत्युक्तिः ।

पुंस्त्वादिति । पुंस्त्वं विक्रमः पुंभावो वा । अधः पातालं नीचतया चलनं च । प्रणयनं याच्ञा । न महानपि वामनः स्वल्पश्च । पुरुषोत्तमः सन्नरोऽपि । अथ साधुवृत्तं वाच्यत्वात्प्रस्तुतम् । तत्र चाभिधाया नियन्त्रणान्नात्र श्लेषः । विष्णुप्रपत्तिस्तु शब्दोत्थाद्ध्वनेरेवेति नेहाप्रस्तुतप्रशंसेति चेन्न । साधुवृत्तस्य वाच्यत्वासंभवात् । न ह्युत्कृष्टोऽपि पुमान् विष्णुवद्वस्तुतया विश्वमुद्धर्तुमर्हति । आक्षिप्यमाणस्य तु तस्य गुणवृत्त्या तद्वर्णनमविरुद्धम् । तस्मात्तत्र विष्णुवृत्तं वाच्यमप्रस्तुतं च । तेन च प्रस्तुत साधुवृत्तमाक्षिप्यत इति न ध्वनिः । स ह्यप्रस्तुताक्षेपरूपः स्यात् ।

येनासीति । जडधामता शीततेजस्ता मूर्खाश्रयता च । अत्र पूर्वश्लोके

आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृत च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ४४१ ॥

इयं च काचिद्वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—

अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४४६ ॥

क्वचिदध्यारोपेणैव । यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥४४७॥

---

पुरुषोत्तमवद्विशेष्यमर्केन्दुरूपं न श्लिष्टम् । विशेषणश्लिष्टत्वे तु समासोक्तिस्तुल्यान्तराक्षेपहेतुः । पूर्वत्र तु श्लेषः । द्वयोरपि श्लिष्टत्वात् ।

इयं चेति । सादृश्यहेतुकाप्रस्तुतप्रशंसा । अब्धेरिति । आहो इति यद्यर्थे । कल्पः शक्तः । अत्राब्धावपीदृशस्यार्थस्य संभवान्नैकान्तेन कस्यापीश्वरस्याऽऽक्षेपाकाङ्क्षा । एवं पुंस्त्वादित्यत्राऽऽदायेत्यत्र च गम्यार्थानध्यारोपः । येनासीत्यत्र तु चन्द्रसंबोधनादेरर्थस्यासंभवादपकारिभ्योऽप्यर्थेच्छोर्दरिद्रस्याध्यारोपः ।

कस्त्वमिति । अत्र कथयामीत्येतदाह—श्रूयमाणं निर्वेदकृदपि तवानुबन्धात्कथ्यते । कस्मादिति वैराग्ये हेतुप्रश्नः । कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथंकथमपि निरूप्यते । वामेनेति कुकुलादिनोपलक्षितः । वट इति फलदानशून्यच्छायामात्रकरणादेव गर्विष्ठः । छायाऽपीति । श्मशानाग्निदग्धपल्लवादिस्तरुविशेषो हि शाखोटकः । मार्गः सतां पन्था अपि । अत्र वृक्षेण सहाचेतनत्वादुक्तिप्रत्युक्त्यसंभवे श्रीमत्पुरुषसेवया खेदवान् दरिद्रो मनस्वी कश्चित्पुरुषः प्रतीयमानतयाऽध्यारोप्यते ।

क्वचिदंशेष्वध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिर्किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः॥ ४४८ ॥

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः । कर्णचापलं तु हेतुः । मदः प्रत्युत सेवने निमित्तम् ।

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥ १०० ॥**
**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।**
**विज्ञेयाऽतिशयोक्तिः सा**

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका । यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ४४९ ॥

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम् ।

यच्च तदेवान्यत्वेनाध्यवसीयते, साऽपरा । यथा—

---

सोऽपूर्व इति । रसनाविपर्ययो गजानां शापजोऽलीकवचोऽपि । चापलं खलवचः श्रवणसांमुख्यमपि । शून्यकरत्वमदातृत्वमपि । न हेतुरिति । तेन तत्रार्थे प्रतीयमानस्य कस्यापि कुस्वामिसेवकस्याऽऽरोपः कार्यः । चापलमसेवने मदश्च सेवने हेतुः । प्रस्तुताप्रस्तुतयोर्वाच्यत्वे विशेष्यस्यापि श्लिष्टत्वेऽर्थश्लेषः । विशेषणानां श्लिष्टत्वेऽप्रस्तुतस्य वाच्यत्वेऽन्यस्य तु गम्यत्वे समासोक्तिः । अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसेति विवेकः ।

कमलमिति । अत्राभेदातिशयोक्तिरित्येको भेदः । मुखादेः कमलादिरूपतयाऽध्यवसाने प्रथमो भेदः । कमलमनम्भसीत्यादियोगे त्वसंबन्धे संबन्धरूपातिशयोक्तिः । तथा विरोधालङ्कारोऽपि । तदेवेति । प्रस्तुतभिन्नमन्यत्वेन भेदेनाध्यवसीयते ।

अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥ ४५० ॥

यद्यर्थस्य यदिशब्देन चेच्छब्देन वोक्तौ यत्कल्पनम् ( अर्थादसंभविनोऽर्थस्य ) सा तृतीया । यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ४५० ॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी । यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ ४५२ ॥

---

अण्णमिति ।

अन्यल्लटभत्वमन्या काऽपि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ।

रेखा मर्यादा। वत्तणं वक्रं वर्तना वा ।अत्रान्यल्लटभत्वमित्यभेदेऽप्यन्यत्वेन भेदोक्तिरिति द्वितीयः । अत्राभेदे भेद इति वाक्योपपत्तये वास्तवलटभत्वस्य सातिशयं कविकल्पितं लटभत्वं कल्पनीयम् । उत्तरार्धे सबन्धेऽप्यसंबन्धरूपातिशयोक्तिः ।

राकेति । राकेन्दोर्निर्लक्ष्मत्वस्य बहिरसंभवेऽपि कविना संभवद्रूपतयोक्तावास्यं निरुपममित्यर्थः। एषाऽन्याऽऽद्योपमेति रुद्रटः। अद्भुतोपमेति दण्डिमुख्याः । अयं संबन्धेऽप्यसबन्धरूपस्तृतीयः। क्वचिदसंबन्धे संबन्धो यथा पुष्पप्रवालोपहितमिति । अत्रासंबन्धसंभावनया संबन्धः ।

हृदयमिति । अत्र कुसुमशराधिष्ठानं कार्यम् । त्वद्दर्शनं तु कारणम् । तयोर्विपर्यासः कृतः प्राक्कार्यं पश्चात्कारणमिति । विपर्ययस्तुल्यकारणत्वेनापि स्यात् । यद्वा यथौचित्यमौचिती तथा पौर्वापर्यं पौर्वापरी। तस्यां आ ईषद्विपर्ययस्तुल्यकालत्वम् । तत्रातिशयोक्तिर्यथा—

अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
अयमायातः कालो हन्त हताः पथिकगेहिन्यः ॥

---

१—अन्यत्सौकुमार्यमन्यैव च काऽपि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव च न भवति ॥

प्रतिवस्तूपमा तु सा ॥ १०१ ॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

साधारणो धर्म उपमेयवाक्ये चोपमानवाक्ये च कथितपदत्वस्य दुष्टतयाऽभिहितत्वाच्छब्दभेदेन यदुपादीयते, सा वस्तुनो वाक्यार्थस्योपमानत्वात्प्रतिवस्तूपमा । यथा—

देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ४५३ ॥

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ ४५४ ॥

इत्यादिर्मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्राप्यनुसर्तव्यम् ।

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १०२ ॥

एतेषां साधारणधर्मादीनाम् । दृष्टोऽन्तः ( निश्चयो ) यत्र स दृष्टान्तः ।

---

प्रतीति । वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात् केवलं काव्यसमयात् पर्यायान्तरेण पृथङ्निर्देशः । अयं भावः—सामान्यधर्मस्येवाद्यनुक्तौ सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे शुद्धसामान्यरूपत्वे प्रतिवस्तूपमा । सामान्यधर्मस्य बिम्बप्रतिबिम्बभावे तु दृष्टान्तः । देवीति । अत्र परिवारपदत्वं साधारणो धर्मः परिभोगयोग्यमिति पर्यायेण भिन्नशब्देनोक्तः । परिवारपदत्वपरिभोगयोग्यत्वयोरेकार्थत्वात् ।

प्रकृतिरेवेति । इदमेकं प्रकृतम् । शेषं त्वत्रोपमानभूतम् । एवमिति । यथा हरवन्न विषमदृष्टिरित्यादौ व्यतिरेके व्यतिरेकमाला । अत्रैकस्य बहुभ्यो भेदेनोक्तिः । अस्यामिवाद्यभावेऽपि प्राकरणिकत्वालोचनयौपम्यावगतिः ।

दृष्टान्त इति । अत्र पुनःशब्दः पूर्वस्माद्विशेषकः । विशेषश्च बिम्बप्रतिबिम्बभाव एव । सर्वेषामिति । न तु प्रतिवस्तूपमायामिव साधारणधर्मस्यैव द्विः प्रयोगः किं तूपमेयादेरपि । विशेषस्य सामान्येन समर्थने

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ४५५ ॥

एष साधर्म्येण । वैधर्म्येण तु—

तवाऽऽहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥४५६॥

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥१०३॥**

प्राकरणिकाप्राकरणिकानाम्, अर्थादुपमानोपमेयानाम्, धर्मः क्रियादिः एकवारमेव यदुपादीयते, तदेकस्थस्यैव समस्तवाक्यदीपनाद्दीपकम् ।

यथा—

किविणाणँ धणं णाआणँ फणमणी केसराइँ सीहाणं ।[1]
कुलवालिआणँ थणआ कुत्तो छिप्पन्ति अमुआणम् ॥ ४५७ ॥

---

त्वर्थान्तरन्यासः । त्वयीति । यथा कुमुदिन्याश्चन्द्रालोके तद्गुणपक्षपातित्वेन कुमुदं विकसति तथा त्वद्दर्शने गुणपक्षपातात्तस्या मन इति सर्वप्रतिबिम्बनम् । तवेति । अत्र विशरारुतागमनादीनां स्थिरत्वाधानादिवैधर्म्येण प्रतिबिम्बनम् । दृष्टान्ते साधारणधर्माणां वस्तुवृत्त्या ह्यभेद एव । परं शब्दान्तरेणोक्तत्वात्प्रतिबिम्बने भेदाभास इति प्रतिबिम्बने नियतनिष्ठतया तेषां साधारणता न स्यादिति नाऽऽशङ्क्यम् ।

एकस्थस्यैवेति । अयं भावः—एकत्र स्थितः क्रियादिः समानो धर्मः प्रसङ्गेनान्यत्रोपकरोतीति दीपसाम्याद्दीपकम् । अत्र प्रकृताप्रकृतत्वयोर्वास्तवत्वादर्थानामौपम्यं सत्यम् । परं गम्यं न श्रौतम् । अतो नोपमा । तुल्ययोगितायां तु काल्पनिकौपम्यम् । शुद्धानामेव प्रकृतानामप्रकृतानां वा तत्र ग्रहणं न पुनर्युगपदुभयग्रहणमिति । किविणेति । कुलवालाः प्रकृताः । शेषमप्रकृतम् । अत्र छिप्पन्तीति क्रिया समानो

---

१—' कृपणानां धनं नागानां फणमणिः केशराश्च सिंहानाम् ।
कुलपालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥ '

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम्। यथा—

स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक्।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ४५८ ॥

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्।**

पूर्वेण पूर्वेण वस्तुनोत्तरमुत्तरं चेदुपक्रियते, तन्मालादीपकम्।

यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाऽऽकर्णय येन येन सहसा यद्यत्समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥४५९॥

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥१०४॥**

नियतानां प्राकरणिकानामेवाप्राकरणिकानामेव वा। क्रमेणोदाहरणम्।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥ ४६० ॥

---

धर्मः। स चान्ते निर्दिष्ट इत्यन्तक्रियादीपकम्। आदिमध्यक्रियादीपके स्वेनोह्ये।

स्विद्यतीति। अत्र वधूरूपं कारकमन्तस्थं बहुषु क्रियासु वर्तत इत्यन्तकारकदीपकम्। आदिमध्यकारकदीपके ज्ञेये। तथा क्रियायाः सर्वत्र वाक्ये प्रयोगात्तद्दीपकत्वे सर्वं वाक्यं सालङ्कारं स्यादतो न क्रियामात्रं दीपकं किंतु भूयोभिः सजातीयैः कारकैः संबन्ध्यमानम्। तस्य चानेकेष्वर्थेषु साधारणतया संबन्ध्यमानस्य बलादौपम्यगर्भत्वम्।

सङ्ग्रामेति। अत्राऽऽसादनक्रियानिमित्तं दीपनं दीपनविषयाणामुत्तरोत्तराश्रितत्वेन कृतम्। तथा कोदण्डाद्यैः शरादीनां क्रमेणोत्कर्षो विहितः एकावली तु पूर्वस्योत्तरोत्तरेणोत्कर्षहेतुत्वे स्यादिति विवेकः।

पाण्डु क्षाममिति। अत्र सर्वाणि प्रकृतानि। क्षेत्रियरोगो राजयक्ष्माऽन्यस्मिन् क्षेत्रे देहान्तरे चिकित्स्यः। पक्षे तूपपतिविषयोऽनुरागः। आवेदयतीति सकृद्धर्मः।

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाऽऽननस्य ॥ ४६१ ॥

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।**

अन्यस्योपमेयस्य । व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते नित्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥ ४६२ ॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत्केनचिदुक्तम्, तदयुक्तम् ।

अत्र यौवनगतास्थैर्यस्याऽऽधिक्यं हि विवक्षितम् ।

**हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥**
**शब्दार्थाभ्यामथाऽऽक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत् ।**

व्यतिरेकस्य हेतुरुपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम्, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वाऽनुक्तिरित्यनुक्तित्रयम्, एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते,

---

कुमुदेति । अत्र कुमुदादीनि सर्वाण्यप्रकृतानि । दृशोर्मुखस्य च वर्ण्यत्वात्प्रकृतत्वम् । का इति निन्दारूपः पूर्वार्धे, प्रतिहतत्वरूपश्चोत्तरार्धे सकृद्धर्मः कुमुदादीनां तुल्ययोगिताहेतुर्निबद्धः ।

आधिक्यमिति । अर्थादुपमानात् । तदयं सूत्रार्थः—य उपमानादुपमेयस्य व्यतिरेकः स एव व्यतिरेकोऽलङ्कारः । क्षीण इति । यथेन्दुः क्षीणोऽपि वर्धते तथा तारुण्यमपीति चित्ते कृत्वा काऽपि रुष्टा सती प्रियेण ज्ञाताशयेनोच्यते । प्रिये यातं क्षीणं यौवनं भूयो न वर्धत इति मा कुपः ।

केनचिदिति । रुद्रटेन । तन्मताश्रयेणात्र चन्द्राद्यौवनं न्यूनगुणम् । शशिवैलक्षण्येन गतस्य तस्यापुनरागमात् । अलङ्कारसर्वस्वेऽपीत्थमुक्तम् । विवक्षितमिति । यौवने यादृगस्थैर्याधिक्यं न चन्द्रे तादृगिति भावः । विपरीतोऽतिरेकोऽधिकत्व व्यतिरेकः । अधिकत्ववैपरीत्यं च हीनत्वम् । अनाधिक्यमित्यर्थः । एवं रुद्रटोऽपि मानितः । इत्थमभणनं चोहकानामेवात्राधिकार इति ज्ञापनार्थम् । तयोर्द्वयोरिति । युगपदिति शेषः । एकतरस्य, क्रमेणानुक्तावनुक्तिद्वयम् । द्वयोरुपमेयोपमानयोरुत्कर्षापकर्षहेत्वोर्युगपदनुक्तावेकानुक्तिः । मिलितमनुक्तित्रयम् । शब्देनेति । इवाद्यथा·

आर्थेन च क्रमेणोक्तौ चत्वार एव भेदाः, आक्षिप्ते चौपम्ये तावन्त एव, एवं द्वादश। एते च श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः। क्रमेणोदाहरणम्—

असिमात्रसहायस्य प्रभूतारिपराभवे।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः॥ ४६३॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यद् भेदत्रयम्। एवमन्येष्वपि द्रष्टव्यम्। अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम्।

असिमात्रसहायोऽपि प्रभूतारिपराभवे।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः॥ ४६४॥

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम्।

इयं सुनयना दासीकृततामरसश्रिया।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम्॥ ४६५॥

अत्रेवादि—तुल्यादि—पदविरहेणाऽऽक्षिप्तैवोपमा।

---

दिनेवार्थवतिरूपेण च। अर्थेनेति। तुल्यार्थशब्दतुल्यार्थवातिप्रतिपादितेन क्रमेण। यदाऽर्थशब्दः सामर्थ्यार्थस्तदाऽर्थेन सामर्थ्यरूपेण क्रमेणेति व्याख्या। आक्षिप्त इति। इवतुल्याद्यभाव इत्यर्थः। एते चेति। श्लेषेऽपि द्वादश भेदा इत्यर्थः। त्रिरष्टेति। त्रीन्वारानष्ट। चतुर्विंशतिः।

असीति। अत्र तुच्छत्वमुपमानगं गर्वहेतुर्निकर्षकारणम्। महाधृतित्वमुपमेयगमुत्कर्षकारणं स्मयाभावहेतुः। अतो युगपद्धेत्वोरुक्तिः। तथाऽत्रैव

इतरस्य जनस्येव न स्मयोऽस्य महाधृतेः।

इति पाठे महाधृतित्वस्योपमेयोत्कर्षहेतोरुक्तिः।

तुच्छस्यान्यजनस्येव न स्मयोऽस्य विभाव्यते।

इति पाठे तुच्छत्वस्योपमानापकर्षहेतोरुक्तिः। तथा—

इतरस्य जनस्येव न स्मयोऽस्य विभाव्यते।

इति कृते तूत्कर्षापकर्षहेत्वोर्युगपदनुक्तिः। तदाह— अत्रैवेति। एवं शाब्दौपम्ये चतुर्भेदा। एवमन्येष्वितिं, अर्थादावपि चतुष्कपञ्चके दर्शितदृष्टान्तादन्यत्रिभेदी स्वेनोह्या।

अर्थसाम्ये यथा—असीति। अत्राप्युत्कर्षापकर्षहेत्वोर्द्वयोरुक्तिः। इहार्थौपम्ये पूर्वत्र शाब्दौपम्ये व्यतिरेकस्याऽऽद्यो भेदः। शेषात्रिभेदी स्वेनोह्या।

इयमिति। अत्रोपमेयोपमानगमकलङ्कत्वकलङ्कित्वरूपमुत्कर्षापकर्ष-

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥

अत्रेवार्थे वतिः। गुणशब्दः श्लिष्टः। शाब्दमौपम्यम्॥ ४६६॥

अखण्डमण्डलः श्रीमानपश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः॥ ४६७॥

अत्र तुल्यार्थे वतिः। कलाशब्दः श्लिष्टः।

मालाप्रतिवस्तूपमावन्मालाव्यतिरेकोऽपि संभवति, तस्यापि भेदा एवमूह्याः। दिङ्मात्रं चोदाह्रियते। यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥ ४६८॥

अत्र तुल्यार्थे वतिः। विषमादयश्च शब्दाः श्लिष्टाः।

नित्योदितप्रतापेन त्रियामामीलितप्रभः।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः॥ ४६९॥

---

कारणमुक्तम्। अयमाक्षिप्तौपम्ये व्यतिरेकस्याऽऽद्यो भेदः। यथा वा क्षीणः क्षीणोऽपि शशीति। अत्र यौवन उपमेये चन्द्रे चोपमाने क्रमेणास्थैर्याधिक्यहानी उत्कर्षापकर्षकारणे उक्ते। अयमाद्यो भेदः। अनुक्तौ त्रिभेदी स्वा यथा—

नित्योदितप्रतापस्य तपनेन तुला न ते।

अत्र नित्योदितप्रतापत्वमुपमेयोत्कर्षहेतुः। यथा वा नियतिकृतेति। अत्रोपमेयोत्कर्षहेतुः। क्षणोदितप्रतापेनेति पाठ उपमानापकर्षहेतुः।

महीमण्डलमाणिक्यप्रतापेन तुला न ते।

इति पाठे तूत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्तिरित्याक्षिप्तौपम्ये चतुर्भेदी।

जितेन्द्रियेति। अत्र विद्यावृद्धनिषेवा गाढगुणोत्कर्षे हेतुः। भङ्गुरगुणत्वनिकर्षे हेतुर्नोपात्त इत्युपमानगनिकर्षहेत्वनुक्तौ शाब्दौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदः।

अखण्डेति। अयमुपमानगतनिकर्षहेत्वनुक्तावार्थौपम्ये श्लेषव्यतिरेकस्य तृतीयो भेदः।

हरेति। वृषौ धर्मदानवौ। अत्र हरेण तुल्यं वर्तत इत्यादि क्रमेण तुल्यार्थे वतिः। तेनार्थौपम्यम्। अयमुभयानुक्तौ श्लेषव्यतिरेकस्यान्त्यो भेदः। शेषं द्वयं स्वयं ज्ञेयम्।

नित्योदितेति। अत्रोदितप्रतापतामीलितप्रभतात्मनोरुपमेयोपमानगतो-

अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्टः । यथा वा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं
बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र
तृष्णां जहार मधु नाऽऽननमङ्गनानाम् ॥ ४७० ॥

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते । एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः संभवन्ति । तेऽपि अनयैव दिशा द्रष्टव्याः ।

---

त्कर्षापकर्षहेत्वोरुक्तिरित्युभयोपादाने श्लेषव्यतिरेकान्त्यचतुष्कस्याऽऽद्यो भेदः । भास्वतैव भास्वतेति भास्वरत्वारोपादेकत्वप्रतिपत्तिरिति श्लिष्टता ।

स्वच्छेति । समुल्लसितं प्रतिबिम्बितमिन्दुबिम्बं यत्रेति तथा मधु तृष्णां जहार न तु मुखमिति । अत्र तृष्णाहरणाहरणयोः कारणे नोपात्ते इति । द्वयानुक्तिरित्युभयानुक्तौ श्लेषव्यतिरेकान्त्यचतुष्कस्यान्त्यो भेदः । द्विभेदी स्वेनोह्या । एवमन्येष्वपि द्रष्टव्यमित्युक्त्या प्रतिचतुष्कमेकः कश्चिद्भेदो वाच्य इति स्थितेऽपि यद्ग्रन्थकृता हरवदिति स्वच्छात्मतेति दृष्टान्तद्वयमूचे तदेकत्र व्यतिरेकमालात्वमन्यत्रार्थाश्लिष्टत्वं विशेषं ज्ञापयितुम् । अत एव यथा वेत्युक्तम् । पृथगिति । यथोद्भटकुमारसंभवे गौरीस्तुतौ—

या शैशिरी श्रीस्तपसा मासेनैकेन विश्रुता ।
तपसा तां सुदीर्घेण दूराद्विदधतीमधः ॥

तपो माघमासोऽपि । एकेनेति सुदीर्घेणेति हेतुद्वयोक्तिः । अत्र तपसेति श्लिष्टोक्तियोग्यं पदं पृथगूचे । एवं यथा वा—

सचक्रानन्दनाऽप्येष न तुल्यस्तपनस्तव ।
स शू(सू)रः संज्ञया येन सशूरः सुभटैर्भवान् ॥

अत्रापि हेत्वोरुक्तिः । इवाद्यभावादत्र पूर्वत्राप्याक्षिप्तौपम्ये द्वयोक्तौ श्लेषव्यतिरेकाद्यो भेदः । अत्रापि श्लिष्टोक्तियोग्यपदस्य पृथग्भावः । अन्येऽपीति । एकादश भेदाः । नन्वत्र श्लेषोपकाराच्चमत्कारी व्यतिरेक इति तयोरङ्गाङ्गिभावे संकरः स्यात् । न । द्वययोगे हि संकरः । न चात्र द्वयमस्ति । एवंविधश्लेषस्यैव व्यतिरेकापरनामत्वात् । परं व्यतिरेकरूपमंशमाश्रित्य व्यतिरेकप्रभेदतया श्लेषव्यतिरेकरूपतयोक्तम् । ये

निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥ १०६ ॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्याशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विविध आक्षेपः । क्रमेणोदाहरणम्—

ऍ एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा ।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥ ४७१ ॥

---

तु श्लिष्टोक्तियोग्यपदस्य पृथगुपादाने भेदास्तत्र श्लेषगन्धोऽपि नास्ति । एकस्य पदस्य द्विरुपादानात् ।

निषेध इति । उक्तविषयत्वे वक्तुमिष्टत्वं कथम् । सत्यम् । उक्तमप्यादौ वक्तुमिष्टमेव । अशक्येति । वक्ष्यमाणविषयस्य लक्षणम् । अतिप्रसिद्धत्वमुक्तविषयम् । प्रस्तुतोऽर्थः प्रस्तुतत्वादेव विधानार्हो न निषेधार्ह इति स्थिते निषेधो यः स नोपपद्यत इति निषेधो निषेधाभासः संपन्नः । तस्यैतस्य करणं प्रकृतत्वेन विशेषणोक्त्यर्थम् । अन्यथा गजस्नानतुल्यता स्यादित्याह—निषेध इवेति । द्विविध इति । उक्तविषयत्वेन कैमर्थक्यपरमालोचनमाक्षेपः । वक्ष्यमाणविषयत्वेनाऽऽनयनरूपमागूरणमाक्षेप इत्यर्थभेदादाक्षेपौ द्वौ । विशेषश्चात्र शब्दानुपात्तत्वाद्रम्यः । तत्राऽऽद्ये भेदे कथनस्यैव निषेधः । द्वितीये तु क्वचिद्वस्तुनः क्वचिद्वस्तुकथनस्य निषेधः ।

ए एहीति ।

अयि एहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथ वा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

कार्यमन्यासक्तेऽपि त्वय्यनुरागरूपमत्र न भणिस्समिति भणनानिषेधादिति लभ्यते । यत्तस्यास्त्वद्वियोगे सा साऽवस्था जायते या वक्तुमशक्या । इष्टोऽर्थो निषेधमिषेणोत्कार्षित इति भावः । कामावस्थाविशेषेण च वक्ष्यमाणतया सूचनमित्याद्यो भेदः ।

---

१—' ए एहि किमपि कस्या अपि कृते निष्कृप भणामि अलमथ वा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥ '

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ४७२ ॥

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥ १०७ ॥

---

किमनेनोक्तेनेति । कैमर्थक्यपरमालोचनं न ब्रूमह इति निषेधः । तद्द्वारेण तस्यास्त्वद्वियोगे ज्योत्स्नादिस्फुलिङ्गव्यापारे हेतुः स्यादिति स्फुटोऽयमर्थः । अन्यत्रापि दृष्टत्वात् । स्फुलिङ्गव्यापाराणामानन्त्यात्मको विशेषः किमनेनोक्तेनेति सामान्येनोपक्रान्तो न ब्रूमह इति संविज्ञानपदनिबन्धनतया निर्वाहित इत्युक्तविषयता । अत्र वस्तुनिषेधः ।

प्रसीदेति ब्रूयादिदमसति कोपे न घटते ।

इत्यादौ वस्तुकथननिषेधः । तथा हि भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेनावश्यस्वीकार्यत्वं विशेषः । तदेवमाक्षेप इष्टोऽर्थस्तस्य निषेधो निषेधस्यानुपपत्त्याऽलीकत्व विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते । न केवलमिष्टनिषेधाभास आक्षेपोऽनिष्टविध्याभासश्च । यथा—

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ।

अत्र कान्तप्रस्थानमनिष्टमप्यनिराकरणमुखेन विहितम् । न चास्य विधिर्युक्तः । अनिष्टत्वात् । तेनाय विधिर्विध्याभासो निषेध एवेत्यर्थः ।

हेतुरूपेति । हेतवोऽपि क्रियामुखेण कार्यं कुर्वन्तीति सैवाव्यवहितो हेतुः । कार्यं क्रियाया. फलमिति वैयाकरणा एव मन्यन्ते नान्ये । फलेति । कार्यस्य कविना प्रतिपादनं न तु भवनम् । हेतुं विना कार्योत्पत्त्यसंभवात् । अत्र प्रसिद्धतरहेत्वनुपलब्धिर्हेत्वभाव. । अप्रसिद्धस्तु हेतुर्वस्तुतोऽस्त्येव । अत एव विशिष्टतया प्रसिद्धतरहेत्वनुपलब्धिरूपया कार्यस्य भावना पर्यालोचना विभावना । हेतुनिषेधेन चेहोपक्रान्तत्वात् । बलवता कार्यमेव बाध्यत्वेन प्रतीयते न हेतुनिषेध इत्यन्योन्यबाधकत्वानुप्राणिताद्विरोधालङ्कारात्भेदः । हेतुनिषेधबाधप्रतीतिस्तु ज्ञप्त्यपेक्षा । ज्ञप्तिश्चोत्पत्त्यपेक्षयाऽत्र नासन्नेति न बिभावनाप्रयोजिका । अयं भावः—यथा

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा—

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥ ४७३ ॥

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।**

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः । अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नाऽऽलिङ्गनतोऽङ्गना सा ॥ ४७४ ॥

कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमास्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ४७५ ॥

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शंभुना न हृतं बलम् ॥ ४७६ ॥

---

कार्ये भवो भवहेतुनिषेधेन बाध्यत इति भवति तत्र भवनापेक्षो बाधस्तथा न भवन्नेव हेतुनिषेधः कार्यभवनेनापि बाध्यते किं तु भूतस्य तस्य बाधस्तथा ज्ञप्यत इति हेतुनिषेधबाधो ज्ञप्त्यपेक्ष एवेति ज्ञप्तिर्भवनापेक्षया पश्चाद्भावित्वेनानासन्नेति । यद्वा सामान्येन मिथो बाधे सत्यपि हेतुफलभावविशेषेणास्या विरोधाद्भेदः ।

कुसुमितेति । अत्र नलिन्यब्जिनी पद्मिन्याख्या स्त्री च । तथा घातादिहेत्वभावेऽपि रुगादिकार्यमुक्तम् । तत्र वियोगित्वं कारणं गम्यते । अनुक्तनिमित्तेयम् । उक्तनिमित्ताऽप्येषा । यथाऽनासवाख्यं करणं मदस्य । अत्र यौवनं निमित्तम् । मत्तताहर्षवाचकत्वान्मदस्य द्वैविध्येऽप्यतिशयोक्त्या ह्यभेदः । अतिशयोक्त्यनुप्राणिता चैषा ज्ञेया ।

एकगुणहानौ विशेषोक्तिरित्येके । आरोपितवैशिष्ट्यं रूपकमेवान्य इमां मन्यन्ते । एतद्विपर्यये विशेषोक्तिरिति तामाह–विशेषोक्तिरिति ।

निद्रेति । द्युरत्न रविः । भुजङ्गः पतिः । अत्र निद्रानिवृत्त्यादिहेतुसामग्र्ये सत्यप्याश्लेषत्यागरूपकार्यस्यावचः । प्रियानुरागो हेतुर्गम्यः ।

कर्पूर इति । अत्र दाहरूपे सत्यपि कारणे शक्तिरूपविरुद्धधर्मेणाशक्तत्वकार्यानुक्तिः । तत्रावार्यवीर्यत्वं हेतुः साक्षादुक्तः ।

हरताऽपीति । अत्र तनुहरणस्य हेतोः फलं बलहरणं परं नोक्तम् । निमित्तं चात्र प्रतीत्यगोचरत्वादचिन्त्यम् । एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिरिति यदन्यैरस्या लक्षणं कृतं साऽस्मन्मते रूपकभेद एव ।

---

१ ख. 'त्वेनास' ।

यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥

यथा—

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥ ४७७ ॥

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ १०९ ॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत्समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ४७८ ॥

---

यथा—अतैलपूराः सुरतप्रदीपा इति । अस्यामपि फलाभावः कारणसत्तामेव बाधते । अत एव मिथोबाधजीविताद्विरोधाद्भिद्यते ।

यथासंख्यमिति । संख्योपलक्षितक्रमानतिक्रमेण पदार्थानामन्वये यथार्थं यथासंख्यम् । यथाक्रममिति यावत् । क्रमिकाः क्रमवन्तः । बहुवचनमतन्त्रम् । तेन द्वयोरप्यर्थयोर्यथासंख्यम् ।

एक इति । अत्र शौर्योष्मविनयलीला वर्ण्यत्वेनोद्दिष्टाः । तासां यथाक्रमं देवद्विड्विद्वन्मृगदृशामनुनिर्देशः । एकस्त्रिधेति वाक्याद्व्यङ्ग्यो विरोधोऽपि । इदं क्रमिकवचनानामसमस्तत्वात्संबन्धस्यातिरोहिततया शाब्दम् । यत्र तु क्रमिकाणां समासः क्रियते तत्रार्थानुगमालोचनयाऽवयवगतक्रमसंबन्धप्रतीतावार्थत्वम् । तत्स्वयमूह्यम् ।

तदन्येनेति । विशेषेण सामान्येन वा । अर्थान्तरस्येव विजातीयस्येव वस्तुनो न्यासोऽर्थान्तरन्यास इति व्युत्पत्त्येति प्रतीयते यदत्र हेतोर्हेतुमता सह व्याप्तिर्गूढा । न तु स्पष्टा । कथंचित्प्रत्येयेत्यर्थः ।

निजेति । अत्रैवशब्दोऽप्यर्थो व्यस्तसंबन्धो वा । अत्र सामान्यमुक्त-

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशङ्का, क नासि शुभप्रदः ॥ ४७९ ॥
गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ४८० ॥
अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥४८१॥

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः ॥ ११० ॥**
**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

---

रार्धोपात्तविशेषेण समर्थितम् । सुसितेति । महःशब्द उत्सवार्थः । क नासीत्यादि सामान्यं पूर्वोक्तस्य विशेषरूपस्य समर्थकम् ।

गुणानामिति । गलिः कार्याकुशलो वृषः । अत्र गुणानामिति सामान्यम् । गौर्गलीति वैधर्म्यरूपो विशेषः । दौरात्म्यादिति नियोजने हेतुः । वैधर्म्यविशेषस्तु पूर्वार्धार्थसमर्थने हेतुः ।

अहो इति । म इति विशेषः । त एवेति सामान्यम् । तयोः समर्थ्य-समर्थकभावः । अप्रियं वाच्यमिति । सुहृदं प्रतीति शेषः । अत्रापराद्ध-मिति वचनादधन्यत्वाक्षेपः । तद्विरुद्धं धन्यत्वमिति वैधर्म्यम् । एतच्चास्य सुखादित्यादावप्रस्तुतप्रशंसायां जडादिवचान्तेन विशेषेण वाच्येन सामान्यं गम्यं समर्थ्यते । अत्र तु सामान्यविशेषयोर्द्वयोरपि वाच्यत्वमिति विवेकः । यद्वाऽन्योक्तौ विशेषो न सामान्यसमर्थनाशये-नोच्यते । किं त्वन्यथेति । तथाऽत्र हिशब्दः क्वचित्प्रयुज्यते क्वचिन्न । समर्थकस्य कदाचित्पूर्वं पश्चाद्वोपन्यासः ।

अविरोधेऽपीति । अविरोधे विरोधो न स्यादिति स्थिते यद्विरोधे-नोक्तिः सैवानुपपद्यमाना विरोधाभासे पर्यवस्यति । नित्यमेव द्रव्या-श्रितत्वाज्जातेर्न जातिद्रव्ययोर्विरोध इति ब्रुवन् रुद्रटो नवभेदीं मन्यते । तदसत् । जातेर्गुणाद्याश्रितत्वस्यापि भावात् ।

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।
सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वाद्वियोगपविपाते ॥ ४८२ ॥

गिरयोऽप्यनुन्नतियुजो मरुदप्यबलोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ४८३ ॥

येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ४८४ ॥

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ४८५ ॥

सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥४८६ ॥

पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ४८७ ॥

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥४८८॥

---

अभिनवेति । अत्र नलिनीत्वादिदहनत्वजात्योर्वियोगवशाद्विरोधः परिहृतः ।

गिरयोऽपीति । बलं जवोऽपि । अत्र त्वमेवोन्नतो बलवान् गम्भीरो विस्तीर्णश्चेति भावः । अत्र गिरित्वमरुत्त्वादिजातीनां क्रमेण लघुत्वपर्यायानुन्नत्वबलपर्यायमन्दत्वागाम्भीर्यातिलघुत्वरूपैर्गुणैः सह विरोधः ।

येषामिति । धाराधरोऽसिः । स्नेहो रुधिरार्द्रत्वमपि । अत्र पांसुत्वजातिमण्डनक्रिये विरुद्धे ।

सृजतीति । अत्र शफरत्वजातेर्जनार्दनद्रव्यस्य च विरोधः ।

सततमिति । अत्र काठिन्यसौकुमार्यगुणौ विरुद्धौ ।

पेशलमिति । अत्र पेशलत्वपरुषत्वगुणौ दहनप्रमोदक्रियाभ्यां सह विरुद्धौ ।

यन्मार्गणेति । यन्मार्गणा एवानर्गलः शातपातः । अत्र दृढत्वरूपगुणाम्भोजदलरूपद्रव्ययोर्विरोधः ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ ४८९ ॥

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ४९० ॥

समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शंकरचूडापगाऽपि कालिन्दी॥४९१॥

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥ १११ ॥

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणम्—

---

परीति । जडयति शीतलयति मोहयति च । तापः खेदोऽपि । अत्र जडीकरणतापकरणरूपे क्रिये विरुद्धे । वस्तुसौन्दर्येण तद्प्राप्तिपर्यवसानेन परिह्रियते ।

अयमिति । अत्र जलधिः पीत इति द्रव्यक्रिये विरुद्धे मुनिप्रभावेण समाधीयेते ।

समदेति । अत्र गङ्गायमुनारूपद्रव्ययोर्विरोधः । एवं विविक्तविषयत्वेन विरोधस्य दर्शनात् कुपतिमपि कलत्रवल्लभमित्यादौ श्लेषगर्भत्वे संकर इति कश्चित् । उद्भटस्तु विरोधप्रतिभोत्पत्तिहेतुं श्लेषमाह । श्लेषवशादेव लब्धात्मभावत्वाद्विरोधस्य न श्लेषेण सह संकरः । स्वस्वहेतोर्लब्धात्मभावानामलङ्काराणां मिश्रत्वे संकर इति संकरलक्षणात् । एकविषयत्वे विरोधः । भिन्नविषयत्वे त्वसगत्याख्योलङ्कारः ।

स्वभावोक्तिरिति । इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः । तथात्वे सर्वं काव्यमलङ्कारः स्यात् । तस्मात्सामान्यस्वभावो लौकिकोनालङ्कारः कविप्रतिभागोचरस्य त्वत एव तन्निमित्तस्यैव वस्तुस्वभावस्योक्तिरलङ्कारः । स्वयोरिति । [illegible] । क्रिया व्यापारः । संस्थानं स्वाभाविकं रूपम् ।

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याऽऽभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण॥४९२॥

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।**

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्--

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जामज्जनमन्तरेण न रमामन्यत्र संदृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याऽऽश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥४९३॥

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ४९४ ॥

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥ ११२ ॥**

एकार्थाभिधायकमपि सहार्थबलाद्यदुभयस्यावगमकं सा सहोक्तिः । यथा—

---

पश्चादिति । प्रोथो मुखाग्रम् । तुण्डं मुखम् । अत्र धूलिधूम्रेति वर्णोक्तिः । शेषमङ्घ्रिप्रसारणाङ्गदीर्घीकरणादिकं क्रिया ।

मुखे निन्देति । श्रौती निन्दा स्तुतिस्तु निर्वाहगेत्येको भेदः । एतद्वैपरीत्ये द्वितीयो भेद इत्याह—व्याजरूपेति । व्याजरूपा निन्दाद्वारिकेत्यर्थः । व्याजेनेति । वस्तुवृत्त्या निन्दैवेत्यर्थः ।

हित्वेति । लज्जायां मज्जनं बुडनम् । निर्लज्जत्वमित्यर्थः । हे नृप त्वादृशो निर्दाक्षिण्यो लक्ष्मीतुल्यं निर्लज्जं किमपि नास्तीति भावः ।

हे हेलेति । अत्र विपरीतलक्षणया वाच्याद्व्यस्ता प्रतीतिः । अत्राप्रस्तुतप्रशंसासद्भावेऽपि न संकरत्वम् । व्याजस्तुत्यप्रस्तुतप्रशंसयोरुक्ततया भेदेन प्रतिभासात् । उक्तताऽभेदे हि स स्यात् । तर्हि संसृष्टिरिति चेन्न । अन्योन्योपकार्योपकारकत्वेन मिथो नैरपेक्ष्याभावात । मणियुक्तहारवदेकरूपोऽयं प्रकृतोऽलङ्कार इति भावः ।

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं वाहधारा गलन्ति।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा॥ ४९५॥

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्। दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते।

**विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः।**

क्वचिदशोभनः, क्वचिच्छोभनः। क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥४९६॥
मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥ ४९७॥

---

उव्विग्गिरीए इति। उद्वेजनशीलायाः। सहोक्तौ द्वयोरपि प्रकृतयोरप्रकृतयोर्वा ग्रहणात्काल्पनिकमौपम्यम्। तत्र तृतीयान्तस्य गुणभावादुपमानत्वम्। शेषस्य प्राधान्यादुपमेयत्वम्। इयं मालया सहोक्तिः। केवलसहोक्तिस्तु—

वसन्ते पल्लवैः सार्धं रागोल्लासी जनो भवेत्।

इत्यादि। नियमेन कार्यकारणनियमविपर्ययरूपाभेदाध्यवसायरूपातिशयोक्तिमूलत्वमस्याः। यथा प्रतीयमानोपमात्वेऽपि तत्त्वारोपादिरूपविशेषभावाद्रूपकाद्यलङ्कारा उपमातो भेदेनोक्तास्तथेयमपि सहार्थसामर्थ्यावसितसाम्ययोगरूपविशेषात्तस्याः पृथगुक्ताः। उपमारूपं व्यङ्ग्यं तु न चमत्कारि। रूपकादिषु गुणीभूततत्त्वाद्यर्थस्यैव चमत्कारित्वात्।

यत्रान्य इति। सन्शोभनः। सूत्रापेक्षया व्याख्येयम्। क्वचित्तु यत्रान्योऽसन्नथेतर इति पाठः। तदपेक्षया वृत्तिकृता व्याख्यातमस्ति।

अरुचिरिति। रुचिरहितोऽशोभनः।

मृगेति। तथा हि प्राङ्मोहितः किमपि नाऽऽसीत्। सुहृदेति।

---

१—'सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति।
तव सुभग वियोगे तस्या उद्विग्नायाः
सह च तनुलतया दुर्बला जीविताशा॥'

परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥ ११३ ॥

परिवृत्तिरलङ्कारः । उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९८ ॥

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीय उत्तमेन न्यूनस्य ।

नानाविधप्रहरणैर्नृप संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुंधरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ ४९९ ॥

अत्र न्यूनेनोत्तमस्य ।

---

कूटमित्रं स तस्याऽऽसीत् । विनाशब्दं विनाऽपि विनार्थविवक्षा स्यात् । यथा सहोक्तौ सहार्थविवक्षा । तेन—

निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥

इत्यादौ विनोक्तिरेव । तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः । अत्रारुचिरित्युदाहरणं मिथो विनोक्तिभङ्ग्योक्तम् । द्वितीय त्वेकमेव । यद्वैकत्राशोभनत्वमपरत्र शोभनत्वम् । विनोक्तिकृतवैचित्र्याभावाच्छब्दमात्रयोगेणालङ्कारकल्पने ह्यथेगाद्युक्तावप्यलङ्कारत्वमाप्तेश्च विनोक्त्यलङ्कारं न मन्यन्तेऽन्ये । सहार्थबलात्साम्यप्रतीतेः सहोक्तिस्तु युक्तैव ।

अर्थानामिति । अर्थ्यन्तेऽमी इति व्युत्पत्त्याऽर्था उपादेयाः । बहुवचनमतन्त्रम् । तेनैकं द्वे बहूनि वा दत्त्वा व्युत्क्रमेण विषमसमसंख्यानामादानं यत्र तत्रैषा स्यात् । समादन्यदसमम् । तच्च न्यूनमधिकं वा । समन्यूनाधिकानां समाधिकन्यूनैर्विनिमये परिवृत्तित्रयी ।

लतानामिति । मतं चारु । श्रयत्यादत्ते । अत्र लास्यामोदौ समौ । एकेनैकस्य विनियमः पूर्वार्धे । उत्तरार्धे त्वहितेनैकेन न्यूनेनाध्यादिरूपस्यानेकस्य ।

नानेति । विप्रलम्भो भ्रान्तिरपायो वा । निर्विप्रलम्भो निर्भ्रान्तो निर्विघ्नो वा परिरम्भविधिर्यस्याः सा तथा । न्यूनेन प्रहाररूपेणोत्तमस्य भूरूपस्य ।

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।**

**तद्भाविकम् ।**

भूताश्च भाविनश्चेति द्वंद्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाऽऽकृतिम् ॥ ५०० ॥

अत्राऽऽद्ये भूतस्य, द्वितीये भाविनो दर्शनम् ।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता ॥ ११४ ॥**

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान् ।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाङ्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ५०१ ॥

---

भाविकमिति । भूतभाव्यर्थानां लोकोत्तरत्वेनाद्भुतत्वादव्यस्तसंबन्ध-शब्दसंदर्भसमर्पितत्वाच्च प्रत्यक्षायमाणत्वम् । भाव इति । कवेर्भाव आशयः श्रोतरि प्रतिबिम्बत्वेनास्तीति भावः । स्वभावोक्तौ कविप्रति-भाविशेषितलौकिकवस्तुभाववर्णने सर्वसाधारण्येन चित्तसंवादसंभवः । अत्र तु लोकोत्तरवस्तूनां स्फुटत्वेन तटस्थतया प्रतीतिरिति चारुवस्तु-स्वभाववर्णनान्नैषा स्वभावोक्तिः । न चेदमद्भुतपदार्थदर्शनाद्भूतभावि-प्रत्यक्षत्वप्रतीतौ काव्यलिङ्गम् । लिङ्गलिङ्गिभावेनाप्रतीतेः ।

हेतोरिति । अयं भावः—यत्र हेतुः कारकरूपस्तत्काव्यलिङ्गम् । ज्ञापकहेतौ त्वनुमानालङ्कारः । काव्यग्रहात् काव्यलिङ्गे व्याप्तिपक्षधर्मो-पसंहारादयो न स्युः । पदार्थवद्वाक्यार्थोऽप्येकोऽनेकश्च ।

वपुरिति । अत्र पादत्रयार्थोऽनेकवाक्यार्थरूपोऽन्त्यपादार्थस्य हेतुः । तथा वपुष्प्रादुर्भावादित्युक्त्याऽनुमानमप्यत्रास्ति । परं तेन सह भिन्नदेश-त्वाभावाद्वाक्यार्थीभूतस्य हेतोर्न संसृष्टिः । किं त्वनुमानस्योत्थापकतया वाक्यार्थीभूतहेतुं प्रत्यङ्गभावे संकरः । संप्रति इदानीं नमन्मुक्तः सन्नग्रेऽपि भाविनि काले निस्तनुः सन्ननतिमानित्यर्थः । यथा घटकारणं मृद्घट-रूपेण परिणमति तथाऽपराधद्वयस्य जनकमनमनमपराधतयाऽत्र परिण-तम् । एकवाक्यार्थतोदाहरणमन्यतो ज्ञेयम् ।

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ५०२ ॥

एकपदार्थता यथा—

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याऽऽराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥५०३॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

**पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।**

वाच्यवाचकभावविविक्तेनावगमनव्यापारेण यत्प्रतिपादनम्, तत्पर्यायेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् । उदाहरणम्—

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०४ ॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते । तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न

---

प्रणयीति । इयं मालतीवधोद्यताघोरघण्टं प्रति माधवोक्तिः । इह शस्त्रोपक्षेपरूपो हेतुः शस्त्रमित्युपक्षिपत इति चानेकपदार्थतयोक्तः । पूर्वत्र वाक्यार्थगत्या हेतुलिङ्गत्वेन बद्धोऽत्र तु शस्त्रमुपक्षिपत इति विशेषणत्वेन पदार्थगत्या बद्ध इति भावः ।

भस्मेति । अत्रापि महामोहे सुखालोकोच्छेदित्वं हेतुर्विशेषणतयैकपदार्थः । मोक्षस्य महामोहरूपणाद्रूपकमपि ।

वाच्येति । वाच्यवाचकावर्थशब्दौ । विविक्तेति । भिन्नेन प्रकारान्तरेणार्थसामर्थ्यात्मनेति यावत् । अत्र गम्योऽर्थो भङ्ग्यन्तरेणाभिधीयते । अप्रस्तुतप्रशंसायां त्वप्रस्तुत उच्यते । गम्यस्त्वाक्षिप्यत इति विवेकः ॥

व्यङ्ग्यमपीति । योग्यतया निर्देशः । शब्देनोच्यत इति । मदेन मानेन निवासप्रीतिरुज्झितेतिरूपभङ्ग्यन्तरेण । यथेति । येन प्रकारेण

तथोच्यते । यथा गवि शुक्ले चलति दृष्टे, 'गौः शुक्लश्चलति'–इति विकल्पः । यदेव दृष्टं तदेव विकल्पयति, न तु यथा दृष्टं तथा । यतोऽभिन्नासंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति ।

उदात्तं वस्तुनः संपत्

संपत्समृद्धियोगः । यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ५०५ ॥

महतां चोपलक्षणम् ॥ ११५ ॥

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

---

शब्दसंसर्गासहात्मनैकघनरूपतात्मना वा व्यङ्ग्यं प्रतीयते न तथा शब्देनोच्यते । क्रमभाविविकल्पप्रभवः शब्दस्तथाऽभिधातुं न शक्त इत्यर्थः । अतोऽत्र न ध्वनिरिति भावः । एतदेव दृष्टान्तेनाऽऽह—यथा गवीति । दृष्ट इति । निर्विकल्पकेन गोचरीकृते । न त्विति । अयं भावः—अभिन्नासंसृष्टः स्वलक्षणाकारो निरंशो निर्विकल्पकेन दृष्टः पश्चादविद्यावशेन भेदसंसर्गाभ्यां विकल्पगोचरी क्रियते । भेदसंसर्गौ विकल्पस्यैव व्यापारः । स हि निरंशत्वादभिन्नमप्यसंसृष्टमपि वस्तु गौः शुक्लश्चल इत्येवं भिन्नभिन्नमप्ययं गौरयमपि गौरित्येवं संसृजति ।

उदात्तमिति । इदमैश्वर्यलक्षितस्य वस्तुनो वर्णनया स्वभावोक्तिभाविकाभ्यां भिद्यते । न हि पूर्वयोरैश्वर्यं वर्ण्यते । कविप्रतिभोत्थापितत्वं त्रिष्वप्यस्त्येव ।

मुक्ता इति । अतिशयोक्तिरेषेति चेन्न । अन्यस्यान्यतयाऽध्यवसायाभावात् । अत्यैश्वर्येऽप्यवकरवन्मुक्तादेः पुञ्जीकरणासंभवे यदेवमुक्तिः सेयमसंबन्धे संबन्धात्मिकाऽतिशयोक्तिः । अथ पुञ्जीकरणं संभवति तदा जातिः । किं चानृद्धिमद्वस्तुवर्णनेऽनुदात्तमपि स्यादिति विवक्षायां निर्विषयमिदमुदात्तम् ।

अर्थादिति । सामर्थ्यादुपलक्षणीये वस्त्वन्तरङ्गभूत इत्यर्थः ।

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ५०६ ॥

न चात्र वीरो रसः । तस्येहाङ्गत्वात् ।

**तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत् ।**
**समुच्चयोऽसौ**

तस्य प्रस्तुतस्य कार्यस्यैकस्मिन्साधके स्थिते साधकान्तराणि यत्र संभवन्ति, स समुच्चयः । उदाहरणम्—

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥ ५०७ ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते । तथा हि—

---

तदिदमिति । अत्र दण्डकारण्ये वर्ण्यतयाऽङ्गिभूते रामचरितस्याङ्गभावः । महद्भिराश्रितं ह्यरण्यं वर्ण्यं स्यादिति तात्पर्यम् । अरण्यमत्रोपलक्षणीयम् । प्रधानीभूतमित्यर्थः । रामस्य वीरचरितमुपलक्षणमित्यर्थः । वीररसेऽङ्गभूते रसध्वनिः स्यादित्याशङ्क्याऽऽह—न चेति । वीररसो नाङ्गीत्यर्थः । एतदेवाऽऽह—तस्येति । वीररसाश्रयो रामस्तावदिहाङ्गम् । किं पुना रसः । ननु रसस्याङ्गत्वे रसवदलङ्कारः स्यात् । न । अस्योदात्तस्य तदपवादत्वात् । तदपवादत्वाकल्पने निर्विषयमुदात्तम् ।

समुच्चय इति । अत्र तुल्यकक्षतया हेतवो मिलिताः कार्यं साधयन्ति । समाधौ त्वेकस्य हेतोः कार्यं प्रति पूर्णे साधकत्वेऽन्यस्तु काकतालीयन्यायेनाऽऽपततीति न तत्र तुल्यकक्षतेत्यनयोर्भेदः । समुच्चयनं हि तुल्यकक्षाणामेव स्यात् ।

न पृथगिति । रुद्रटवत् । तेन हि सद्योगासद्योगसदसद्योगैः स त्रिधोक्तो न तथाऽत्रेति भावः ।

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ५०८ ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५०९ ॥

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः ।

---

कुलमिति । अत्रामलकुलस्य सतः सद्भिर्मूर्त्यादिभिः समुच्चयः । एकैकस्य दर्पहेतुत्वे तुल्यकक्षत्वम् । दुर्वाराः स्मरेत्यत्र तु स्मरमार्गणानां दुर्वारत्वेनासतां तादृशैरेव दूरत्वात् प्रियादिभिः समुच्चयः । तारुण्यादेश्च स्वतश्चारुत्वेऽपि विरहेणाचारुत्वम् ।

तथैकमेव वस्तु सदसच्च तादृश तादृशेन सदसता यदा युज्यते तदा सदसद्योगः । यथा – शशीति । स्वाकृतेः सुरूपस्य । धनपरायणो धनलुब्धः । नृपाङ्गणगतो राज्ञः प्रसादवित्तः पुमान् । स तद्रूपः सन् । खलतया चासन् । अत्र शशी स्वयं सन् धूसरत्वेनासन् । कामिनीति सन् । गलितयौवनत्वमसत् । एवमग्रेऽपि विशेष्यद्वारेण सत्ता विशेषणद्वारेणासत्त्वैकस्य वस्तुनः सर्वत्र ज्ञेया । इह विशेष्यस्य सत्त्वं विशेषणस्य चासत्त्वं प्रक्रान्तम् । ततो नृपाङ्गणगत इति विशेष्यतया सद्व्याख्येयम् । खल इति विशेषणतया चासत् । अन्यमताभिप्रायेण विशेषणविशेष्ययोरत्र वैपरीत्ये प्रक्रमभङ्गः । तथा नृपाङ्गणगतः खल इत्यसन् । अन्ये तु सन्त इति समुच्चीयमानस्य सतस्तादृशेनासता योग इति व्याख्यायां तु सहचरभिन्नोऽर्थो दुष्ट इतिरूपः प्रक्रमभङ्गः । तथाऽत्र सत्त एव सतोऽसत्त्वमेकस्यैव वस्तुन इति विवक्षितम् । अत एव चारुत्वेनान्तः प्रविष्टान्यपि शश्यादीनि प्रकारेण व्यथाहेतुत्वेनोक्तानि । दुर्वाराः स्मरेत्यत्र तु कथं सोढव्य इति सर्वथा दुष्टत्वाभिप्रायेणोपन्यास इति विवेकः ।

## स त्वन्यो युगपद्या गुणक्रियाः ॥ ११६ ॥

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणम्—

वि.लितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥५१०॥

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥५११॥

कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥५१२॥

'धुनोति चासिं तनुते च कीर्तिम्'–इत्यादेः,

'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादेश्च दर्शनात्, 'व्यधिकरणे'–इति 'एकस्मिन्देशे'–इति च न वाच्यम् ।

## एकं क्रमेणानेकस्मिन्पर्यायः

एकं वस्तु क्रमेणानेकस्मिन्भवति क्रियते वा, स पर्यायः । क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ५१३ ॥

---

गुणौ चेति । एतेनेत्युक्तं यद्व्यस्ततत्वेन समस्ततत्वेन च क्रमेण व्युत्क्रमेण च गुणक्रियाणां त्रिधाऽन्यः समुच्चयः ।

विदलितसकलारिकुलमिति । अत्र भिन्नाधारयोर्वैमल्यमालिन्ययोर्गुणयोः समुच्चयः ।

अयमिति । तादृश्योरेवोपनत इति भवितव्यमिति च क्रिययो. ।

कलुषं चेति । अत्र कालुष्यगुणपातक्रिययोः ।

धुनोतीति । अत्रैकाधिकरण्यं क्रिययोः । कृपाणपाणित्वसाधुवादौ सिद्धरूपत्वाद्गुणौ । तयोः क्षितिः स्वर्गश्च भिन्नो देशः । न वाच्यमिति । यथोक्तं रुद्रटेन । तदेवं पूर्वभेदत्रयेण सह समुच्चयः षोढा ।

क्रमेणेति । एतेन पर्याय इति सान्वयम् । क्रमग्रहणाच्च युगपदेकस्यानेकत्र वर्तने विशेषालङ्कारः । अतस्तत्रापि युगपदित्युक्तम् ।

श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ५१४ ॥

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत।
अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ ५१५ ॥

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम्।

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥ ५१६ ॥

**अन्यस्ततोऽन्यथा।**

अनेकमेकस्मिन्क्रमेण भवति क्रियते वा, सोऽन्यः। क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥५१७॥

---

श्रोणीबन्ध इति। अत्रैकस्य तनुत्वादेर्द्वये वृत्तिः। पूर्वं मुखस्योपमानसद्भावात् सद्वितीयत्वमिति विनिमयो घटते। पूर्वार्धमत्रोदाहरणम्।

नन्वाश्रयेति। अत्रैकस्य बहुषु वृत्तिः। बिम्बोष्ठेति। अत्र पूर्वाश्रयात्यागादेकस्यैव रागस्य हृदि वृत्तिर्निबद्धा। यथा वेति प्रकारान्तरार्थम्। रागस्येति। ओष्ठे रागस्ताम्बूलजः। हृदि तु प्रेमाख्यः।

एकस्यानेकत्र स्थितिमुक्त्वा करणमुदाह्रियते—तं ताणेति।

तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

तत्सामर्षं तेषां दैत्यानामिन्द्रस्यापि भयकृतां श्रीबन्धुरत्नानामासामस्त्येन हरणे तत्परमपि कुसुमबाणेन मृदुशस्त्रेणापि सकलरत्नसारे बिम्बाधरे विक्रमं परित्याज्य मनश्चुम्बनादिसक्तं कृतमित्यर्थः। बिम्बाधरः सकलरत्नेभ्योऽधिक इति व्यङ्ग्यव्यतिरेकोऽपि। अन्ये तु सकलरत्नसारतुल्योऽधर इति तेषां तत्र प्रीतिर्वास्तवीति व्यङ्ग्योपमामाहुः। अतिशयोक्तिगर्भता सर्वत्र ज्ञेया।

मधुरिमेति। अत्रैकस्मिन्वचसि विषममृतं चानेकं निबद्धम्। तदेवेति। वचनम्।

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥ ५१८ ॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः ।

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः ॥ ११७ ॥**

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यम् । यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥ ५१९ ॥

साध्यसाधनयोः पौर्वापर्यविकल्पे न किंचिद्वैचित्र्यमिति तथा न दर्शितम् ।

---

तद्गेहमिति । अत्रैकस्मिन् द्विजेऽनेकं गेहादि दिनैः क्रियमाणतया निबद्धम् । तथाऽत्र नतभित्ति गृहादि त्यज्यत एव न तु केनापि स्वी क्रियते । परिवृत्तौ तु यदेकेन त्यज्यते तदन्येन गृह्यते । क्रमेणेत्यधिकारान्न समुच्चयालङ्कारत्वम् ।

हेतुरिति । अन्वयव्यतिरेकभणनात्सपक्षसत्त्वं विपक्षव्यावृत्तिश्च क्रमेण लभ्यते । पक्षधर्मत्वं स्वेनोक्तमिति त्रैरूप्यम् । धर्मी शैलादिः । तत्रास्तित्वमयोगव्यवच्छेदः । व्यापकस्येत्यग्न्यादेः ।

यत्रेति । कान्ते । एताः कामिन्यः । अत्र कामिनीरूपो धर्मी । भ्रूव्यापारद्वारेण बाणपातः साधनम् । स्मरस्याग्रगत्वं साध्यम् । अलङ्कारान्तररहितं साधनं निर्दिष्टम् । क्वचिदलङ्कारान्तरगर्भितत्वेन हेतुर्निर्दिश्यते । स्वय यथा—

यथा पङ्कजिनीपत्रे पदौघः प्रगुणीकृतः ।
तथा मन्ये वियोगिन्यः स्मरभिल्लेन घातिताः ॥

प्रगुणीकृत इति प्रगुणीकर्तुमारब्धः । अत्र रूपकमलङ्कारान्तरम् । एवमेकत्र प्रौढोक्त्याऽन्यत्र त्वलङ्कारान्तरगर्भीकारात्तर्कानुमानवैलक्षण्यम् । न दर्शितमिति । अयं भावः—साध्यसाधनयोरुक्तिरलङ्कारः । ते-

विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः ।

अर्थाद्विशेष्यस्य । उदाहरणम्—

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तय ।
नसंहतास्तस्य नभेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५२० ॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः कृतः, तथाऽप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणित ।

व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८ ॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते, सा व्याजोक्तिः । न चैषाऽपह्नुतिः । प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासंभवात् । उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ५२१ ॥

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ।

---

न क्रमेण व्युत्क्रमेण वा भवतां वैचित्र्याभावात्किं तच्चिन्तयेति । तस्मात् रुद्रटवन्न वाच्यम् ।

महौजस इति । समीहितुं कर्तुम् । अत्र धनुर्भृत इति विशेष्यम् । शेषाणि विशेषणानि । महौजस इति सबलत्वे सति स्वामिकार्यकरणे शक्ता इत्यभिप्रायोऽस्य विशेषणस्य । एवमग्रेष्वपि विशेषणेषु । अत्र व्यङ्ग्यस्यांशस्य वाच्योन्मुखत्वमिति न ध्वनिविषयता । परिकर इति नाम सान्वयम् । ननु पुष्टार्थग्रहणाद्दोषत्यागमात्रमेतदित्याशङ्क्याऽऽह—यद्यपीति ।

न चैषेति । अयं भाव.—अपह्नुतौ किलोभयनिष्ठं साम्यम् । अत्र तु प्रकृतस्यैव सद्भावात्प्रकृतनिष्ठमेव साम्यम् । ये कालतां कुटिलतामिव न त्यजन्तीति समुचितोपमावदत्रापि प्रकृतनिष्ठमेव साम्यम् ।

शैलेन्द्रेति । शैलेन्द्रेण प्रतिपाद्यमाना या गौरी तत्कराश्लेषे शैलेन्द्र-

किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ ११९ ॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति, सा भवेत्परिसंख्या । अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम् , तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारो भेदाः ।

क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥ ५२२ ॥

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ५२३ ॥

---

करस्पर्शोऽपि शिवस्य विद्यते । व्यासङ्गे निरोधः । तस्माद्भङ्गो भयं सात्त्विकभाव इत्यर्थः । असमञ्जसनिखिलकर्तव्यताप्रसङ्गापह्नवाकुल इति तात्पर्यम् । उद्भटमते व्याजोक्त्यभावादत्रापह्नुतिः । तथा च रोमाञ्चादिनोद्भिन्नो भावः शैत्यप्रक्षेपादपलापितोऽपि सस्मितत्वेन पुनरप्युद्भिन्नत्वेन प्रकाशितस्तथाऽप्यपलापमात्रचिन्तयाऽस्यालङ्कारस्योल्लेखः ।

परिसंख्येति । परिवर्जने । ततः कस्यापि परिवर्जनेन कस्यचित्संख्या वर्ण्यत्वेन गणनम् । सम्यक्प्रथनं वा । प्रमाणान्तरावगतम् । प्रमाणान्तरेण ज्ञातम् । प्रयोजनान्तराभावादिति । सदृशवस्त्वन्तरव्यवच्छेदरूपं प्रयोजनं हित्वा नान्यत्प्रयोजनमस्ति ।

यदासक्त्येति । यच्छब्दः पूर्वोक्तपरामर्शे । किमासेव्यमित्यत्र श्लोके शास्त्रप्रमाणज्ञातमपि गङ्गातटादि प्रश्ने सति सेव्यध्येयादितया क्रमेण कामिनीसेवातद्ध्यानपापहिंसानां निषेधायोक्तम् । निषेधश्चात्र गम्यः ।

निषेध्यं गम्यत्वेनोक्त्वा प्रश्ने सति वाच्यत्वेनाऽऽह—किं भूषणमिति । आर्यैश्चरितमाचरितम् । अत्र यशःप्रभृतेर्भूषणत्वादिकमागमतो ज्ञातमेव । न रत्नमित्यादि निषेध्यं शाब्दम् । न तु पूर्वोदाहरण इव गम्यम् ।

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५२४ ॥

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ५२५ ॥

यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता ।
तदा कारणमाला स्यात्

उत्तरमुत्तरं प्रति यथोत्तरम् । उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते गुणानुरागप्रभवा हि संपदः ॥५२६॥

" हेतुमता सह हेतोरभिधानमभेदतो हेतुः "
इति हेत्वलंकारोऽत्र न लक्षितः । आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति । वैचित्र्याभावात् ।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥ ५२७ ॥

इत्यत्र तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न

---

प्रश्नपूर्वकथने भेदद्वयीमुक्त्वा प्रश्नाभावे द्विभेदीमाह—कौटिल्यमिति । कचनिचये न तु वाचि चित्ते वेति गम्यम् । करादौ रागो न परपुंसि । कुचयोः काठिन्यं न चित्तावयवान्तरयोः । चक्षुषोश्चापलं नाऽऽचरणे । निषेध्याश्चात्र गम्या. ।

भक्तिरिति । युवतिरूपं कामास्त्रमिति विग्रहः । अत्र न विभव इत्यादि-निषेध्यः शाब्दा. । श्लेषसंपर्केऽस्या अतीव चारुत्वम् । यथा यतिषु दण्डग्रहः करपीडा विवाहे चित्रे वर्णसंकर इत्यादि ।

आयुरिति । घृतं हेतुरायुर्हेतुमत् । लक्षणया तयोरभेदः । आदि-शब्दादन्येऽपि लक्षणाभेदाः षड् ज्ञेयाः । पर या सादृश्याल्लक्षणा तस्यां रूपकादिसद्भावाद्वैचित्र्यं नान्यस्याम् । अविरलेति । अत्र वसन्तकालो हेतुः । शेषा हेतुमन्तः । कमलविकासहेतुत्वात्कालोऽपि विकासः । एवम-ग्रेऽपि । न तु विकासयति मदयत्यानन्दयति पोषार्थतया बिभर्तीति रुद्रटा-शयेन व्युत्पत्तिः । हेतुहेतुमतोरभेदाभावप्रसङ्गात् । समाम्नासिषुरिति ।

पुनर्हेत्वलंकारकल्पनयेति पूर्वोक्तं काव्यलिङ्गमेव हेतुः ।

क्रियया तु परस्परम् ॥ १२० ॥

वस्तुनोर्जननेऽन्योन्यम् ।

अर्थयोरेकक्रियामुखेण परस्परं कारणत्वे सति अन्योन्यं नामालंकारः । उदाहरणम्—

हंसाण सरेहिँ सिरी सारिज्जइ अह सराण हंसेहिँ ।
अण्णोण्णं विअ एए अप्पाणं णवार गरुअन्ति ॥ ५२८ ॥

अत्रोभयेषामपि परस्परं जनकता, मिथः श्रीसारतासंपादनद्वारेण ।

उत्तरश्रुतिमात्रतः ।
प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ १२१ ॥
असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ।

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते, तदेकं तावदुत्तरम् । उदाहरणम्—

---

भामहोद्भटाद्याः । अव्यभिचारितया विकासादेर्नैरन्तर्येण करणमिहोपचारप्रयोजनं व्यङ्ग्यम् । तच्च गुणीभूतमिति महिम्नैवेत्यत्रैवकारेण प्रतिपाद्यते । अस्मन्मते काव्यलिङ्गमेव हेतुः । रुद्रटस्तु भिन्नमूचे ।

हंसाणेति । हंसानां सरोभिः श्रीः सार्यते सारी क्रियते । अथ सरसां हंसैः । अन्योन्यमेवैते आत्मानं गरयन्ति गुरूकुर्वन्ति ।

**यत्तु हंसानां सरोभिः सरसां हंसैः श्रीः सार्यत इति सारणक्रियैको धर्मस्ततो दीपकमिदम् । तदसत् । हंससरसोः प्रकृतत्वात् । प्रकृताप्रकृतत्वे हि दीपकम् ।**

उत्तरश्रुतीति । उत्तरश्रवणादनुक्तोऽपि प्रश्नोऽवगम्यत इति तात्पर्यम् । तत्र वेति । प्रश्ने । उत्तरम् । उत्तराख्योऽलंकारः ।

---

१—' हंसाना सरोभिः श्रीः सार्यतेऽथ सरसा हंसैः ।
अन्योन्यमेवैत आत्मानं केवल गुरू कुर्वन्ति ' ॥

वाणिअअ हत्थिदन्ता कुत्तो अह्माण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोह्णा ॥ ५२९ ॥

हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी, तां मूल्येन प्रयच्छेति क्रेतुर्वचनममुना वाक्येन समुन्नीयते । न चैतत्काव्यलिङ्गम् । उत्तरस्य ताद्रूप्यानुपपत्तेः । न हि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम् । एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलंकारान्तरमेवोत्तरं साधीयः ।

प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसंभाव्यरूपं प्रतिवचनं स्यात्, तदपरमुत्तरम् । अनयोश्च सकृदुपादाने न चारुताप्रतीतिरित्यसकृदित्युक्तम् । उदाहरणम्—

का विसमा देवगई किंदुल्लहं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥ ५३० ॥

प्रश्नपरिसंख्यायामन्यव्यपोह एव तात्पर्यम्, इह तु वाच्य एव विश्रान्तिरित्यनयोर्विवेकः ।

---

वाणि अअ इति । वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च । यावद्विलुलितालकमुखी गृहे विलसति स्नुषा ।

कृत्तिश्चर्म । स्नुषा वधू । परिसक्कए परिष्वकते । क्रीडतीत्यर्थः । उत्तरस्येति । प्रतिवचनस्य ताद्रूप्यानुपपत्तेः । काव्यलिङ्गरूपतानुपपत्तेः । कुत इत्याह—न हीति । न जनकः । किं तु ज्ञापक इत्यर्थः । एकधर्मीति । प्रश्नोत्तरवाक्यद्वयी भिन्नवक्तृगतेति भावः । प्रश्नः साध्यमुत्तरं साधनम् । अनयोश्चेति । प्रश्नप्रतिवचनयोः ।

का विसमेति ।

का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

अत्र दैवगत्यादि अनिरूढत्वादसंभाव्यरूपम् । प्रश्नपूर्विका परिसंख्या प्रश्नपरिसंख्या । अत्र प्रश्नादुत्तरमात्रं नान्यव्यपोह इत्यर्थः ।

---

१—'वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिसक्रामति स्नुषा' ।

कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥१२२॥
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ।

कुतोऽपि आकारादिङ्गिताद्वा । सूक्ष्मस्तीक्ष्णमतिसंवेद्यः । उदाहरणम्—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ ५३१ ॥

अत्राऽऽकृतिमालोक्य कयाऽपि वितर्कितं पुरुषायितमसिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम् । पुंसामेव कृपाणपाणिता, योग्यत्वात् । यथा वा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ५३२ ॥

अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ।

उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ १२३ ॥

परः पर्यन्तभागोऽवधिर्यस्य । धाराधिरोहितया तत्रैवोत्कर्षस्य विश्रान्तेः । उदाहरणम्—

राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५३३ ॥

---

आकारादिति । अनेन कुतोऽपीति व्याख्यातम् ।

भिन्नमिति । व्याप्तम् । आकृतिमिति । स्वेदकृतकुङ्कुमभेदरूपाम् ।

संकेतेति । संकेतकाले ज्ञातव्ये मनो यस्य स तथा । इङ्गितेति । त्रिभङ्गतेन भ्रूक्षेपादिरूपेण । इङ्गितं साभिप्रायचेष्टा ।

राज्य इति । न्याय्य एवार्थे सारशब्दः क्लीबोऽन्यत्र तु चिन्त्यः । अत्रान्यापोहकृतं चारुत्वमित्ययं परिसंख्यैवेत्येके । तदसत् । सारत्वे ह्यत्र विश्रान्तिर्नान्यव्यपोहे । अत्र वराङ्गनापर्यन्तभागोऽवधिः ।

**भिन्नदेशतयाऽत्यन्तं कार्यकारणभूतयोः ।**
**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ १२४ ॥**

इह यद्देशं कारणम्, तद्देशमेव कार्यमुत्पद्यमानं दृष्टम्, यथा धूमादि । यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम्, सा तयोः स्वभावोत्पन्नपरस्पर-संगतित्यागादसंगतिः । उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम् ।
दन्तक्खअं कवोले वहूएँ वेंअणा सवत्तीणम् ॥ ५३४ ॥

एषा च विरोधबाधिनी न विरोध. । भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् । विरोधे तु विरोधित्वमेका-श्रयनिष्ठमनुक्तमपि पर्यवसितम् । अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः । तथा चैवं निदर्शितम् ।

**समाधिः सुकरं कार्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं समाधीयते, स समाधिर्नाम । उदाहरणम्—

---

धूमादीति । न हि शैलेऽग्निर्महानसे धूमं जनयतीति भावः । हेतुफलेति । हेतुः कारणम् । फलं कार्यम् । अतिशयेनेति । अतिशयः कारणस्य कार-णान्तराद्वैलक्षण्यम् । तच्चेदं यद्भिन्नदेशकार्यजननम् । युगपदिति । त्रुटितं धूमखण्डं भिन्ने काले किल कारणाद्भिन्नदेशतयाऽप्युपलभ्यते तद्युगपद्ग्र-हणान्निषिद्धम् । तयोः । कारणकार्ययो । स्वभावेति । अन्येषु कार्यकारणे-ष्वेकदेशतयोत्पन्नायाः संगतेस्त्यागः ।

जस्से अ इति ।

यस्यैव व्रणस्तस्यैव वेदना भणति जनस्तदलीकम् ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥

अत्र दन्तक्षतं कारण वेदना कार्यम् । ते च भिन्नदेशस्थे । उत्सर्गस्येति । विरोधः सामान्योक्तत्वादुत्सर्गः । भिन्नाश्रयत्वेनोक्तत्वादसंगतिर्विशेषः । तथा चैवमिति । विरोधालंकारेऽप्येकाधारत्वं विरोधस्योक्तमित्यर्थः ।

साधनान्तरेति । कारणान्तरकृतोपकारेण सम्यगाधानं समाधिः ।

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्टयेदमुदीर्णं घनगर्जितम् ॥ ५३५ ॥

**समं योग्यतया योगो यदि संभावितः क्वचित् ॥ १२५ ॥**

इदमनयोः श्लाघ्यमिति योग्यतया संबन्धस्य नियतविषयमध्यवसानं चेत्तदा समम् । तत्सद्योगेऽसद्योगे च । उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः संगतं यत्तदेत-
च्छृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ५३६ ॥

यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५३७ ॥

**क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।**
**कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ १२६ ॥**
**गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।**
**क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥ १२७ ॥**

द्वयोरत्यन्तविलक्षणतया यदनुपपद्यमानतयैव योगः प्रतीयते [१] यच्च किंचिदारभमाणः कर्ता क्रियायाः प्रणाशान्न केवलमभीष्टं तत्फलं न लभेत, यावदप्रार्थितमप्यनर्थं विषयमासादयेत् [ २ ] तथा, सत्यपि कार्यस्य कारणरूपानुकारे यत्तयोर्गु-

---

मानमिति । अत्र मानापनयनं कार्यम् । पादपातो हेतुः । घनगर्जित हेत्वन्तरम् । यस्मादक्लेशेन कार्यं सुकरं स्यादित्यर्थः ।

योग्यतयेति । वरस्य वरं हीनस्य हीनं योग्यमिति योग्यता ।

धातुरिति । अत्र वरं वरेण संघटितम् ।

चित्रमिति । अत्र हीनं हीनेन । निम्बकाकानां तथारूपत्वात् ।

क्वचिदिति । तयोरिति । कार्यकारणयोः । कारणसक्तौ क्रियागुणौ कार्यसक्तक्रियागुणौ च मिथो विरुध्येते इत्यर्थः ।

णौ क्रिये च परस्परविरुद्धतां व्रजतः [ ३ । ४ ], स सम-विपर्ययात्मा चतूरूपो विषमः । क्रमेणोदाहरणम्—

शिरीषादपि मृद्वङ्गी केयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥ ५३८ ॥

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः ।
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५३९ ॥

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥ ५४० ॥

आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ५४१ ॥

अत्राऽऽनन्ददानं शरीरतापेन विरुध्यते । एवम्—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ ५४२॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् ।

**महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥ १२८ ॥**

आश्रितमाधेयम्, आश्रयस्तदाधारः, तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यदधिकतरतां व्रजतः, तदिदं द्विविधमधिकं नाम ।

---

शिरीषादिति । अत्र मृद्वङ्गीस्मरानलयोरननुरूपत्वाद्वैषम्यम् ।

तमन्य इति । सिंहिकासुतौ राहुसिंहौ । अत्र शशस्य स्वाधारबाधादाश्रयणक्रियाध्वंसः स्वस्य महानर्थश्च । तमालेति । अत्र कृष्णगुणात्पाण्डुगुणोत्पत्तिः । कार्यगुणः कारणगुणेन विरुद्धः । आनन्दमिति । अत्र कारणानन्दकार्यतापक्रिये मिथो विरुद्धे । अत्र स्त्री कारणं विरहः कार्यः । एतल्लक्षणानुसारेणान्यदप्याह—एवमिति । अत्र हीनो गुरुकार्यकारीति वैषम्यम् । असकलयेति । अपूर्णया ।

क्रमेणोदाहरणम्—

अहो विशालं भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ५४३ ॥

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ ५४४ ॥

**प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ १२९ ॥**

न्यक्कृतिपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत्तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणम्, तत् (अनीकप्रतिनिधितुल्यत्वात्) प्रत्यनीकमभिधीयते । यथाऽनीकेऽभियोज्ये तत्प्रतिनिधीभूतमपरं मूढतया केनचिदभियुज्यते, तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः । उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥ ५४५ ॥

यथा वा—

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते ॥५४६॥

इन्दोरत्र तदीयता संबन्धिमुखसंबन्धात् ।

---

मातीति । अत्र मातुमशक्यत्वेनाऽऽधेयरूपो यशोराशिर्महान् । जगत्त्रयं तु त्रिसंख्यत्वात्तुच्छम् । परं महतोऽपि यशोराशेराधारतया महीयस्त्वेनोक्तम् । अन्यथा मानस्यासंभवः ।

युगान्तेति । अत्र विष्णुतनुराधारः । स च महान् । स्वल्पा मुदस्त्वाधेयाः परं त्वमानेन महत्तमत्वं नीताः ।

तदीयस्येति । प्रतिपक्षसक्तस्य । तत्स्तुत्यै । प्रतिपक्षस्तुत्यै । रिपुं बलवत्त्वात्तिरस्कर्तुमशक्तो यदा तदाश्रितं कोऽपि तिरस्करोति तदाऽयमलंकार इत्यर्थः ।

त्वमिति । अत्र तां तव रक्तां कामः शरैर्हन्तीति वास्तवोऽर्थः पश्चादुत्प्रेक्ष्यते । निर्जितत्वोत्थादनुशयादिवेति व्यङ्ग्योत्प्रेक्षाऽपि । त्वं भवतीति च प्रक्रमभङ्गः ।

यथा वेति । अत्र विष्णुः शक्तः शत्रुः । तदीयं वक्त्रम् । तस्य संबन्धी

समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनाऽऽगन्तुना वाऽपि तन्मीलितमिति स्मृतम् ॥१३०॥

सहजमागन्तुकं वा किमपि साधारणं यल्लक्षणं तद्द्वारेण यत्किंचित्केनचिद्वस्तु स्थित्यैव बलीयस्तया तिरोधीयते, तन्मीलितमिति द्विधा स्मरन्ति । क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५४७ ॥

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकम्, साधारणं च मदोदयेन । तत्राप्येतस्य दर्शनात् ।

ये कंदरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ ५४८ ॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्याऽऽगन्तुकत्वात्तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यम् । समानतया च भयेष्वपि तयोरुपलक्षितत्वात् ।

---

सादृश्यादिन्दुः । तत्पराङ्गत्वाद्विष्णोः प्रकर्षावगतिः । इन्दोरिति । संवद्धं वक्त्रम् । तेनेन्दोः संबन्धः साम्यात् । तदीयता । विष्णुसक्तता ।

समेन लक्ष्मणा । साधारणेनेत्यर्थः । निजेन । स्वाभाविकेनेत्यर्थः । वस्तुना वस्त्वन्तरस्य तिरोधाने मीलितमिति सान्वयं नाम । बलीयस्तयेति वचनान्न सामान्यालंकारता । तत्र हि साधारणगुणाश्रयेण भेदानुपलक्षणं न तूत्कृष्टगुणेन निकृष्टस्य तिरोधानम् ।

अपाङ्गेति । अत्र दृष्टितरलत्वादिकं सहजं मदोदयकृतस्य दृष्टितरलत्वादेस्तिरोधायकम् । तत्रापीति । मदोदयेऽपि । एतस्येति । दृष्टितरलत्वादेः ।

बुधोऽपीति । शत्रुसंबन्धित्वेन भियां बुधोऽपि कलने न दक्षः । सामर्थ्यं हिमाद्रिगुहानिवासरूपम् । तत्प्रभवयोः । शैत्यजयोः । ताद्रूप्यम् । आगन्तुकरूपत्वम् । समानतया । साधारण्येन । तयोरिति । कम्पपुलकयोः । उपलक्षितत्वात् । दृष्टत्वात् ।

**स्थाप्यतेऽपोह्यते वाऽपि यथापूर्वं परं परम् ।**
**विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ १३१ ॥**

पूर्वं पूर्वं प्रति यत्रोत्तरोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन यत् स्थापनं निषेधो वा संभवति, सा द्विधा बुधैरेकावली भण्यते। क्रमेणोदाहरणम्—

पुराणि यस्यां सवराङ्गनानि
वराङ्गना रूपपुरस्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलास-
मस्त्रं विलासाः कुसुमायुधस्य ॥ ५४९ ॥

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥ ५५० ॥

पूर्वत्र पुराणां वराङ्गनास्तासामङ्गविशेषणमुखेन रूपम् , तस्य विलासाः, तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते। उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ।

**यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**
**स्मरणम् ।**

यः पदार्थः केनचिदाकारेण नियतो यदा कदाचिदनुभूतोऽभूत् , स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति, यत्तथैव स्मर्यते, तद्भवेत्स्मरणम् । उदाहरणम्—

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥ ५५१ ॥

---

दृष्ट इति । उपलब्धिमात्रेऽत्र दृशिः ।

तद्भवैरिति । प्लाविताम्भोभवैः। कुहरुतानि कुहकुहशब्दाः । निम्ननाभिदेशोत्थाः । स्मारिता इति ह्रस्वाभावः । सादृश्यं विना स्मृतिर्नालंकारः । यथा—

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः । इत्यादि ।

यथा वा—

करजुअगहिअजसोआथणमुहविणिवेसिआहरउडस्स ।
संभरिअपञ्चअण्णस्स णमह कण्हस्स रोमञ्चम् ॥ ५५२ ॥

**भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥**

तदिति अन्यदप्राकरणिकं निर्दिश्यते । तेन समानमर्थादिह प्राकरणिकमाश्रीयते । तस्य तथाविधस्य दृष्टौ सत्यां, यदप्राकरणिकतया संवेदनम्, स भ्रान्तिमान् । न चैष रूपकं प्रथमातिशयोक्तिर्वा । तत्र वस्तुतो भ्रमस्याभावात् । इह चार्थानुगमनेन संज्ञायाः प्रवृत्तेस्तस्य स्पष्टमेव प्रतिपन्नत्वात् ।

उदाहरणम्—

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान्बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान्हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ५५३ ॥

**आक्षेप उपमानस्य प्रतीपमुपमेयता ।**
**तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥ १३३ ॥**

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थक्येन यदुपमानमाक्षिप्यते, यदपि तस्यैवोपमानतया प्रसिद्धस्योपमानान्तर-

---

करजुएति ।

करयुगगृहीतयशोदास्तनमुखनिवेशिनाधरपुटस्य ।
संस्मृतपाञ्चजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

अत्र पूर्वभवानुभूतस्य स्मरणम् । पूर्वत्र त्विहभवानुभूतस्य ।

प्रथमेति । निगीर्याध्यवसनरूपा । सञ्ज्ञाया इति । भ्रान्तिरस्ति यत्र गुम्फे स तथेत्येवंरूपायाः । तस्य । भ्रमस्य । भ्रान्तिरत्र प्रतिभोत्था सादृश्यहेतुका च ग्राह्या । न स्वरसोत्था शुक्तिकारजतवत । नापि प्रहारादिहेतुका मूर्च्छायां वस्तुभ्रमणवत् ।

कैमर्थक्येनेति । कोऽर्थोऽनेनेति । आक्षिप्यते । आलोच्यते । तस्यैवेति । उपमानस्य । उपमानान्तरेति । मुखादेरतिचारुतयोपमानाकल्पनया ।

---

१ ख. 'नान्तरक' ।

विवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते, तत् ( उपमेयस्योपमानप्रतिकूलवर्तित्वात् ) उभयरूपं प्रतीपम् । क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ ५५४ ॥

ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥ ५५५ ॥

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वादुपमित्यनिष्पत्त्या 'वअणिज्जम्'—इति वचनीयपदाभिव्यङ्ग्यस्तिरस्कारः ।

क्वचित्तु निष्पन्नैवोपमितिक्रियानादरनिबन्धनम् । यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥५५६॥

इहोपमेयीकरणमेवोत्पलानामनादरः ।

अनयैव रीत्या यदसामान्यगुणयोगान्नोपमानभावमप्यनुभूतपूर्वि, तस्य तत्कल्पनायामपि भवति प्रतीपमिति मन्तव्यम् । यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥५५७॥

अत्र हालाहलस्योपमानत्वमसंभाव्यमेवोपनिबद्धम् ।

---

लावण्येति । अत्रेन्द्वादिकमुपमानं कैमर्थक्येनाऽऽक्षिप्तम् । यथासंख्यमप्यत्रास्ति । ए एहीति ।

अयि एहि सुन्दरि कर्णं दत्त्वा शृणु वचनीयम् ।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥

अत्रोपमानतया ख्यातस्येन्दोरपकर्षार्थमुपमेयत्वमुक्तम् । मुखस्यार्थादुपमानत्वम् । अत्र चन्द्रस्याल्पगुणत्वात्सादृश्याभावादौपम्यस्यानिष्पत्तिः ।

गर्वमिति । भद्रा वराकी । अत्रोत्कृष्टानामुत्पलानामुपमेयत्वकल्पनैवानादरः । पूर्वत्र तूपमित्यनिष्पत्तिरेवानादरः । तत्कल्पनायामिति । उपमानत्वकल्पनायाम् ।

अहमिति । गुरुरुत्कृष्टः । अत्र यथा विषं मारकं न तथा खलवा-

प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।
ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥ १३४ ॥

अतादृशमपि तादृशतया विवक्षितुं यदप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते, तत्समानगुणनिबन्धनात्सामान्यम् । उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥५५८॥

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः । अत एव पृथग्भावेन न तयोरुपलक्षणम् ।

यथा वा—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन्कोऽवेदयिष्यन्नवचम्पकानि ॥ ५५९ ॥

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते । प्रतीतत्वात्तस्य । प्रतीतेश्च बाधायोगात् ।

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥

---

क्यमिति विषयस्योपमानत्वमसंभाव्यम् । अतः प्रतीपता ।

मलयजेति । अत्रासतीचन्द्रद्युत्योरेकतरा प्रस्तुता । तथाऽत्र श्रीखण्डाङ्गरागादेश्चन्द्रांशुभिः सहाविभाव्यतां गता इत्यभेदेनोक्तिः । अष्टाविंशतिमात्रं द्विपदीछन्दः । तथाऽत्र स्वगुणत्यागाभावान्न तद्गुणालंकारः । एकात्मतेति । एकरूपत्वम् । एकस्य निह्नवोऽन्यस्य स्थापनमिति लक्षणाभावान्नापह्नुतिः ।

निमित्तान्तरेति । भृङ्गपातो निमित्तान्तरम् । नानात्वं भेदः । न व्युदसितुमिति । अत्र पूर्वमभेदो भातः पश्चाद्भेदः । न हि भातमभातं स्यादित्यर्थः । तस्येति । अभेदस्य ।

एकात्मेति । एकस्वभावा ।

अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ १३६ ॥

प्रसिद्धाधारपरिहारेण यदाधेयस्य विशिष्टा स्थितिरभिधीयते, स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥५६०॥

एकमपि वस्तु यदेकेनैव स्वभावेन युगपदनेकत्र वर्तते, स द्वितीयः । उदाहरणम्—

सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु ।
अह्मारिसाण सुन्दर ओआसो णत्थि पावाणम् ॥ ५६१ ॥

यदपि किंचिद्रभसेनाऽऽरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽपरो विशेषः । उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ५६२ ॥

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥५६३॥

सर्वत्रैवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना

---

दिवमिति । अनन्यभावो विषयार्थ इत्यत्र कवयो विषयत्वेनाऽऽधाराः । तदभावेऽपि वाचामाधेयानां स्थितिरुक्ता । सा वसइ इति ।

सा वसति तव हृदये सैवाक्ष्णोः सा च श्रवणयोः ।
अस्मादृशां सुन्दर अवकाशः कुत्र पापानाम् ॥

अत्रैकैव स्त्री, एकेनैव वसनरूपेण युगपच्चित्तादौ वर्तते ।

विधिनेति । अत्र येनैव यत्नेन स्फुरदद्भुतरूपेत्यादिविशेषणवांस्त्वं सृष्टस्तेनैवाशक्यं कामार्कगुरुरूपं कार्यान्तरमपि कृतम् । प्रस्रवति वृषो गच्छन्नित्यादौ नायमलंकारः । अशक्यत्वाभावात् ।

गृहिणीति । इदं निरलंकारान्तरत्वेनोदाहृतम् । पूर्वं तु सालंकारान्तरत्वेन । तत्र यथासंख्यस्यापि भावात् ।

प्रायेणालंकारत्वायोगात् । अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥ इति ।

**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ १३७ ॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसंपदोपरक्तं तत्प्रतिभासमेव यत्समासादयति, स तद्गुणः । तस्याप्रकृतस्य गुणोऽत्रास्तीति ।

उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥५६४॥

अत्र रवितुरगापेक्षया गरुडाग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता ।

**तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।**

यदि तु तदीयं वर्णं संभवन्त्यामपि योग्यतायामिदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम । उदाहरणम्—

धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिए वि हिअए सुअह णिहित्तो ण रत्तोऽसि ॥५६५॥

---

सैषेति । सा वक्रोक्तिरेषैवातिशयोक्तिरिति योग. । विभाव्यते विशिष्टतया भाव्यत इत्यर्थः । विनेत्यनेन सर्वालंकारबीजमेषेति भामहाद्याः ।

विभिन्नेति । करीरमङ्कुरः । प्रगुणवर्णता । प्रकृष्टगुणवर्णता । मीलिते वस्तु वस्त्वन्तरेणाऽऽच्छादितं प्रतीयते । इह त्वनपह्नुतस्वरूपमेव वस्तु वस्त्वन्तरगुणोपरक्तं लक्ष्यत इति विवेकः । स्वगुणत्यागान्नापीदं सामान्यालंकारः ।

अतद्गुण इति । तस्याधिकगुणस्यास्मिन् गुणा न सन्तीत्यतद्गुणः ।

धवलोऽसीति ।

धवलोऽसि यद्यपि सुन्दर तथाऽपि मम त्वया रञ्जितं हृदयम् ।
रागभृतेऽपि हृदये सुभग निहितो मे न रक्तोऽसि ॥

धवलौ वृषभर्तारौ । रागौ रङ्गानुरागौ । अत्र पूर्वार्धे विरोधो नोक्त-

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुण। किं च तदित्यप्रकृतमस्येति च प्रकृतमत्र निर्दिश्यते। तेन यदप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम्। यथा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥५६६॥

**यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ १३८ ॥**
**तथैव यद्विधीयेत स व्याघात इति स्मृतः।**

येनोपायेन यदेकेनोपकल्पितम्, तस्यान्येन विजिगीषुतया तदुपायकमेव यदन्यथाकरणम्, स साधितवस्तुव्याहतिहेतुत्वात् व्याघातः।

उदाहरणम्—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ५६७ ॥

**सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ १३९ ॥**

एतेषां समनन्तरमेवोक्तस्वरूपाणामलंकाराणां यथासंभवमन्यो-

---

रार्धे। भिन्नाधारत्वेन रक्तारक्तयोः प्रतीतेः। पूर्वार्धे धवलस्य विरुद्धरागजनकत्वेन विषमालंकारोऽपि।

गाङ्गमिति। अत्र प्रकृतहंसस्याप्रकृतजलयोगेऽपि न तद्रूपतेत्यतद्गुणः।

दृशेति। अत्र दृग्रूपोपायेन येन हरः स्मरमधाक्षीत्तेनैव कान्तास्तमजीजिवन्। दाहस्य च जीवनीयत्वं विपक्षः। तेन निष्पादितवस्तुव्याहतिहेतुत्वाद्व्याघातता। विरूपाक्षस्येति वामलोचना इति च व्यतिरेकगर्भौ शब्दौ। जयिनीरिति व्यतिरेकोक्तिरित्यत्र व्यतिरेकनिमित्तता। दृग्रूपोपाययोर्भेदेऽप्यभेदादतिशयोक्तिरपि।

रसवदाद्यलंकाराः प्रागुक्ताः। आशीस्तु नालंकारः। प्रियोक्तिमात्रत्वात्। स्नेहात्मरत्याख्यभावत्वे भावध्वनित्वाद्वा।

यथासंभवमिति। न सर्वेषामेवालंकाराणाम्। किं तु केषांचित्। तत्रापि क्वचिद्द्वयोः क्वचित्त्रयाणामित्यादि। शब्दार्थोभयालंकारविषयत्वेन त्रिरूपत्वेऽपि संसृष्टेरेकरूपत्वमेव। मिथोनैरपेक्ष्यरूपस्वरूपस्यैकत्वात्। निरपेक्षतयेत्युक्त्या तिलतण्डुलन्यायेनालंकाराणां योगे संसृष्टिः।

न्यनिरपेक्षतया यदेकत्र शब्दभाग एव, अर्थविषय एव, उभयत्रापि वाऽवस्थानम्, सैकार्थसमवायस्वभावा संसृष्टिः ।

तत्र शब्दालंकारसंसृष्टिर्यथा—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ ५६८ ॥

अर्थालंकारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ५६९ ॥

पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालंकारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ।
तरुणाणहिअअलूडिं परिसप्पन्तीं णिवारेइ ॥ ५७० ॥

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे । संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

---

संकरस्तु स्वरूपेणैव नानात्वेनोक्तत्वात्त्रिधैव । तत्र नैरपेक्ष्याभावात्क्षीरनीरन्यायेनालंकाराणां योगः । कुसुमेति । अत्र यमकानुप्रासाविति विजातीयालंकारसंसृष्टिर्यथा तथा कलकलोलकलोल इति च सजातीययमकालंकारसंसृष्टिरपि । तथाविधे इति । मिथो निरपेक्षे । उपमोत्प्रेक्षे इति । उत्तरपूर्वार्धगे विजातीये । लिम्पतीवेति वर्षतीवेत्युत्प्रेक्षे सजातीये । तयोरत्र संसृष्टिः ।

सो णत्थीति ।

स नास्त्यत्र ग्रामे य एतत्सर्वतःप्रसरल्लावण्याम् ।
तरुणाना हृदयलुण्ठिं विलसन्तीं निवारयति ॥

महमहन्तेति लसल्लावण्याम् । परिसप्पन्तीं परिष्वष्कमाणां क्रीडन्तीमित्यर्थः । रूपकं चेति । हृदयलुण्ठिमेव हृदयलुण्ठिमिति रूपकम् । एकत्र वाक्य इति । शब्दालंकारव्यक्तिः । छन्दसीत्यर्थालंकारोन्मेषः ।

---

१—'स नास्त्यत्र ग्रामे एना महमहल्लावण्याम् ।
तरुणाना हृदयलुण्ठाकीं परिष्वष्कमाणां निवारयति ॥'

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ।

एते एव यदात्मन्यनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति, स एषां संकीर्यमाणस्वरूपत्वात् संकरः । उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥ ५७१ ॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः । यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः ।
परिप्रेङ्खत्तारापरिकरकपालाङ्किततले
शशी भस्मापाण्डु पितृवन इव व्योम्नि चरति ॥ ५७२ ॥

उपमा, रूपकम्, उत्प्रेक्षा, श्लेषश्चेति चत्वारोऽत्र पूर्ववदङ्गाङ्गितया प्रतीयन्ते । कलङ्क एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते । अस्य हि रूपकत्वे तिरोहितकलङ्करूपमक्षवलयमेव मुख्यतयाऽवगम्यते । तस्यैव च करग्र-

---

अत्र तद्गुणमिति । शोणं बिम्बोष्ठेति वाक्यगम् । भ्रान्तिमतेति । गुञ्जाफलानां स्रज इति प्रोक्तेन । तदाश्रयेणेति । भ्रान्तिमदाश्रयेणेति ।

जटेति । करौ रश्मिहस्तौ । वैराग्यं लौहित्याभावोऽपि । अत्र जटाभाभिरित्युपमा । वलय इति रूपकम् । व्यापत्तेरिवेत्युत्प्रेक्षा । वैराग्येति श्लेषः । कपालेति रूपकम् । तद्धेतुरङ्किततल इति समानो धर्मः पितृवन इवेत्युपमायाश्चमत्कृतिहेतुः । भस्मनेवाऽऽपाण्डुरित्युत्प्रेक्षा । अत्र श्लेषस्योपकारिण्युपमा । समुत्थापकत्वात् । श्लेषोऽपि रूपकोत्प्रेक्षयोरुपकारी । एतैः सर्वैरुपकृता सत्युपमा चमत्करोति । कलङ्काक्षेत्यत्र किमुपमया रूपकेण वा समासः स्यादित्याह—कलङ्क एवेति । श्लेषच्छाया-

हणयोग्यतायां सार्वत्रिकी प्रसिद्धिः । श्लेषच्छायया तु कलङ्कस्य करधारणमसदेव प्रत्यासत्त्योपचर्य योज्यते । शशाङ्केन केवलं कलङ्कस्य मूर्त्यैवोद्वहनात् । कलङ्कोऽक्षवलयमिवेति तूपमायां कलङ्कस्योत्कटतया प्रतिपत्तिः । न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ।

एवंरूपश्च संकरः शब्दालंकारयोरपि परिदृश्यते । यथा—

राजति तटीयमभिहत-
दानव-रासातिपाति-साराव-नदा ।
गजता च यूथमविरत-
दान-वरा साऽतिपाति सारा वनदा ॥ ५७३ ॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे ।

**एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ १४० ॥**

द्वयोर्बहूनां वाऽलंकाराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानम् , न चैकतरस्य परिग्रहे साधकम्, तदितरस्य

---

श्रयेण चन्द्रोऽपि करैः कलङ्कधार्येव । परं न मुख्यया वृत्त्येत्याह— श्लेषेति । चन्द्रबिम्बे कराः कलङ्कश्चेति प्रत्यासत्तिः । न चास्येति । कलङ्कस्य । मुख्येऽपीति । उपमापक्षे कलङ्के । उपचारस्यागतिकगतित्वान्नाङ्गीकारः ।

राजतीति । अभिहतो दानवानां रासः सिंहनादो येनेति शंभोरामन्त्रणम् । अतिपातिनो वेगगामिनः सारावा नदा यस्यां नद्यां सा तथा । सा च गजतातिपाति रक्षति । विशेषेण परित्रायते यूथम् । अविरतं दानेन वरा । सारा स्थिरा । वनं दयते वनदा । अवनं वा त्राणं ददात्यवनदा । शब्दवच्छब्दालंकारयोरत्राङ्गाङ्गिभावाभावान्नैरपेक्ष्ये संसृष्टिरेवेत्याह—परस्परेति । मिथो विवेकेन द्वयोरिह वृत्तेरभावात् । अपेक्षैव च परस्परमनुग्राह्यानुग्राहकभावः । अथवाऽसावनुग्राह्योऽसावनुग्राहक इति निर्णेतुमशक्यत्वे मिथः काऽपेक्षा शब्दालंकारयोरिति संसृष्टिरेवात्र युक्ता । यद्वा शब्दालंकारद्वयस्यैकवाचकगतत्वे तृतीयः संकरः ।

वा परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाभावरूपो द्वितीयः संकरः। समुच्चयेन संकरस्यैवाऽऽक्षेपात्।

उदाहरणम्—

जह गहिरो जह रअण्णणिब्भरो जह अ णिम्मलच्छाओ।
ता किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ ॥ ५७४ ॥

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः, किमब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेरियमप्रस्तुतप्रशंसेति संदेहः। यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति।
अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥ ५७५ ॥

अत्र च किं कामस्योद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाभिधानात्पर्यायोक्तम्, उत वदनस्येन्दुबिम्बतयाऽध्यवसानादतिशयोक्तिः, किं वैतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद्रूपकम्, अथवैतयोः समुच्चयविवक्षायां दीपकम्, अथवा तुल्ययोगिता, किमु प्रदोषसमये विशेषणसाम्यादाननस्यावगतौ समासोक्तिः, आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशंसेति बहूनां संदेहादयमेव संकरः।

यत्र तु न्यायदोषयोरन्यतरस्यावतारः, तत्रैकतरस्य निश्च-

---

समुच्चयेनेति। एकस्य चेत्यत्र चकारेण समुच्चयद्योतकेन।

जहेति। यथा गम्भीरो यथा रत्ननिर्भरो यथा निर्मलच्छायः।
तथा किं विधिना स सरसपानीयो जलनिधिर्न कृतः।

सरसेति सरसपानीयः सरसवाणीकश्च।

नयनेति। आशा आस्था अपि। तमो मोहोऽपि। एतयोरिति। वक्त्रबिम्बयोः। समुच्चयेति। बिम्बं मुखं चैतत्प्रसीदतीति भङ्ग्या। एकस्य प्रकृतत्वेऽन्यस्याप्रकृतत्वे दीपकम्। द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता। अयमेवेति। अनिश्चयात्मा।

---

१—'यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छाय.।
तथा किं विविधा एष सरसपानीयो जलनिधिर्न कृतः ॥'

यान्न संशयः । न्यायश्च साधकत्वमनुकूलता । दोषोऽपि बाधकत्वं प्रतिकूलता । तत्र

'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ।'

इत्यत्र मुख्यतयाऽवगम्यमाना हासद्युतिर्वक्त्र एवानुकूल्यं भजत इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ।'

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम् ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति । सदृशं प्रति परप्रेयसीप्रयुक्तस्याऽऽलिङ्गनस्यासंभवात् ।

आनन्दमन्थरपुरंदरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु नो विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५७६ ॥

इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलमसंभवादिति रूपकस्य

---

वक्त्रेति । अत्र वक्त्रं शशीवेत्युपमा न तु वक्त्रमेव शशीति रूपकमित्याह—मुख्यतयेति । हासद्युतिः प्रकृतत्वान्मुख्या । सा च वक्त्रानुगुणेत्युपमासाधिका । तस्या इति । हासद्युतेः । एतस्याश्च शुक्लतया चन्द्रेऽपि किंचिदानुकूल्यमस्तीत्यतो न बाधकत्वम् । वक्त्रेन्दाविति । अत्रापरत्वं रूपकस्य साधकतां प्रतिपद्यत इति योगः । अपरत्वमिति । वक्त्रस्य बहुत्वादपरत्वमविस्मयावहमिति नानुकूलम् । चन्द्रे त्वेकत्वाद्विस्मयावहत्वेनानुकूलमेव ।

साधकत्वेनोक्त्वा बाधकत्वेनाऽऽह—राजेति । राजैव नारायण इति रूपकसमासः । उपमानप्राधान्ये रूपकमुपमेयप्राधान्य उपमेति सर्वत्र ज्ञेयम् । सदृशमिति । राजानम् । प्रेयसी लक्ष्मीः । निजपतितुल्यमन्यं कान्ता नाऽऽलिङ्गतीत्यर्थः ।

पादाम्बुजमिति । अत्रोपमायां पादप्राधान्ये नूपुरध्वनियोगो घटते ।

बाधकम्, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते। विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः। एवमन्यत्रापि सुधीभिः परीक्ष्यम्।

**स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम्।**
**व्यवस्थितं च**

अभिन्ने एव पदे स्फुटतया यदुभावपि शब्दार्थालंकारौ व्यवस्थां समासादयतः, सोऽप्यपरः संकरः। उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
विस्तीर्णकर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि सचुकोच ॥ ५७७ ॥

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ।

**तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥**

तदयमनुग्राह्यानुग्राहकतया, संदेहेन, एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार एव संकरो व्याकृतः। प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, आनन्त्यात्तत्प्रभेदानामिति। प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहे-

---

रूपके त्वम्बुजस्य प्राधान्ये न घटते। विध्युपमर्दिन इति। यद्यपि मञ्जीरसिञ्जितं रूपकं प्रति बाधकं पादानुकूल्यादुपमां प्रति साधकं च स्यात्तथाऽपि बाधकत्वेनैव व्यपदेशः। प्रधानेन व्यपदेशा भवन्तीति न्यायात्। साधकत्वापेक्षया बलिष्ठत्वेनोत्कटतया प्रतीतेर्बाधकं प्रधानम्। तदपेक्षयेति। साधकत्वापेक्षया।

अत्रैकपदेति। यद्यप्येतदखिलवाक्यगं सावयवं रूपकं तथाऽपि प्रतिपदं रूपकभावात्तथा व्यपदेश इत्येकपदानुप्रवेशः। शब्दार्थवर्त्यलंकारसंकरस्तूद्भटोक्तः संसृष्टिरेवेति त्रिधैव। प्रकारान्तरेणेति। प्रकारत्रयादन्यप्रकारेण। सर्वेऽलंकाराः संकरे उदाहर्तुमशक्या इत्यर्थः। तत्प्रभेदानामिति। तस्य प्रभेदास्त्रयः प्रकाराः। तेषामपि भेदास्तदलंकारान्तरयोगाः।

तुत्वे कश्चिदलंकारः शब्दस्य कश्चिदर्थस्य, कश्चिच्चोभयस्येति चेत् । उक्तमत्र, यथा काव्ये दोषगुणालंकाराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः । निमित्तान्तरस्याभावात् । ततश्च योऽलंकारो यदीयान्वयव्यतिरेकावनुविधत्ते, स तदलंकारो व्यवस्थाप्यत इति । एवं च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाभावानुविधायितयोभयालंकारौ तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यमुत्कटतया प्रतिभासत इति वाच्यालंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः । योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायामन्वयव्यतिरेकावेव समाश्रयितव्यौ । तदाश्रयणमन्तरेण विशिष्टस्याऽऽश्रयाश्रयिभावस्याभावादित्यलंकाराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ।

एषां दोषा यथायोगं संभवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक्प्रतिपादिताः ॥ १४२ ॥

तथा हि—अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयोऽनर्थास्ते प्रसिद्धिविरुद्धतामपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति । तत्स्वभावत्वात् । क्रमेणोदाहरणम्—

---

भावाभावाविति । भावोऽन्वयः । अभावो व्यतिरेकः । प्रभृतयोऽपीति । प्रभृतिभणनादपह्नुतिसहोक्तिश्लेषसंकरसंसृष्टिदीपकाद्या ज्ञेयाः । अर्थस्येति । वस्तुतस्तु परम्परितरूपकादेरुभयालंकारतया भिन्नत्वेन वक्तुं युक्तावर्थालंकारेषु तत्पाठोऽर्थस्योत्कटतया वैचित्र्यात् । एवं पुनरुक्ताभासोऽपि शब्दस्योत्कटवैचित्र्याच्छब्दालंकारत्वेनोक्तः । नन्वाश्रयाश्रयिभावः शब्दार्थालंकारत्वे हेतुर्नान्वयव्यतिरेकावित्याह—योऽलंकार इति । विशिष्टस्येति । यत्राऽऽश्रयस्य नित्यता नास्ति । नित्यस्य हि नान्वयव्यतिरेकौ निबन्धनम् । नित्यस्य व्यतिरेकाभावात् । व्यतिरेकः । भेदः ।

एषामिति । अलंकाराणाम् । उक्तेष्विति । दोषेषु । अनर्था इति । दोषाः । प्रसिद्धीति । कदाचिच्चक्री हरिप्रियोऽपि स्यात् । अन्यानि तु न घटन्त एव ।

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्ता-
नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥५७८॥

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव प्रतिपादिता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लासिनि गच्छसि तत्किं त्वदीयं मे ॥ ५७८ ॥
अननुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ५८० ॥

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयत इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् ।

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ ५८१ ॥

अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यत इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—

भुजंगमस्येव मणिः सदम्भा ग्राहावकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ॥५८२॥

उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वमधिकता वा तादृश्यनुचितार्थत्वं दोषः । धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरत. । क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५८३ ॥
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८४ ॥

---

रमणेति । रमणं क्रीडा न प्रियः । अकारणमिति । अस्या अघटनात् ।

अकुण्ठेति । शृङ्गारे ह्युपनागरिका वृत्तिर्योग्या । भुजंगमस्येति । सदंशब्दो निपातश्छान्दसः सदार्थः । सदं भासते सदंभाः । सदम्भाः सज्जला । सदम्भाः खलाः ।

तादृशीति । जातिप्रमाणगता ।

चण्डालैरिति । अत्र जातिर्न्यूना । वह्नीति । अत्र प्रमाणम् ।

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८५ ॥
पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ ५८६ ॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५८७ ॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥५८८॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यत इत्यधिकपदत्वम् ।

लिङ्गवचनभेदोऽप्युपमानोपमेययोः साधारणं चेद्धर्ममन्यरूपं कुर्यात्तदैकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयत इति प्रक्रान्तस्यार्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा—

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ॥ ५८९ ॥

---

पातालमिति । पातः प्रवाहः । अत्र प्रमाणस्याऽऽधिक्यम् । अयं पद्मेत्यत्र तु जातेः ।

अन्यरूपमिति । उपमेयरूपमुपमानरूपं वा । तस्येति । धर्मिणः । प्रतीयमानेन । शब्दानुक्तेनोभयानुगमक्षमेण । शब्दोक्तसमानव्यतिरिक्तेन केनापीत्यर्थः । भग्नेति । उपमेयस्य विशेषणादिकमुपमाने चेन्न निर्व्यूढं तदा प्रक्रमभङ्गः ।

चिन्तेति । अत्र च्युतत्वादिको धर्म उपमानोपमेययोः प्रत्येकमन्यलिङ्गवचन इति प्रक्रमभङ्ग । लिङ्गवचनविपरिणामेन यद्यपरस्यापि संबन्धस्तदाऽभ्यासरूपवाक्यभेदे वाक्यद्वयी । तथा सति प्रकृतार्थप्रतीतिर्व्यवधीयते । विपरिणामश्च साहित्ये न स्यात् ।

सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ॥ ५९० ॥

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नाऽऽपद्यते, न तत्रैतद्दूषणावतारः । उभयथाऽप्यस्या-मुगमक्षमस्वभावत्वात् । यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥ ५९१ ॥

तद्वेषोऽसदृशोऽन्याभि· स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ५९२ ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्त· । यथा-

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ ५९३ ॥

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९४ ॥

अत्र लता विभ्राजते न तु विभ्राजसे इति सबोध्यमाननि-ष्ठस्य परभागस्यासंबोध्यमानविषयतया व्यत्यासात्पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ ५९५ ॥

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्तना-

---

अनर्घ्यैरिति । गुणरत्नानां पुंक्लीबानां विशेषणत्वेऽपि न स्वरूपभेदः ।

असदृश इति । टकिबन्तत्वे स्वन्तं जसन्त च । मधुरतया भृतो मधुरतां वा बिभर्तीति ।

न तथेति । कोविदप्रसिद्धप्रकारेण ।

प्रत्यग्रेति । मज्जने स्नानबुडने । ताभ्यां विशेषेण विविक्ता मूर्तिर्यस्याः सा तथा । अन्तःशब्दः स्वरूपे संबन्धे वा । लता त्वंशुभिः कान्ता । अर्चयन्ती पूजयन्ती शोभयन्ती च । अत्र राज्ञी संबोध्या न लता । परभागः । युष्मदर्थः ।

त्मनो विधेः। एवंजातीयकस्य चान्यस्यार्थस्योपमानगतस्यासंभवाद्विध्यादिभेदः।

ननु समानमुच्चरितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माभिसंबन्धान्न कश्चित्कालादिभेदोऽस्ति। यत्राप्युपात्तेनैव सामान्यधर्मेणोपमाऽवगम्यते, यथा—'युधिष्ठिर इवायं सत्यं वदतीति,—तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे। सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम्। रैपोषं पुष्णातीतिवद्युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेवैतत्। किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यं प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम्।

असादृश्यासंभवावप्युपमायामनुचितार्थतायामेव पर्यवस्यतः। यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्॥ ५९६॥

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम्।

---

विधेरिति। अप्रवृत्तप्रवृत्तिरूपस्य गङ्गायामसंभवादिति योगः। एवंजातीयकस्येति। निमन्त्रणादेः। गमिष्याम्युपहास्यतां वामन इवेत्यादाविव क्वचित्कालपुरुषविध्यादियोगेनापि दोषः स्यात्।

उच्चारितमिति। शब्दोक्तम्। प्रतीयमानमिति। अनुक्तमपि गम्यमित्यर्थः। यथा पद्ममिव मुखमित्यादौ भातीत्यादि गम्यधर्मान्तरेणोपमा। कालादिभेदवाचकात् काव्ये साक्षादुक्ताद्धर्मादन्यो धर्मो धर्मान्तरम्। प्रकृतेति। कालादिभेदवाची प्रकृतो धर्म आपेत्यादिः। सामान्यधर्मेणेति। कालादिभेदवाचिना। युधिष्ठिरो ह्यवदत्। अयं तु वदतीति कालभेदो व्यक्तः। सत्यवाद्ययमिति। युधिष्ठिर इव सत्यवादी सन्नसौ सत्यं वदतीति न कालभेदः। सत्यवादित्वधर्मं गम्यमादायात्रोपमाभिधाने न कालभेद इत्यर्थः।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥ ५९७॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि, संभावन ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि । केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् । तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा—

उन्नयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ ५९८ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वान्निरुपाख्यमख्यम्, तत्समर्थनाय यदर्थान्तरन्यासोपादानं तदालेख्यमिव गगनतलेऽत्यन्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः । यथा —

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरण प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥५९९॥

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

---

न संभवन्तीति । कथं तदुपमानी भविष्यन्तीति भावः ।

केवलस्येति । असमासस्थस्य । समासस्थस्तु योग्यताद्यर्थवादी स्यात् । तस्य चेति । साधर्म्यस्य । अस्यामिति । उत्प्रेक्षायाम् । तत्रेति । संभावनाभिधाने ।

मेचकोत्पल नीलोत्पलम् ।

अख्यमिति । निर्गताभिधानप्रत्ययं प्रतिभासमानस्यास्येत्युत्प्रेक्षणरूपस्य व्यर्थ एवेति उत्प्रेक्षामात्रमेव युक्तं न तत्समर्थकोऽर्थान्तरन्यासः । दिवाभीरुशब्दस्योलूकार्थत्वेन न समुचितोपमाव्याख्यायां नैतद्दोषावतारः ।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमप्युपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावादनुपादेयता यत्, तदपुष्टार्थत्वं पुनरुक्तता वा दोषः । यथा—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥ ६०० ॥

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिः, तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः, यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिनी ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥ ६०१ ॥

अप्रस्तुतप्रशंसायामप्युपमेयमनयैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम् । यथा—

---

तस्येति । उपमानविशेषस्य ।

स्पृशतीति । तापः खेदोऽपि । मानशब्दः परिमाणाभिमानयोः । चिरयायिदिनो दीर्घाहा निदाघः । सदृशेति । रवेः करैरिति सदृशमनुकूलं विशेषणम् । दिनश्रियास्तु तापयेति विशेषणम् । व्यक्तिर्लिङ्गम् । तद्विशेषः पुंस्त्वं स्त्रीत्वं च । नायकतयेति । नायकश्च नायिका चेत्येकशेषः ।

ननु यथा प्रियां स्पृशन्तं प्रियं दृष्ट्वाऽन्यस्य तापः स्यात्तथाऽर्के दिशः स्पृशति सति ग्रीष्मश्रियोऽपि ताप इति श्लेषोपमेयमिति दयितेति युक्तमित्याह—श्लेषेति । न तथेति । समासोक्तिप्रतीतिः । स्वयं चेति । न सुखेनाऽऽप्यत इत्यस्वापं दुर्लभं यत्फलं तल्लुब्धानामीहितप्रदा । स्वापस्य शयनफले विश्रान्तौ यो न लुब्धस्तत्र हितप्रदा । अत्र श्लेषोपमैव । संध्योपमानोपादानं विना समासोक्तिप्रतीतेरभावात् । रीत्येति । साधारणविशेषणरूपया ।

आहूतेषु विहंगमेषु मशको नाऽऽयान्पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६०२ ॥

अत्राचेतनस्य प्रभोरप्रस्तुत—विशिष्ट—सामान्यद्वारेणाऽभिव्यक्तेरुक्तमेव पुनः कथनम् ।

तदेतेऽलंकारदोषा यथासंभविनोऽन्येऽप्येवंजातीयकाः पूर्वोक्तयैव दोषजात्याऽन्तर्भाविता न पृथक्प्रतिपादनमर्हन्तीति ॥

संपूर्णमिदं काव्यलक्षणम् ।

---

मध्येवेति । तृणप्रायो मणिरप्रधानः काचादिः । न कम्पते । न बिभेति । अप्रस्तुतेति । अप्रस्तुतमचेतनत्वेन विशेषितं च यत्सामान्यं मशकादि तद्द्वारेण ।

अन्येऽपीति । यथा—

क्वचित्कालेऽपसरता क्वचिदाहत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ।

अत्रोपमायां शुनोपमानेन प्रकृतार्थकदर्थनेऽनुचितार्थता । क्वचिदिति सामान्येन निष्पाद्य पश्चात्कालेन योगः । अन्यथा तु निन्दानिषेधाश्चिन्त्यः । प्रोत्साहननिन्दादावनुचितार्थताऽपि न दोषः । यथा—

हनूमानिव प्रेषणे प्रेष्य एषः ।
वियोगे मारकः स्त्रीणां चण्डाल इव चन्द्रमाः ।

इत्यादौ ।

यस्यार्कसुभगा मूर्त्तिः सच्चक्रानन्ददायिनी ।

अत्रार्केण सह मूर्तेः साम्यं वाच्यं न सुभगत्वमात्रम् । सच्चक्रेति विशेषणवैयर्थ्यप्रसङ्गात् । न च तत्साम्यं तुल्यादिशब्दवत्सुभगशब्दो वक्तीत्युपमां प्रत्यवाचकत्वम् ।

राजा कुवलयोल्लासी पीयूषांशुरिवारुचत् ।

इत्यादौ राजशब्दस्योभयार्थत्वेन श्लेषनिष्पत्त्या स्वार्थसिद्धौ यदौपम्यकल्पनं तदधिकम् । औपम्य ह्यार्थमेव हृद्यम् । व्यङ्ग्यत्वात् ।

इत्येष मार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत्।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः॥ १॥

इति श्रीमम्मटभट्टविरचिते काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशम उल्लासः।

समाप्तश्चायं काव्यप्रकाशः।

---

न शाब्दम्। एवं—

दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव।

इत्यत्र राजेति श्लेषं हित्वा इन्दुः क्षीरनिधाविवेत्युपमा राजेन्दुरिति रूपकमुक्तम्। न चोपमा व्यङ्ग्यार्थाधिक्यवतोः श्लेषरूपकयोः समा स्यात्। व्यङ्ग्यार्थस्पर्शाभावात्। तस्मादत्रोपमाऽधिका। निर्मोकमुक्तिरिव गगनोरगस्येत्यादौ रूपकेणैव साम्यस्योक्तत्वादिवप्रयोगेऽधिकपदत्वं दोषः। तथा—

लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूढपर्यङ्किका।

इत्यत्रारविन्दस्य केनापि साम्ये सौधत्वेन रूपकमस्तु। वलभ्यादीनां तु न किंचिद्रूप्यमस्तीत्यधिकपदत्वम्। तथा—

या घर्मभासस्तनयाऽपि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः।
कृष्णाऽपि शुद्धेरधिकं विधातृभिर्विहन्तुमंहांसि जलैः पटीयसी॥

अत्र नद्याः पयोभिः परमार्थादैक्येऽपि शब्दार्पितनानात्वानुभवाद्विरोधस्य भिन्नाधारत्वम्। तच्चासंभवि। विरोधस्यैकाधारत्वेनोक्तत्वादित्यसंभवो दोषः। तरङ्गय दृशोऽङ्गणे पततु चित्रमिन्दीवरम्।( स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्। क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमाऽप्युदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः॥ विद्धशाल०३।२७) इत्यत्रोपमानभूतेन्दीवरादेरपकर्षद्वारेण नेत्रादीनां व्यतिरेको वक्तुं प्रक्रान्तः। स च भवतु च द्विचन्द्रं नभ इत्युक्त्या साम्यमात्रप्रतीतौ न निर्व्यूढ इति व्यतिरेके भग्नप्रक्रमत्वम्। भवतु तद्विचन्द्रं नभ इति तु युक्तम्। एवमपि नभोमुखयोर्नान्वयसंगतिः। अङ्गण उदञ्चय मनाग्मुखमित्युक्त्या मुखाश्रितमङ्गणं चन्द्राञ्चिताद्व्योम्नोऽधिकं तद्द्वारेण च चन्द्रान्मुखमधिकमिति तु युक्तम्।

इत्येष इति। एषोऽद्भुतोऽलंकाराध्वा। विभिन्नोऽपीति नानाग्रन्थगतत्वेन

पार्थक्येन स्थितोऽपि यदेकरूपो भाति तत्र संघटना विसंस्थुलस्य सुखबोधायैकत्र संग्रहणं हेतुः । ग्रन्थाः सर्वेऽप्यत्रान्तर्मग्ना इत्यर्थः ।

अथ चायं ग्रन्थोऽन्येनाऽऽरब्धोऽपरेण समापित इति द्विखण्डोऽपि संघटनावशादखण्डायते । सुघटं श्लक्ष्यसंधि स्यादित्यर्थः । श्रीभोजेन जैमिन्युक्तषट्प्रमाणानि संभवश्चालंकारतयोक्तानि । केषांचिदुक्तेष्वन्तर्भावात्केषांचिदचमत्कारकारित्वात्केषांचित्काव्यशरीरत्वाच्च तानि नात्र काव्यालंकारतया प्रतिपादितानीति ॥

अदृष्टदोषात्स्मृतिविभ्रमाच्च यदर्थहीनं लिखितं मयाऽत्र ।
तत्सर्वमार्यैः परिशोधनीयं प्रायेण मुह्यन्ति हि ये लिखन्ति ॥
शुभमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥

॥ इत्याचार्यश्रीमाणिक्यचन्द्रविरचिते काव्यप्रकाशसंकेते
दशमोल्लाससंकेतः समाप्तः ॥

# काव्यप्रकाशस्थविषयाणां वर्णानुक्रमेण सूचीपत्रम् ।

॥ श्रीः ॥

# काव्यप्रकाशे संकेते च निर्दिष्टानां श्रुतिसूत्र-श्लोकादीनां वर्णानुक्रमेण सूचीपत्रम् ।

श्लो० अ० पृष्ठ । श्लो० अ० पृष्ठ ।

**सा.**